# सूर्योदयः।

त्रयोदशे वर्षे | आषाढ़-श्रावण-भाद्राश्विन-कार्त्तिक-पूर्णिमाः १९९३ | १-५-संख्याः

## सम्पादकीया अभिप्रायाः।



### अस्माकं त्रयोदशं वर्षम्।

द्वादश वर्षाणि यावद् यथासमयं यथाशक्ति सुरसरस्वत्याः, सनातनधर्मस्य च रक्षणार्थं संस्कृत-विदुषां गौरववर्द्धनार्थं संस्कृतविद्यार्थि-समुदाये नवजीवन-संचार-करणार्थञ्च सर्वदैव प्रयतमानस्यास्य 'सूर्योदयस्य' भगवतो विश्वनाथस्य परमेणानुग्रहेण द्वादश वर्षाणि व्यतीतानि। साम्प्रतं त्रयोदशे वर्षे सूर्योदयः स्वीयं पदमादधातीति परमहर्षोस्पदमस्माकम्।

अस्मिन् शुभावसरे—ग्राहकानुग्राहकेभ्यो लेखकेभ्यः संरक्षकेभ्यश्च शतशो धन्यवादा दीयन्ते। येषामनुकम्पाबलेन एतावन्तं कालं सूर्योदयोऽयमविच्छिन्नं संस्कृतसरस्वत्याः समाराधनं विदधत् संस्कृत-पत्रेषु स्वीयं समुन्नतं स्थानमासादयति।

वर्तमानेऽस्मिन् समये संस्कृतपत्राणां संचालनं प्रकाशनं कीदृशं कठिनं विद्यते इति तन्मर्म्मज्ञा विद्वांसो जानन्त्येव। तत्रापि 'सूर्योदय'-समक्षे बहवः प्रत्यूहाः समागताः, यैरन्तरा अन्तरा एतत्प्रकाशने यथाभिलषितसौष्ठवादि-सम्पादनेऽपि महती बाधा समुत्पादिता। तथापि 'श्रेयांसि बहुविघ्नानि' इति प्राचीनोक्तिं समालम्ब्य आशान्विताः सन्तो वयं स्वकर्तव्यपालने बद्धादराः स्मः।

सम्प्रति द्विगुणोत्साहाः सूर्योदयसम्पादनबद्धपरिकराः सुललितैः लेखकवृन्दैः पाठकान् प्रमोदयितुं पारयिष्यामो यदि यथापूर्वं लेखकमहोदया भावपूर्णैः वर्त्तमानदशोपयोगिभिर्लेखैः अस्माननुग्रहीष्यन्ति।

अद्यत्वे भारतीया जनता विस्मृतस्वकर्तव्या विहापितर्षिजनवाक्य-विश्वासा विपथमेव सुपथं मन्यमाना अकर्तव्यमेव कर्तव्यमवगच्छति । यां देवभाषेति मत्वा प्राक्तना राजानो महाराजाः समादृतवन्तः, यत्र चानादिकालात् सर्वमपि भारतीयमितिवृत्तं निबद्धं विद्यते, राजधर्मः समाजधर्मो व्यवहारधर्म आचारधर्मः किं बहुना मानवं सर्वमपि कर्तव्यजातं यत्र निबद्धमुपलभ्यते, महाविज्ञानराशि श्चतुर्धा विभक्तो वेद ऋग्यजुःसामाथर्वात्मना यस्यामेवोपलभ्यते, रामायण-महाभारतनामकं दिव्यभारतीयसंस्कृतिसंसूचकं ग्रन्थरत्नं यस्यामेव विद्यते, यत्र कौटिल्यमर्थशास्त्रं मानवं धर्मशास्त्रं भार्गवं बार्हस्पत्यञ्च राजशास्त्रं विद्यते, यस्यां भासकालिदासभवभूतिश्रीहर्षमाघभारवि-बाण-सुबन्धुप्रभृतयो महाकवयो नाटकादिदृश्यश्रव्यगद्यपद्यकाव्यप्रणेतारो विद्यन्ते । यस्यां सोमदेवदण्डिशङ्कराचार्य्य जगन्नाथाप्पय्यदीक्षितप्रभृतीनां निबन्धाः सन्ति, यस्यां कणादकपिलगौतमपतञ्जलिजैमिनिभरद्वा-जाङ्गिरोव्यासादीनां दर्शनसूत्राणि सन्ति, किमधिकं निवेदयामो यत्र च—

"अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः
धर्मशास्त्रं पुराणानि विद्याश्चैताश्चतुर्दश"

तस्या एव संस्कृतभाषायाः सम्प्रति कियाननादरो दृश्यते, सम्प्रति कीदृशी चावस्था विद्यते इति विद्वद्भिः विचारणीयम् । यस्या व्यक्तीकरणे लेखनी नैव प्रभवति ।

संस्कृतविदुषां छात्राणाञ्चेदानीं शोचनीयावस्था विद्यते । नास्ति तेषां काचन सुसंघटिता सभा । पठनवेलायां च ते केवलं पुस्तकमात्राध्ययनपरा भवन्ति । लोकवृत्तं व्यवहारवृत्तं ज्ञातुं नाध्यवस्यन्ति । यद्यपि दिनचर्य्या-ध्याये श्रीमता वाग्भटेनाभिहितम्—

"आचार्य्यः सर्वचेष्टासु लोक एव हि धीमतः ।
अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ॥" इति

परन्तु पठनकालेऽनधीत-लोकव्यवहाराः संस्कृतज्ञा श्छात्रा अध्यापन-काले कथमेकपदे लोकवृत्तं ज्ञातुं प्रभविष्यन्तीति भूयो भूयो वयं सर्वथाताननुरुन्ध्महे संस्कृत-वाङ्मयसमाचार-पत्रादि पुराणेतिहासादिकं च पठि-तुम् । तच्चानायासमेव साम्प्रतं संस्कृतपत्रैः सम्पादयितुं पार्य्यते ।

अद्य पुनरपि स्वीयनूतनवर्षारम्भे प्रतिपाठकमेकां ग्राहकसंख्यां सम्वर्द्धयितुं सम्प्रार्थ्य विस्तराद् विरमन्तोऽन्तर्य्यामिणं बद्धाञ्जलि प्रार्थयामहे यदस्मदीय-मुत्साहं संवर्द्धयन्सकलमप्यन्तरायं सर्वथा विलोपयन्निमं सूर्य्योदयं क्रमशः पाक्षिकं साप्ताहिकं दैनिकं कुर्य्यादिति ।

× × × ×

## तर्कचूडामणीनामवसानम् ।

अहो विधातु र्वैषम्यम् !

"सृजति तावदशेषगुणाकरम् पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह ! कष्टमपण्डितता विधेः ।"



व्यतीते आश्विने मासि अष्टासप्ततितमे वयसि नश्वरं शरीरं वाराणस्यां विहाय महामहोपाध्यायाः पण्डितान्नदाचरणतर्कचूडामणिमहोदयाः शिवलोकं प्रस्थिताः । इमे हि वैदुष्यस्य कर्मयोगस्य सदाचारस्याध्यात्मविद्यायाश्च प्रत्यक्षनिदर्शनान्यभूवन्निति तैः सह सङ्गन्तुं येषामवसरो मिलित आसीत्ते हि जानन्ति ।

एवम्भूता विद्वांसो विरला एव भवन्ति । ये हि सर्वाङ्गीणमभ्युदयं सम्पाद्य परलोकं प्रतिष्ठन्ते ।

"अत्यन्त-गुण-मेधावी चतुर्णामेव भाजनम् ।
अल्पायुरनपत्यो वा दरिद्रो वा रुजान्वितः ॥"

इति वाक्यस्य ते सर्वथा वैपरित्यमेवाचरितवन्तः । अत्यन्तगुणमेधाविनोऽपि इमे दीर्घजीविनः पुत्रपौत्रादिसम्पत्तिशालिनश्चासन् । गार्हस्थ्योचितकर्मसाधनार्ह-पर्य्याप्तवित्तपरिपूर्णा नीरुजो योगानुष्ठानक्षपितमानसमलाः, अग्निहोत्रकृत्येन देवान्, आतिथ्येन मानवान्, विविधग्रन्थनिर्माणेन चार्षिसङ्घान् सन्तर्पयन्त ऋणानि त्रीण्यपाकुर्वन्तोऽवसाने मोक्षपदमधिगवन्त इति अविस्मरणीयवैभवानामेवंभूतानामेव जीवनं सफलं भवति । प्रातःस्मरणीयानाम् अचिन्त्यचरित्रवैभवानाम् विद्वद् वराणामग्निहोत्रिणां कैवल्यभाजां महामहावैदुष्यजुषान्तेषां परिवारवर्गैः सह समवेदनां प्रकाशयन्तश्च तेषां स्मृतौ इमानि कतिपयाक्षरपुष्पाणि गृह्णन्तः श्रद्धाञ्जलि स्वरूपाणि समर्पयन्तो वयमपि तदीयविरहशोकाब्धिं सन्तर्तुमभिलषाम इति ।

× × × ×

# एकस्य धर्मात्मनो दानम् ।

स्वर्गीयाः श्री पं० वनवारी लालजीनागर-स्वपोष्टमास्टरमहोदयाः (ग्रा० सिलाना पो० झज्झर जि० रोहतक) नितरामुदाराशया धर्मानुरागिणश्चाऽऽसन् । इमे श्रीभारतधर्ममहामण्डलतः प्रकाशमानस्य सूर्योदयनाम्नः संस्कृतमासिकपत्रस्य चिरकालं यावत् ग्राहका लेखकाश्चाऽऽभूवन् । अन्ततः १९३१ ईशवीये दिसम्बरमासस्य ३० दिने दिवङ्गतेषु तेषु, ३७ ईशवीये नवम्बरस्य १८ दिने पिण्डदानार्थं गयां गच्छन्तौ स्वर्गीय पण्डितमहोदयानां ज्येष्ठभ्राता श्री प० रामरक्षपालजी नागरमहोदयः, तदात्मजः श्रीदत्तजीनागरश्च भारतधर्ममहामण्डले समागतवन्तौ । आभ्यां स्वर्गीय पण्डितमहोदयस्येच्छाऽनुगत धार्मिक-कार्य-सहायतार्थं १००) शतरूप्यकाणि दत्तानि ।

वयं दातृमहोदयेभ्यस्तत्परिवाराय च सहस्रशो हार्दिकान् धन्यवादान् व्याहरामः । आशास्महे च यदन्येऽपि सनातनधर्माऽनुयायिनः सज्जना एतत्पुण्यकार्यमनुकरिष्यन्तीति ।

× × × ×

# कलङ्कमोचनं नाटकम् ।

एतन्नामकं नाटकं त्यक्तमहामहोपाध्यायपदवीकैः सर्वदर्शनाचार्यैः श्रद्धेय—पण्डितप्रवरश्रीपञ्चाननतर्करत्नभट्टाचार्यमहाशयैः विरचितं परम-मनोहरं पाठकानां मनोविनोदाय संस्कृतप्रणयिजनानामुपकाराय च मयाऽस्मिन्नेवाङ्के प्रकाश्यते । इतः पूर्वमपि 'सूर्योदये' अनेके कर्ममीमांसा-पुराण-रहस्य-संन्यासधर्मपद्धति-नामकग्रन्थाः प्रकाशिताः । परमार्हस्यास्यापि नाटकग्रन्थस्य मनोहरत्वं प्रेयस्त्वञ्च भविष्यति इति सुदृढोऽस्ति मे विश्वासः। सूर्योदयेन सममेकस्य अप्रकाशिताद्भुतग्रन्थस्यापि प्राप्तिरेतत्पत्रपाठकानां भवतीति न विस्मरणीयम् । आशास्यते सप्तभिरङ्कैः ग्रन्थस्यास्य समाप्तिः शीघ्रं स्यादिति ।

( स० सम्पादकः )

× × × ×

श्रीमतो व्याख्यानवाचस्पते र्दीनदयालुशर्म्मणो महाप्रयाणे—

## विदुषां शोकोच्छ्वासः ।

[ ले० विद्याकलानिधिः श्रीअमीरचन्द्र साहित्याचार्य्यः ]

श्रवणे श्रवणे सुधाकिरां किल "वाचस्पति" कीर्तिसद्गिराम् ।
विषमं विषमस्रसाऽऽहितं कटु काकोदरसोदरेण हा ! ॥ १ ॥
अहहा ! नतराजमण्डलः सुमनोमोदकरस्तमोहरः ।
सततर्षिकुलाभिनन्दितोऽस्तमितो दीनदयालुभास्करः ॥ २ ॥
अथवा दुरितै र्दुरात्मनां स्फुटितो भारतभाग्यभूधरः ।
भवतः परमार्थशालिना मुदयास्तौ हि जगत्कृतोद्भवौ ॥ ३ ॥
अधुना मधुनाऽपि संस्तुतं परमस्नेहयुतं कुतो वचः ।
जगदारसयद्यदादरादमृतत्वाय सदा सुखाय च ॥ ४ ॥
स्थिरता श्रुतिनिष्ठविप्रता धृतिमत्ता स्पृहणीयवक्तृता ।
मृदुताऽतिविचारशीलता सममप्येकपदे लयं गतम् ॥ ५ ॥
अपराध-परम्परा परा अपरागं जनयन्ति मानवाः ।
परमीश्वरधर्मरक्षक ! स्मर धर्म्मेण किमाश्रितं तथा ॥ ६ ॥
विरुदं विरुदन्नयं जनस्तव गायन्नपि शान्तिमेष्यति ।
परमं परमंतराकुलं कलयेत्कं नु मतं पुरातनम् ॥ ७ ॥
न सनातनधर्म ! धारयेरधुना धैर्यमये मनागपि ।
नहि वाञ्छसि चेच्चिराश्रयां भुवने कर्तुमहो कृतघ्नताम् ॥ ८ ॥

भरताग्रजकृष्णशङ्करै, विरहाणां सहनेऽसि शिक्षितः ।
परमाश्रयबाधने कथं क्षणमेकं तव जीवनं वरम् ॥ ६ ॥
अथवा विजयस्व खिद्य मां सुचिरं जीवसखे! सुखं वसन् ।
हरताद्विरहस्य वेदनां जगतामाकुलभावमर्जताम् ॥ १० ॥
भुवने तमसाऽऽविलीकृते हृदये शोकजवैः खिलीकृते ।
सहसा पतिनेन हारितं पविना हन्त ! न तद्विदारितम् ॥ ११ ॥
जय पण्डितवर्य ! शाश्वतं तव कीर्ति र्भुवनेषु राजताम् ।
अधिगत्य निरन्तरां धृतिं जगती जीवतु सन्ततं यया ॥ १२ ॥

---

श्रीमतो व्याख्यानवाचस्पते र्दीनदयालु शर्मणो महाप्रयाणे

# विदुषां शोकोच्छ्वासः ।

(ले०—आयुर्वेदाचार्य हरिनन्दनः स्वामी, संस्कृतपाठशाला, पिलाणी)

क्षणेन क्षिण्वते रम्यं वाष्पोदयबलीयसे ।
भूकम्पाय कृतान्ताय दूरादुच्चद्विषे नमः ॥ १ ॥
तीर्थस्नानमपास्तमन्तमर्पितं दानं शुभे कर्मणि
विद्यारम्भसमाश्रयस्य च महान् विष्कम्भ एवोत्थितः ।
मन्त्रस्त्रस्त इवाहुताश्च न गृहा निष्ठां प्रतिष्ठा गता
इष्टं नष्टमितेऽस्तमद्य जगतां हा हन्त ! वाचस्पतौ ॥ २ ॥
(गुर्वस्ते कानिचित्कर्माणि निषिद्धानि तत्साम्येनोक्तिः)।
यस्मिन्गर्जति धर्मवत्परिषदः सन्मञ्चपञ्चानने
प्रागासन्नकुतोभया विवरणे नाचारसाराध्वनाम् ।
तस्मिन्नेकपदेऽधुना द्युशिखराण्यारूढवत्याहते
श्रीमद्दीनदयालुशर्मणि धृतिं हा ! कुत्र बध्नन्तु ताः ॥ ३ ॥
आहूतः सुरसत्तमैः स परमं व्योमाधिरूढो भवान्
भूयोभावमितासि भव्यमधिकं तत्रोपदेशैर्गुरो ।
लोकेऽस्मिन्नपि दुर्वियोगविधुरा निःस्वं यथा स्वं जनं
क्रोशन्तं कुशलाकृतिं धृतिमनुक्रोशेन संप्रापयेत् ॥ ४ ॥

इत्थं स्थितोऽपि सुरपर्वणि दूरदृश्वा
पीयूषवर्षमिव भारतवर्षशार्षे ।
अच्छां प्रयच्छतु दयाद्रशमीदृशीं या
धर्मं धनं च निरपायभयं निधेयात् ॥ ५ ॥

# केचन नूतन-समाचाराः ।

## चीन-जापानयोर्युद्धम् ।

चीन-जापानयोर्युद्धं तत्रत्यपरिस्थितेर्भयङ्करता च न कस्यापि समाचार-पत्रपाठकस्याऽविदिते वर्तते । शनैः शनैः जापानदेशायाश्चीनमधिकुर्वाणा एव वर्तन्ते । अनुमानतोऽद्यावधि अष्ट लक्षमितानां चीननागरिकाणां संहारो जातः । तथापि चीनदेशीय-सेना सप्ततिक्रोशार्द्धं पङ्क्तिरूपेण युद्धार्थं स्थिता वर्तते । जापानसैनिका अपि सम्भवतः सार्द्धलक्षद्वयसंख्यका रणक्षेत्रे विराजन्ते ।

# राष्ट्रिय महासभाया हरिपुराधिवेशनम्

अखिलभारतीय-महासभाया ( कांग्रेस ) हरिपुराधिवेशनमागामिनो फरवरीमासस्य १९, २०, २१, दिनेषु सम्पत्स्यते । तत्रत्यमुद्रणकार्यार्थमष्ट-सहस्ररूप्यकैर्नवीनं मुद्रणयन्त्रं क्रीतं वर्तते । नेतृणां प्रतिनिधीनाञ्च कृते ४५ सहस्ररूप्यकैः खाद्य-पदार्थानां प्रबन्धो विहितोऽस्ति ।

× × × ×

## संस्कृत-साहित्य-सम्मेलनम्, (अमृतसर,)

अखिल भारतवर्षीय संस्कृतसाहित्यसम्मेलनस्यैकादशमधिवेशनं दिसम्बरमासे पञ्चनदप्रान्तस्य सुप्रसिद्धे "अमृतसर" नगरे भविष्यतीति संस्कृत भाषा विदां महान् प्रमोदावसरः । अधिवेशनेऽस्मिन् संस्कृतभाषायाः शिक्षा क्रमः संस्कृतभाषाया नव-साहित्यम्, भारतीयनवशिक्षाविधाने संस्कृतभाषायाः स्थानम्, प्राच्य प्रतीच्य-सुरभाषापठन पाठनप्रणाली चेत्यादिषु संस्कृत-साहित्य-समुन्नति-साधनेषु महत्त्वपूर्ण-विषयेषु विचारः कारिष्यते । विद्वांसः संस्कृतभाषानुशीलनोन्नत्यै स्वस्वपरामर्शप्रेषणद्वारा सम्मेलनमनुगृह्णीयुरित्यपि प्रार्थितं वर्तते । सम्मेलन सम्बन्धे किञ्चिन्निवेदयितुमीहया "श्री प्रो०अर्जुननाथ एम०ए० वाइसप्रिन्सिपल, हिंदू महासभाकालेज, अमृतसर" इति सङ्केतेन पत्रव्यवहारो विधेयः ॥ इति ॥

संस्कृतभाषा कथं व्यवहारिकी भवेत् ? इति विषयमवलम्ब्य चिरकालात् चर्चा श्रूयते संस्कृतविद्वत्समाजे । सम्मेलनस्यापि प्रारम्भतः अयमेव प्रधान-विषयः । परमद्यावधि न कोऽपि तादृशः सरलः पन्था निर्धारितो येन स्वल्पायासेन सर्वैरेव संस्कृताध्ययनं कर्तुं पार्येत । आशास्महे सम्मेलनेऽस्मिन्सम्मिलिता महीयांसो विद्वांसः सभ्या विचार्य संस्कृतप्रचाराय कमपि सरलं मार्गं निर्धारयिष्यन्तीति । अस्मन्मते तु अयमप्येको विचारणीय विषयो वर्तते यत्साम्प्रतं प्रचलितानां-बीड़ी सिग्रेट, आलमारी, कोट, पतलून, लिफाफा,

तारीख, प्रभृतीनां शब्दानां व्यवहार एभिरेव शब्दैर्विधेयो नूतनैर्वा निर्मित-संस्कृतशब्दैः ?

× × × ×

## संस्कृत-भाषण-व्रतम् ।

अहर्निशं संस्कृत-ग्रन्थानामध्ययने विधीयमानेऽपि विद्यार्थिनां संस्कृत-भाषणावसरे कियत्काठिन्यमापतति ! इति प्रायेण संस्कृतविदो जानन्ति। यस्या भाषाया द्वादशवर्षपर्यन्तमध्ययनं विधीयते साप्यन्ततो भाषितुं नशक्यत इति वस्तुतो महान् विषादविषयः । अद्यावधि संस्कृत-च्छात्राणां शिरसि महान्खल्वेष कलङ्क-कालिमाऽऽसीत् । पर, प्रमोदस्येयं वार्ता यदिदानीं न्यूनतामिमां दूरीकर्तुकामाः केषाञ्चनविद्यालयानां विद्यार्थिबन्धवः संस्कृतभाषणस्य व्रतं विधाय समाजमुन्नेतुमीहन्ते। सांप्रतमेव पण्डितपत्रेऽयं समाचारो मुद्रितोऽवलोकितो यत् बलिया-मण्डलस्थ चन्दाडीहग्रामे स्थितायाः पाठशालाया माननीयैर्विद्यार्थिभिः संस्कृत भाषणस्य व्रतं विहितम् । प्रार्थयामहे, आशास्महे च यदन्य-विद्यालयानामपि विद्यार्थिनः संस्कृतभाषणस्य व्रतं विधायाऽऽत्मनः संस्कृतभाषानुशीलनस्य च समुन्नतिं करिष्यन्तीति ।

× × × ×

अ० भा० वर्णाश्रम स्वराज्य सङ्घस्य महाधिवेशनं मद्रासे दिसम्बर मासस्य २९, ३०, ३१, दिनेषु भविष्यति । तस्मिन्नेवाऽवसरेऽखिल भारतीयविद्वत्परिषदोऽप्यधिवेशनं निश्चितमस्ति। अधिवेशनद्वयस्यास्य कृते महान् समुद्योगो विधीयते । परिषत्सम्बन्धे पत्रव्यवहारः श्री टी० एस० रामस्वामी अय्यर, ललिता सदन, रायपेटा, मद्रास, इति सङ्केतेन विधेयः । अस्यां परिषदि प्रचार्य्यमाणेषु विवादपूर्ण-धार्मिकविषयेषु सनातनधर्मावलम्बिभिः पण्डित-प्रकाण्डैस्तावको विचारो विधास्यते ।

श्री वासुदेवद्विवेदी "विनीत" साहित्याचार्यः काशी )

## श्रीनारायण पञ्चाङ्गम् मू० ।)

सम्वत् १९९५ शाके १८६०

श्री पं० कैलासपति शर्मणा विरचितम् पञ्चाङ्गमिदं मकरन्दरीत्या निर्मितं विद्यते। अत्र तिथि-नक्षत्रादीनां मानं शुद्धं विद्यते । धार्मिकव्रतोत्सवादीनां निर्देशः प्रामाणिको धर्मशास्त्र पद्धत्या निर्णीतः प्रकाश्यते। अवश्य ज्ञातव्य विषयाणां सन्निवेशोऽपि साधुरीत्या मुद्रितो विद्यते। येन ग्रामीणानामपि ज्ञानमनायासेनैव भवितुमर्हति । मूल्यमपि पञ्चांगान्तरापेक्षयाऽल्पमेवास्ति । श्रीकाशिपण्डित-सभयाः सदस्यैरनुगृहीतम् इदमेव पञ्चाङ्गं स्वनियमावल्यां स्वकीयपञ्चाङ्गत्वेन प्रकाशितम् विद्यते—श्रीधर्मनाथशास्त्री त्रिपाठी । ( आयुर्वेदाचार्यः )

# वेदपुराणयोरेकवाक्यता ।

निबन्धा—पण्डित दीनानाथशर्मा शास्त्री सारस्वतः, मुलतानस्थ—
सनातनधर्म सं० कालेजाध्यापकः ।

( क्रमागता )

१८ परमात्मनस्तस्करता, जारत्वमसत्यवादित्वं नग्नत्वदर्शनञ्च । श्रीकृष्णस्य तस्करताम्, जारत्वम्, असत्यवादित्वं, नग्नत्वदर्शनञ्चाऽभिलक्ष्य वादिन आक्षिपन्ति; तत्परमात्मत्वे च संशेरते; अत्र वेदमन्त्रा उपस्थाप्यन्ते—'स्तेनानां पतये नमोनमः' यजुः १६।२० इति परमात्मनः स्तेनपतित्वम् अर्थान्महाचौरत्वं प्रदर्शितम् । 'नमो वञ्चते परिवञ्चते.. ..तस्कराणां पतये नमो नमः' यजुः १६।२१ अस्याऽपि पूर्वोक्ताशयः । 'मा नः प्रिया भोजनानि प्रमोषीः' ऋ० १।१०४।८ अस्याऽर्थे स्वा० दयानन्देन 'आर्य्या' भिविनये, ईश्वरः स्वप्रियभोजनानां चोरणनिषेधं प्रार्थितः; तेन प्रतीयते—तन्मतेऽपि परमात्मनि चौर्य्यप्रकृतिर्व्वर्त्तते; तदैव तु चोरणनिषेध्र कृतः; तर्हि कृष्णपरमात्मनस्तथात्वे काऽवैदिकता ? गोपा अपि तेन सह नवनीतं चोरयन्ति स्म, अत एव स तस्कराणां पतिरपि सिद्धः । न च 'मा नः 'प्रिया भोजनानि प्रमोषी' रिति प्रार्थनायामपि स कथं गोपिकानां नवनीतं मुष्णाति स्मेति वाच्यम्; एतस्यां प्रार्थनायान्तु स न मुष्णाति; परं गोपिकानान्तु अयं हार्दिकाऽभिसन्धिर्बभूव, यत्-सोऽस्मद्-भवनान्नवनीतमुत्थापयेत्—तर्हि स तदभिसन्धिपूर्त्तिं कृत्वा 'तस्कराणां पतित्वं' ( वेदप्रोक्तं ) पुष्णन्नासीत्; तर्हि कोऽपराधस्तस्य शैशवाऽवस्थाकस्य श्रीकृष्णस्य । स स्वभक्तानां पापमपि चोरयति तत् प्रार्थनया; अत एव तस्मिंश्चौर्य्यं सिद्धम् । तेनैव 'स्तेयं दुष्कृतं वृजिनं सत्यं . . . शरीरमनु प्राविशन् । अ० ११।१० ( ८ ) । २० अयं मन्त्रः संगच्छते ।

'स्वसुर्जारः शृणोतु नः, ऋ० ६।५५।५। × 'जारमिन्द्रम्' ऋ० १०।४२।२ इति तस्य जारत्वम् । योऽत्राऽर्थः; तत्राऽपि स एव ।

'अहं सत्यमनृतं यद् वदामि' अ० ६।६१।२ अत्र परमात्मनोऽनृतवदनमपि निर्द्दिष्टम्, नचेदं मनुष्यवर्णितम्, 'अहं विवेचन पृथिवीमुतद्याम्, इत्याद्यस्मिन्नेव

× पतिजारयोर्भेदो भवति; अतएव 'पतिर्भूत्वा जारो भूत्वा' अ० २०।९१।१५ इति पार्थक्येन ग्रहणम् । अयं भेद एतदर्थमत्रोल्लिखितो यद्—भूमिकायामस्माभिः 'गच्छन् जारो न योषितम्' ऋ० ९।३८।४ इत्यादयो 'जार' शब्दवन्तो मन्त्राः संकलिताः; तत्र जारशब्दस्य पर्य्यायार्थं कर्तुं वादी न शक्नुयादिति ।

मन्त्रे प्रोक्तं कर्म्म परमात्मना साध्यं नतु मनुष्येण, नचाऽयं मन्त्रो वादिनां नये मनुष्यनिर्म्मितो यत्ते—'अहम्' इत्यनेन 'मनुष्यः' इति गृह्णीयुः ।

यदपि स वस्त्रापहारे गोपीनां नग्नत्वमपश्यद्—एतदपि यत्किञ्चित् । निराकारोऽपीश्वरः सर्व्वेषां नग्नत्वं पश्यतीत्यनीश्वरः स्यात्, अपितु भूयिष्ठदोषभागी भवेत्सः, पशुपक्षिकीटपतंगमनुष्यप्रभृतीनां बहूनामनारतं प्रजननेन्द्रियदर्शनात्तदन्तः प्रविष्टत्वाच्च । वस्त्राऽपहरणमपि तासां शिक्षाऽर्थं यत्—ता नग्नाजले न स्नान्तु, अतएवोक्तं—'यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम्' भाग० १०।२२।१९ जले च वरुणदेवसत्ता वेदे प्रोक्ता, यथा—'यासां राजा वरुणो यातिमध्ये सत्याऽनृते अवपश्यञ्जनानाम्' ऋ० ७।४९।३ इति, तेन तत्र नग्नस्नानं देवहेलनम्, यासाम्—अपां, यतोऽत्राऽऽपो देवताः । 'नन्दव्रजकुमारिकाः' भाग० १०।२२।१ अत्र 'कुमारिका' शब्दः, यासां वस्त्राऽपहारो जातः, तट्टीकायां सुबोधिन्याञ्च तत्पर्य्यायः—कन्यका इति. अनेन तासां सप्ताष्टवर्षीयत्वम्, कृष्णस्य चाऽपि तदा सप्तवर्षदेशीयत्वम्, तेन तत्र न कोऽपि दोषः ।

## १९ मूर्तिपूजा ।

'शिला भूमिरश्मा पांसुः सा भूमिः......तस्यै......पृथिव्या अकरन्नमः' अ० १२।१।२६ इति वेदे पृथिवीनमस्कारः, पृथिवी च—'अश्मा पांसु सा भूमिः' इति, तेन अश्मनेऽपि नमस्कारः सिद्धः—इयमेव मूर्तिपूजा नाम । 'वन्दे दारुम्' ऋ० ७।६।१ अत्र काष्ठनमस्कृतिः । 'नमोऽस्तु दैवाय प्रस्तराय' अ० १६।२।६ इति देवमूर्त्तेः प्रस्तरस्य पूजा × । 'प्राणो ह्यवा सर्व्वस्येश्वरो यच्च प्राणिति यच्च न' अ० ११।४।१० अनेन प्रस्तरेऽपि प्राणशक्तिः सिद्ध्यति । 'पातु ग्रावा' अ० ६।३।२ इति प्रस्तराद् रक्षणप्रार्थना । 'महिमा ते पृथिव्याम्' अ० ६।८१।३ इत्यग्न्यात्मकपरमात्मनः पृथिव्यामपि महिमवशात्, सर्व्वपृथिव्याः पूजनेऽशक्तिकारणात्तदंशस्य प्रस्तरस्य पूजा क्रियते । 'शं नो ग्रावाणः' अ० १९।१०।७, ऋ० ७।३५।७ अत्र पाषाणात् कल्याणप्रार्थना । 'यो व आपो पामश्मा पृश्निर्दिव्योऽप्स्वन्तर्यजुष्यो देवयजनः' अ० १०।५।२० अत्र अश्मनो

× केचनाऽऽर्य्यसामाजिकाः सनातनधर्म्मिणो—'मूर्तिपूजका गर्दभा भवन्ति' इति आक्षिप्य धन्यम्मन्या भवन्ति; यदि सनातनधर्म्मी तत्रोत्तरेत्, 'तर्हि तु भवतां स्वामिदयानन्दोऽपि गर्दभपुत्रो जातः' इति श्रुत्वा तस्मै क्रुध्यन्ति । बत ! 'यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे' । किं स्वामिदयानन्दो मूर्तिपूजकस्य पुत्रो नासीत् ?

देवयजनत्वमुक्तम् । 'यस्य भूमिः प्रमा' अ० १०।७।३२ । 'यो विश्वस्य प्रतिमानं बभूव' अ० २०।३४।६ इति परमात्मनः प्रतिमारूपत्वम् । 'प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे' यजुः १८।६३ अत्र प्रस्तरादिभिर्देवानां यज्ञः ( पूजा, यजँ देवपूजासंगतिकरणदानेषु, भ्वा० उ० अनि० सक० ) । 'प्रवर्त्तय दिवोऽश्मानमिन्द्र !' अ० ८।४।१६ । 'ग्रावाणो घ्नन्तु रक्षसः' अ० ८।४।१७, ऋ० ७।१०४।१७ इति प्रस्तरे राक्षसहननशक्तिः । 'अग्नि-रश्मसु' अ० १२।१।१६ अग्निः—परमात्मा तेजो वा । 'युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास ! इन्द्रः' अ० २०।३४।७ अत्रेन्द्रो युक्तस्याऽश्मनो रक्षक इति निरूपितम् । 'ग्रावाणो ! अप दुच्छुना मप सेधत दुर्म्मतिम्' ऋ० १०।१७५।२ इति ग्रावभ्यो दुर्म्मत्यपसारण प्रार्थना । स्वा० दया-नन्देन 'बृहद् ग्रावाऽसि' यजुः १।१५ इत्यस्याऽर्थः 'बड़े पत्थर हैं' इतिकृतः। तेन ग्रावशब्दस्य वेदे प्रस्तराऽर्थोऽप्युपपद्यते । ऋग्वेदादिके ग्रावदेवताकसूक्तान्यपि दृश्यन्ते । 'ग्रावा शुम्भाति मलग इव वस्त्रा' अ० १२।३।२१ । "ग्रावाणो...अप-सेधत दुर्म्मतिम्' ऋ० १०।१७५।२ अत्र देवता अपि ग्रावाणः, निरुक्ते—'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति, ७।१।४ इतिदैवतकाण्डारम्भे; तेन यदर्थस्याऽत्र प्रेप्सया ग्रावस्तुतिः, सा सफला भवति, तेन ग्रावस्तुतिर्वैदिकी निष्पन्ना । 'ते वा एतेऽश्ममया ग्रावाणो भवन्ति, देवो वै सोमो दिवि हि सोमः, तस्यैतच्छरीरं यद् गिरयो यदश्मानः, तच्छरीरे-णैवैनमेतत् समर्धयति' शत० ३।६।४।२। 'ग्रावाणः........महीयन्ते' ऋ० १०। ७५।।३ महीङ् पूजायां धातुः कण्ड्वादिः, तेन प्रस्तरपूजा वैदिकी ।

'अश्मा च मे, मृत्तिका च मे, गिरयश्च मे, पर्व्वताश्च मे, सिकताश्च मे, वनस्पतयश्च मे, हिरण्यञ्च मेऽयश्च मे,........यज्ञेन कल्पन्ताम्' यजुः १८।१३ एतदादिकमूर्त्तयो देवपूजायै वेदेन कल्पिताः, तत्र प्रथमः 'अश्मा' प्रसिद्ध एव, 'यज्ञेन कल्पन्ताम्' इत्यंशो विचार्य्यः, यज्ञो यजँधातोर्नङ्प्रत्ययः, यजँधातुश्च देव-पूजा-सङ्गतिकरणदानेषु, तेन देवपूजाऽर्थमिमा उपयुक्तमूर्त्तयो वेदेन स्वयं निर्दिष्टा। 'य एवाऽसौ चन्द्रे पुरुषः, य एवाऽसावादित्ये पुरुषः, य एवाऽयं विद्युति पुरुषः, य एवाऽयमाकाशे पुरुषः, य एवाऽयमग्नौ पुरुषः, य एवाऽयमप्सु पुरुषः, य एवाऽयमादर्शे पुरुषः, य एवाऽयं दिक्षु पुरुषः, यश्चाऽयमात्मनि पुरुषः, एतमेवा-ऽहं ब्रह्मोपासे' इति शतपथे १४।५।१।२-३-४-५-७-८-६-१०-१३ इति सूर्य्यचन्द्रा-दिमूर्तिष्वपि परमात्मपूजा निर्दिष्टा ।

'योऽसावादित्ये पुरुषः सोऽसावहम्' ४०।१७ इति यजुर्वेदस्याऽन्तिमे मन्त्रे सूर्ये परमात्मनो निवासोऽभिहितः। 'उद्यते नम उदायते नम उदिताय नमः' अथर्व० १७।१।२२ 'अस्तं यते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः' अ० १७।१।२३ इति सूर्य्यमूर्तिपूजा। 'त्वं सूर्ये न आभज' साम० उत्त० ७।२।१।५ संस्कारविधौ १५४ पृष्ठे सूर्य्यपूजाप्रार्थनाऽस्ति। 'आर्यसमाज का इतिहास' पुस्तकस्य द्वितीयभागे ३६६ पृष्ठे आर्य्यसामाजिकविदुषा पं० नरदेवशास्त्रिणा लिखितम्– 'उस समय स्वा० दयानन्दजी का मन्तव्य यह था कि....सन्ध्योपासन करने के समय सूर्य्य देवता को अर्घ्य देकर उपस्थान करने का कड़ा नियम था'। एवं फर्रुखाबादपाठशालायां स्वा० दयानन्देन श्रीकृष्णस्य ब्रह्मचर्य्याश्रम कालिकी मूर्त्तिरपि निधापिताऽऽसीदित्यार्य्यसामाजिकसंसारे प्रसिद्धम्। अस्तु–। 'एवा त्वाऽर्चन्नवसे वन्दमानः' ऋ० १०।१४९।५ इति सूर्यपूजा। 'नमो मात्रे पृथिव्यै, यजुः ९।२२ इति पृथ्वी पूजा।

'इष्टापूर्त्तेन' अ० १८।३।५८ पूर्तं-स्मृति पुराणागमचोदितं वापीकूपतटाकदेवागार निर्म्माणादि-इति सायणः। तेन देवमन्दिरनिर्म्माणादि वैदिकं सिद्धम्, तथा चाऽत्रिस्मृतौ—'वापी कूपतडागादि देवताऽऽयतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते।४५। अतश्च 'यत् पूर्तं याश्च दक्षिणाः। तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधत्' यजुः १८।६४ इति पूर्त्तस्य देवपूजोपयोगित्वमुक्तम्। 'अग्निहोत्रञ्च श्रद्धा च वषट्कारो व्रतं तपः। दक्षिणेष्टं पूर्त्तञ्चोच्छिष्टेऽधिसमाहिताः' अ० ११।७।९ इत्यग्निहोत्र-श्रद्धा-व्रत-तपो-दक्षिणेष्टैः सह पूर्त्तस्य (देवमन्दिरनिर्म्माणादिकस्य) अप्युच्छिष्ट-(परमात्म-) सम्बद्धत्वमुक्तम्॥ 'सीते! वन्दामहे त्वा' ऋ० ४।५७।६, अ० ३।१७।८ इति सीताया नमस्कारः स्पष्टं मूर्तिपूजा; तदधिष्ठात्र्या वा देव्या जानक्या नमस्कारे तु अवतार-सिद्धिः। 'वैश्वानरस्य प्रतिमोपरि' अ० ८।९।६। 'योनिष्ट इन्द्र! सदने अकारि' साम० ऐन्द्र० ३।९।२ सदने मन्दिरे ते-तवेन्द्रस्य योनिः-स्थितिरकारीत्यर्थः, एतेन देवमन्दिरनिर्माणं वैदिकम्। अतएव मनुः—'कार्य्याणि देवताऽऽयतनानि च' मनु० ८।२४८ 'देवतागारभेदकान् हन्यादेव' मनु० ९।२८० 'प्रतिमानाञ्च भेदको दण्डयेत' मनु० ९।२८५। 'यथाऽभिमतध्यानाद्वा' योगद० समाधि० ३९ इति प्रतीकोपासना निर्दिष्टा। सनातनधर्म्माणो यज्जडजलादि पूजां कुर्व्वाणा दृश्यन्ते, वस्तुतस्तु ते तदभिमानिदेवता एव पूजयन्ति; तथा च—'अभिमानिव्यपदेशस्तु' व्यासः २।१।५ इति जडवस्तूनामप्यभिमानिदेवता भवति, अतएव 'वरुणोऽपामधिपतिः' अ० ५।२४।४ 'आपश्च वरुणश्च राजा' अ० १५।२।६

'यासां राजा वरुणो याति मध्ये सत्याऽनृते अवपश्यञ्जनानाम्' ऋ० ७।४६।३ अत्र आपो देवताः, 'उतो समुद्रो वरुणस्य कुक्षी' अ० ४।१६।३ इति वरुणस्य जलपतित्वम् । 'योऽसावादित्ये पुरुषः सोऽसावहम्' यजुः ४०।१७ इति सूर्य्याऽभिमानिदेववर्णनम्—एवमन्यदप्यवसेयम्, 'इन्द्रो वै यज्ञस्य देवता' शत० ३।७।१।१७।३।५।२।६ । (क्रमशः)

---

# किमिदं वृत्तिकार्श्यम् ? ।

निबन्धकः—पि० वि० वरदराजशर्मा सहायक-पुस्तकालयाध्यक्षः
(सरस्वतीमहाल तञ्जापुरी)

अतिक्रान्तसुखाः काला नृपाः पीडनतत्पराः ।
श्वः श्वः पापीयदिवसा पृथिवी गतयौवना ॥

इत्याद्यैतिहासिकस्य वेदव्यासस्य भाविविज्ञानविजृम्भणोन्मिषितां भाषामनुसृत्योच्चावचं प्रवर्तमाने लोकव्यवहारे नेदं कस्यापि विस्मयावहं यदन्तरान्तराऽभिनवेनान्तरायेणोत्तमाङ्गेऽभिहन्यते लोक इति । यतस्तथा प्रवर्तमानं गवाश्वादिकं गोष्ठाद्विभ्रष्टं गोपालकानधिष्ठितं लतागुल्मजेन सकण्टकेन तरुकाण्डखण्डेन गण्डशैलखण्डेन कुण्ठितगति उत्कण्ठमानमाकुलीभवति । न चैतानन्तरायान्संख्यया नाम्ना वा ज्ञातुं संख्यावन्तोऽपि यतन्ते । अन्तरायपरम्परामध्यपतितोऽयमनवमः प्रथमं प्रथमानः प्रायः प्रेयोजुषां प्रवयसां प्रवीनां मस्तिष्कमुच्छोषयति, विग्लपयति समग्रमिन्द्रियग्रामं परांश्च विक्लवयति, योऽसावर्थकार्श्यमिति वृत्तिकार्श्यमित्यन्यथान्यथाऽऽख्यामुपलभमानो विप्रलभमानश्च निपुणानां धिषणानैपुण्यं समस्तभारते समेधते ।

अस्य किल वृत्तिकार्श्यज्वरस्य निदानपरीक्षायां नैके विचक्षणाः प्रावर्तन्त प्रवर्तन्ते च बहवस्तत्प्रतीकारप्रक्रियासु । प्रजापरिपालन धुरीणैरधिकृता काचन परिषदपि ज्वरस्यास्य चिकित्सास्थाने यतत इति महदिदं भागधेयमस्माकं मन्द्रेषु समिन्धे ।

अन्यान्येन पथा सञ्चरमाणा निदानाधिगमनप्रवृत्ता भिन्नभिन्नामेव सीमानमासेदुः । कश्चित्कृष्यनवेक्षणमन्यो वैदेश्यवाणिज्याभिभवमपरोऽप्यप्रतिहतप्रसरं प्रजापतेस्सृष्टिप्रक्रमम् इतरो नात्यन्तोपकारकमाधुनिकविद्याधिगमविधिं च व्याधेरस्य निदानं निगदति । परन्तु केषाञ्चनानेकापत्यता परेषामन-

पत्यतामप्याकलय्यातदधीने दैवोपक्रमे कं परिहारमुत्पश्यन्तीत्यनिर्णयात्खिद्यामहे । आधुनिकविद्याधिगमस्य पूतिकूष्माण्डकल्पत्वे नास्त्यस्माकं वचनव्यसनावसरः यतः कीदृशं फलमनेनोद्पादीत्यत्र सर्वे वयं साक्षिण इति न विचक्षणाः प्रत्याचक्षीरन् । पितृपैतामहं सर्वमेव परहस्तमगान्न च पारयामः परकरगतार्थात्मकरणे ।

चिकित्सास्थाने यतमानानां पुनः सिद्धान्ता न केवलं सिद्धानां साध्यानामप्यन्तं साधयेयुः । वैदेश्यानां यदिदमनुकरणं तद्यदि सर्वांशेऽप्यप्रतिहतमात्मानं लभेत नियतमसौ रोगस्समूलमुन्मूलयेत । शय्यासन-यान-पानवेषभाषादिषु वैदेश्याननुकुर्महे, न तत्रार्धजरतीयं कार्यम् । आचारेऽपि तेषामनुकरणमनल्पप्रयोजनम् । पूर्वव्यवस्थामनुल्लंघनीयां मन्यमानाः निरर्थकं क्रियाकलापमुपनयनपाणिपीडनादिकमनुतिष्ठामः । नास्त्यस्योपरम आयुषोऽप्युपरमे । मृतस्यापि कृते बहु व्ययामहे । अवितथोऽयमाभाणकः "अन्धस्यैवान्धलग्नस्य विनिपातः पदे पदे" । पूर्वपुरुषैस्सकण्टको मार्ग आश्रित इति किमस्माभिरप्यादरणीयो भवति । प्रत्यग्रोऽपि यस्सुगमो युक्तं तस्यानुसरणम् । पश्यत विवाहादिषु वैधेषु कियानर्थः कदर्थ्यते । कथमस्य पाणिपीडनाख्या प्राणिपीडनमिति तु सुश्लक्ष्णं नामधेयम् ? अकिञ्चनोऽपि जामाता सहस्रमपेक्षते । अत एवेयं लोकोक्तिः "कन्यापितृत्वं कष्टायेति । नास्तीदृशः प्रमादः पाश्चात्यानाम्, न वा ते क्लिश्नन्ति । अतश्च वैदेश्याचारैरस्मदाचाराणामेकीभावापादनमेव देशस्योल्लाघतापादकम् ।

मन्द्रदेशीयानां राज्यतन्त्रनिष्णातानां देशनापि प्ररोचनामात्रपर्यवसायिनी । साधारणः पांसुलपाद; कृषीवलः न शास्त्रीयं कर्षणमवगच्छति । पूर्वैराचरितमित्येव कर्षणे प्रवर्तते । ये चेमे वृत्तिकर्शिता नव्यदर्शनपारगाः ते कर्षणकर्मणि व्यापार्य्यन्ताम् । पञ्चषान् मासान् हालिकविद्यामध्याप्य कर्षणोपयुक्तसाधनप्रदानेनानुगृह्यन्ताम् । तथानुष्ठिते शास्त्रेषु कृतश्रमाः नियतं शस्यानां स्तम्बकरितामधिकामापादयेयुः इति नैता दिवास्वप्नसब्रह्मचारिण्यो वाण्योऽपि मनोहारिण्यः । कथमेते दुर्ललिता अभ्रंलिहेषु विश्वविद्यालयप्रासादाग्रेषु वेलास्फालनविशीर्णोर्मिमालाशीकरवाहिभिः कुसुमबाणप्रेयसीगर्वसर्वंकषलावण्यसम्पदां मत्तकाशिनीनां चेलाञ्चलान्दोलनलम्भित-परिमलभरमन्दमन्दगतिना गन्धवाहेनोपलालिता असूर्यंपश्या राजदारा इव परुषवृत्तिपुरुषसाध्ये कर्मणीदृशे प्रवर्त्यन्ताम् । प्राक्वं प्रवर्तिता वा कथं विजयोत्तरा भवेयुः । कथं च ललाटन्तपे सहस्रभानौ हलनिहितैकहस्ता इतरकरविधृतवेत्रदण्डा बलीवर्दान् वाहयन्तु ? सर्वमेतदुत्प्रेक्षामात्रं यदेते विजयिनो भवेयुरिति ।

अपरमिदं—कथमज्ञविस्रम्भादल्पज्ञ उपेक्ष्यताम्। परित्यागे च उभयविभ्रंशः फलम्। अपरोऽयं प्रयोगः वृत्तिकार्श्यज्वरचिकित्सकानाम्। वैदेश्यानां मद्यादीनां भोग्यानां देशीयैरुपकल्पनम्। काममभ्युपगन्तव्योऽयं कल्पः, यत्तथानुष्ठाने नास्माकं धनं भारतसीमानमतिक्रामेत्। नैतावतापि सर्वात्मनोल्लाघता। नह्युन्मादकस्य स्वपरविभागोपलब्धिः। मादकानां, अतथाभूतानामपि नात्यन्तदुष्परिहाराणां दत्तायां गलहस्तिकायां निकामं सुखी भवेल्लोकः॥

एवमादि दुर्विदग्ध-दग्ध-पाषण्ड-गोष्ठी-सञ्चि-सपीत्यादिलब्धप्रसर-वाचोयुक्ति-वात्योच्छलितैः मलीमसवासना सौदामनीदामभिः नास्तिक्य-साङ्कर्याद्यङ्कुरोत्पत्तिपिशुनैः धर्म-पटल-भेदिकरकोपलवर्षिभिः अनल्पकल्पना-परुष-धाराल-धारोद्गारिभिः गोत्राश्रितैरपि गोत्रभेदकैः कलिपुरुष-कालमेघैर्वित्रास्यमानानां प्रागेव वृत्तिकार्श्यादिभिरामयपटलैरभितः परिभूयमानानां, यः स्वपरविभागमविभावयन्नागन्तुकजनं सभाजयति सूनृतया वाण्या "तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन" त्येषोऽस्य कुलधर्मः। अत एवार्यावर्त इति पुण्यभूमिरिति पुण्यासाधारणाभिख्याया मुख्यं भाजनं, यमधिवसतां प्रथमजनिजुषामसाधारणोऽधिकार वैधात्रादि विविधात्तुङ्गपदव्यधिगमे, येन चिरस्यापि वाङ्मयादर्शमधिरोपिता मन्वादीनांमूर्ता कीर्तिर्धार्यते, यस्मै स्पृहयन्ति परे पारे समुद्रं गृध्रगोमायूपाख्यानपठन-पाठनप्रौढबुद्धिप्रकर्षा गोमायुवृत्तिमनुकुर्वाणा हीनाः करुणाहीना घृणाः, यस्मादाविर्भूय भगवान् सर्वविज्ञानैकविधानमनन्तो वेदः सहस्रभानुरन्धतमसमिव तमसावृतं तत्त्वमुद्भासयति स्वयं च निरपेक्षो भासते,

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः॥ इति मनुः।

यस्य शस्यसम्पदा रत्नसमृद्ध्या च महिम्नाऽऽवर्जितो विवशो वैदेशिकः नात्मनः प्रभवति, यत्तृणाय मन्यमानः प्राणानर्णवसन्तरणेऽन्यस्मिंश्च साहसे सहसा प्रवर्तते, यस्मिन् जनिमभिलषन्ति दिविषदोऽपि तादृशेऽस्मिन्भारते केनापि सुकृतकणिका-परिपाकवशेन जातिभाजां सम्प्रदायानुरोधमधिगतविद्यानां संसारसांयात्रिकाणामस्माकं मानस—तपस्वी पुरोनिरुद्धगतिश्शरणमपश्यन् परावर्तते। भृशं खिद्यते, सुचिरमुत्ताम्यति। मुहुर्मूर्च्छति, चिराय संज्ञां लभते, पश्यति च धर्माधर्मदृढमूलबन्धं सुशब्देष्टका—दृढनिबद्धसुवर्णसुधोपलिप्तभित्ति विधिमन्त्रादिपञ्चभौमपरिष्कृतं, श्रुतिलिङ्गादिविविधविचित्रजालमालिनं सच्छास्त्रसुघटितपटलप्रावरणम्, आत्मज्ञानशेखरविराजमानं

हरिहरादिसमस्तदेवताप्रतिमालङ्कृतमध्यकक्षभागं, मन्वादिस्मृतिद्वारलभ्य-सुलभप्रवेशं, काव्योद्यानोद्दामशोभाभासुरम्—

"चातुर्वर्ण्यं त्रयो वेदाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति॥
नान्यतो ज्ञायते धर्मो वेदादेवैष निर्बभौ।
तस्मात्सर्वप्रयत्नेन धर्मार्थी वेदमभ्यसेत्॥
पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनः।"
इत्युदात्तपुरुषपचेलिमवचनप्रौढ़ियपर्यन्तभूभागम्
"धर्मशास्त्रं तु विज्ञेयं शब्दशास्त्रं तथैव च।
पुराणानीतिहासाश्च तदाख्यानानि यानि च॥"
महात्मनां च चरितं श्रोतव्यं नित्यमेव हि"

इत्याद्यधिगमोपायोपेयं अगोचरमकृतसुकृतानां, अनासाद्यमनुपसेवित-वृद्धानां भारतीयविज्ञानसर्वस्व-कोशागारं भूमानं निगमप्रासादमहिमानम्, आसीदति द्वारदेशं, विषीदत्यतिवेलं, निषीदति वितर्दिकोद्देशे, अपधदत्यात्मीय-मपदानं, सतृष्णमालोकते, उपलभते किमपि। ननु किमेतत्।

"मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम्।
कायस्थमेव तत्कार्यमुत्थाप्यं न कदाचन" ॥ इति॥

अनुपेक्षणीयमुपनीतानां यज्ञोपवीतमवगच्छति। कुतोऽस्येयान्महिमा। किमिति चास्य नित्यधारणं विधीयते। विवेचयति वाक्य-सन्दर्भः

ओङ्कारः प्रथमस्तन्तुः द्वितीयोऽग्नि स्तथैव च।
तृतीयो नागदैवत्यश्चतुर्थ स्सोमदेवतः।
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः।
सप्तमो वायुदैवत्यः सूर्यश्चाष्टम एव च।
नवमस्सर्वदैवत्य इत्येते नव तन्तवः॥"

इति प्रतितन्तुदेवताभेदकथनेन तन्तूनां महिमानमुपश्लोक्य तादृशैस्तन्तु-भिर्निर्मितमिदं यज्ञोपवीतं नित्यं धार्यं मन्यते। अथापि को वा तन्तु-निर्माणेऽधि-क्रियत इत्यपरं जिज्ञासते। "अथातो यज्ञोपवीतविधिं व्याख्यास्यामः। जीर्णे च्छेदे विनाशे वा हस्तपादान्प्रक्षाल्याचम्य ब्राह्मणकन्यकया विधवया वा शुचि-स्नातया निर्मितं सूत्रं गृहीत्वा × × सजीवं बध्नाति" इति बोधायनस्य सूत्रं किमप्यधिगच्छति। तत्त्वार्थबुभुत्सया निपुणं निरूपयति। कुतः कन्यका विधवा तन्तुनिर्माणेऽधिक्रियेते। नान्यः सर्वः। कं वा विशेषं पश्यति सूत्रकारः।

एतावत्प्रत्येति युक्तिकुशलः । प्रथमं तावत्तयोस्सुलभोऽवकाशः । प्रायः कन्यका न गृहकृत्ये न वाऽन्यस्मिन्कर्मणि व्याप्रियन्ते । विधवाऽपि न गृहे कृत्यं पश्येत् । इतरासां च स्त्रीणां पतिशुश्रूषा शिशुपोषणमित्यादि सुबह्वनुष्ठेयं विद्यते। न वा तासु तादृशी शुद्धिस्सम्भाव्यते या विधवाकन्यकयोस्सुलभा । पुंसां पुनः कुटुम्बभरणधुराभुग्नकन्धराणां नास्त्येवावकाश-लाभवार्ताऽपि वृत्तिकार्श्यं च कं विषयीकरोति, अलसमनुद्योगिनं च । न सभर्तृका अलसा अनुद्योगा वा सम्भाव्यन्ते । तस्या हि भर्ता जागर्ति यो नियतमेनं बिभृयात् । कन्यकानां यद्यपि पिता पोषकः तथापि न ताभिरलसाभिरवस्थातव्यम् । आलस्यं च वृत्तिकार्श्यापादकम् । विधवायाः पुनस्सर्वथा संभाव्यत एव वृत्तिकार्श्यम् । कथमेतदुन्मूल्यताम्, आत्मायत्तवृत्तिता सम्पादनेन । तच्च शिल्पकौशलेन लघु निष्पाद्यते । तन्तुनिर्माणमपि हि शिल्पेष्वन्यतमम् । अन्येष्वपि शिल्पेष्वेता अधिक्रियन्ते ।

"अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।<br>
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥<br>
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ।

इति वदतो मनोरयमाशयो भासते । एतावतोऽर्थस्यावगमेऽप्यपरितुष्यन्पुनःपुनर्विमृशति । आभ्यां निर्मितस्य तन्तुसमवायस्य किमिदमेव प्रयोजनम् । यज्ञोपवीतमात्रं तु न तावतस्तन्तूनपेक्षते । किमन्यदवशिष्टैस्तन्तुभिस्साध्यताम् । असकृदालोड्यमानेऽन्यदपि वाक्यजातम् आकाङ्क्षामस्योपशमयति । "अथैनं तिष्ये वासस्सद्यः कृत्तोतं परिधापयन्" इत्यादि । अनेनेदं विशदं प्रत्यपादि न यज्ञोपवीतमात्रफलास्तन्तवः पटपर्यन्तं व्याप्नुवन्ति । सद्यःकृत्तोतमिति च वाससो विशेषणमासां वासोविरचनायामधिकारमाक्षिपति । तन्तुवायनिर्मितपटाहरणेऽत्यल्पो वा विलम्बो नान्तरीयकः । गृह एव गृहिणीभिर्विरच्यमाने वटोस्सामीप्यात्सद्यः कृत्तत्वमुपपद्यतेतराम् । [सद्यः कृत्तोतमित्यस्य सूत्रपदस्य एकस्मिन्नेवाहनि तन्तुक्रिया वयनक्रिया यस्येत्यर्थमुपवर्णयन्भाष्यकारः स्त्रीणां न केवलं वयनक्रियाभिज्ञत्वमावेदयत्यपि तदर्थभ्यासेन हस्तलाघवमप्यवश्यापेक्षितमभिप्रैति । अनेनैतत्सिद्ध्यति—ब्राह्मणीनां न केवलं तन्तुनिर्माणे परं वयनेऽप्यधिकारं विधाय क्रियाक्षमत्वसिध्यर्थमभ्यासमपि विधत्ते । स्ववचने प्रामाण्यदार्ढ्यमापादयन् सूत्रकारः पठति "रेवतीस्त्वाव्यक्ष्णन् कृत्तिकाश्चाकृन्तन् त्वा धियोऽवयन्, अवग्ना अगृञ्जन् सहस्रमन्ता" अभितोऽयच्छन् । या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वादेवीरजरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः" ॥ अत्र प्रथमया ऋचा रेवत्यादीनां

प्रत्येकं ध्वंसनकर्तनादिषु प्रवृत्तिं प्रतिपाद्य रेवत्यादिस्त्रीप्रत्ययान्तपदोपादानेनाथ सिद्धमपि स्त्रीणामधिकारं व्यंग्यत्वान्नाशिक्षितमतयोऽवबुध्येरन्निति, निपुणमतयोऽपि रेवत्यादिभिन्नभिन्नप्रातिपदिकग्रहणेन न स्त्रीसामान्यस्याधिकार इति कदाचिद्विभ्राम्येयुरिति मुक्तकण्ठं याश्च देवीरिति पूर्वोक्तार्थमाम्रेडयन् स्त्रीत्वमेव प्रयोजकमाचख्याविल्यहो सहृदयसार्वभौमोऽपि भगवानाम्नायः मन्दाधिकारिणमप्यवगमयितुं स्पष्टमाचष्टे । सहस्रमन्तानभितोऽयच्छन्निति च ऋग्भागः वयनव्यतिरेकेण गृहीतः दशाविशेषकच्छेदे न्यस्मिंश्च चित्रकम्बलनिर्माणादौ प्रयोजयति ।

एवं योऽसौ वृत्तिकार्श्यज्वरः प्रसृमरस्सर्वा दिशो व्याप्नोति सनियतं पूर्वपुरुषैरज्ञायि । अनुभूतो न वेत्यन्यदेतत् । निराकरणोपायस्य तत्र तत्र प्रदर्शनादवगच्छामो नियतं तेऽप्यज्ञासिषुरिति । अपरो ऽसावुपायः वृत्तिकार्श्यमूलोच्छेदी वेदमूलकः यस्सर्वैरपि सूत्रकारैरासूत्रितः । तदिदमङ्कुरार्पणं नाम । सर्वेष्वपि मांगलिककर्मकलापेषु प्राङ्निष्पादनीयं कृत्यम् । अत्र बहूनि नानाजातीयानि तण्डुलान्युप्यन्ते, प्ररोप्यन्ते च । सर्वेषामेव सूत्रकाराणामादराद्लोकनैकपात्रमेतत्कृत्यं मुक्ताफलमिवान्तरातरलमत्युज्ज्वलं किमप्यावेदयति । जनतायाः प्रथमापेक्षितो ग्रासः । तस्य च ह्रासो यथा न जायेत जनिष्यमाणाया जनताया इति शस्यरहस्योद्भेदार्थमिदं सर्वप्रथमं विदधते शास्त्रकाराः । द्वितीयमिदमपेक्षितमाच्छादनम् , तत्रापि स्त्रीणामात्यन्तिकीमपेक्षामीक्षमाणा मुनय स्तासामेव तदुत्पादनेऽधिकारमयच्छन् । अपरोऽप्युपायो विहितो नवेत्येतन्नात्र विचारयामः । स्थालीपुलाकन्यायेन कियानेव प्रादर्शि । परन्तु योऽसौ सर्वज्ञो वेदः समासहस्रान्ते जनिष्यमाणमर्थकार्श्यममानुषेक्षणेन निरीक्ष्य तत्परिहारोपायं शस्यरहस्यपरिज्ञानं हस्तकौशलं च तन्तुनिष्पादनरूपं व्यधत्त कथमसावपेक्षितमुपायान्तरमपि न विदधीत विहितं न जिज्ञासामहे ज्ञातं वोपेक्षामहे । अतिशोचनीया चाद्यत्वे भारतीयानां दुर्दशा यदद्यत्वेऽध्यापकेषु वा प्राच्येष्ववर्चीनेषु वा एकोऽपि वा न चतुष्षष्टिकला नाम्ना ग्रहीतुमपीष्टे । कलया हीना च विद्या कथं सफला भवतु ? विकला च विद्या कथं सकलं फलमुत्पादयितुमलम् । कलाभ्युन्नतिर्हि देशसमुच्छ्राये हेतुः ।

तदनेन क्रमेण शस्यविद्याविज्ञानेन समृद्धया शस्यसम्पदा समेधमानायां भारतवसुधायां तन्त्वादिनिर्माणेन विध्युपश्लिष्टेन पटाद्येष्वत्यन्तदुष्परिहरेषूत्पाद्यमानेषु "सर्वः कान्तमात्मीयं पश्यतीत्यस्मदुत्पाद्यमानेष्वादरे मेदुरी भवति, अनपेक्षणादनादरणाच्च वैदेश्यकलास्वलभमानासु भारतसीमाप्रवेशं

ग्रासाच्छादनाभ्यामविनाभूतायां जनतायां धर्मशास्त्राभ्यसनतदर्थानुष्ठानव्यसनेन पराभूतेऽरिषड्वर्गे बाह्यानामान्तराणां च विपक्षाणां क्षपणेनाकण्टकेऽस्मिन्भारतखण्डे किमिदं वृत्तिकार्श्यं नाम तिष्ठेत् ?

न चैतत्सर्वं खपुष्पायमाणमिति शशशृंगेण समशीर्षिकां गणनामर्हति । अध्यक्षयामो वयं तुरुष्कान् शिल्पकुशलान् ऐहिके श्रेयसि परां काष्ठामधिरूढान् । देहभृता च ऐहिकमपि श्रेयो न शक्यत उपेक्षितुम् । को वाऽन्यो हेतुभावमापद्यते विना तज्जातीयानामंगनानां अनुद्योगवैमुख्याच्छिल्पकौशलाच्च । दशाविशेषकच्छेदे रागारोपणे सुगन्धिवर्तिकानिर्माणे च कृतहस्ता यवन्यः प्रायोऽप्यर्घां कुटुम्बधुरां बिभ्रति । यद्यपि नैता विहितबुद्धया प्रवर्तन्ते वयनादौ तथापि 'अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः' इति न्यायेन विहितैकदेशानुष्ठानजनितफलभाजनानि भवन्ति ।

एवमनेकेषु वृत्तिकार्श्यापनोदनक्षमेषूपायेषु द्वारदेशमधिवसत्सु नप्रतिपद्यामहे सर्वांशेन पाश्चात्यानुकरणं वृत्तिकार्श्यापनोदकं ब्रुवाणानां दवीयसीं पदवीम्, बाढम् विप्रतिपद्यामहे च । यदंशतोऽप्यनुकरणस्येदृशो दारुणोऽयं दशाविपरिणामः साकल्येनानुकरणे का कथा भविष्यतीति न मनसाप्युत्प्रेक्षितुमीश्महे । प्रथमं चेदं कारणं देशसमुच्छ्रायस्य यत्परानुकरण-परिवर्जनं नाम । ये च विवाहादि विदधतां मुनीनां निरर्थकक्रियाकलापविधानेन वृत्तिकार्श्यहेतुत्वमास्थिषत न तैरात्मनोऽसमीक्ष्यकारितायामसाधुकारितायां वैते पर्यनुयोज्याः । अबद्धं कृत्वा कुचोद्यं कुर्वतः समानोदरा एते देवानां प्रियाः न प्रतिवचनमर्हन्ति ।

तदेवं प्रतीच्यधर्मसम्भेदेनोद्भ्रान्ता व्यस्मार्ष्मत्स्मत्पूर्वपुरुषधर्मं यतो व्ययामहे आयाननुगुणं अकार्येण च लभामहे, न चाभ्यासिष्म निपुणमैहिकप्रयोजनं परकीयं कौशलञ्च । उभयविभ्रष्टानां कष्टमिदं वृत्तिकार्श्यमर्थकार्श्यमन्यच्च क्लेशजातमजनिष्ट । अस्या दुरवस्थायाः संस्थायामास्थावन्त आस्तिकाः प्राच्यव्यवस्थायां स्थिरां मतिं विधाय तामनुसरन्तः सुखं समेधन्तामिति शिवम् ।

---

# अनुकरणीयादर्शकार्यम् ।

विन्ध्येल-खण्डमण्डलान्तर्गताजेयगढ़-राज्याधिपतीनां परमधार्मिकाणां श्री १०८ श्री सवाई महाराजाधिराजानां श्रीभूपालसिंहदेवमहोदयानां परमादरणीयायाः धर्मधनायाः श्री १०८ श्री सवाई महाराज्ञ्याः श्रीकमलकुवरनाम्न्याः देव्याः राजमातुः प्रतिनिधितया महामहिमशालिभिः विद्वद्भिः ललितकला-

विशारदैः युवराजपदोपभूषितैः श्री १०८ श्री पुण्यप्रतापसिंहदेवमहोदयैः स्वराज्यस्य त्रिविधमंगल—साधनार्थं, प्राचीनार्वाचीनज्ञानविस्तारार्थं, विविध-विधेय-विधानार्थं स्वनिर्मापिते भारतीय-स्थापत्यकलायाः दिव्यादर्शभूते सुख-शाले नवीनप्रासादे, स्वमहोदारतया धर्म-बुद्धया च श्रीकमलेश्वर्याः सरस्वत्याः शारदायाः दिव्या नवीना प्रतिमा, हिन्दी-सार्वजनिकवाचनालयश्च सुस्थापितौ इति महानन्द-विषयः विन्ध्येलखण्डवासिजनतायाः ।

प्रतिष्ठायागे स्वस्थानीयाः बहवो मान्याः विद्वांस उपस्थिता आसन् । ये प्रचुर-दानमानाभ्यां समर्चिताः । अस्य प्रतिष्ठायागस्य गुरवो गोस्वामिपद-भूषिताः श्री गोकुलप्रसादाः राजगुरवो, यागाचार्याः पीतकूर्चिनः पीताम्बर-रावतैलङ्गा राजाचार्य्या अभवन् यैः वैदिकविधिना सरस्वत्याः प्राणप्रतिष्ठा कारिता । यागस्यास्य पौराणिकाः पीतकूर्चिनः पं० छुन्नूलालमहाशया राजपौराणिका अभवन् । प्रतिष्ठायागस्य कार्यारम्भः प्रागभवत् । ततः महता समारोहेण च सरस्वत्याः "नगर-प्रदक्षिणा" अभवत् । प्रदक्षिणा— समाजे सर्वेषामग्रे सुभूषिता गजालिः, ततः शतघ्न्यः, कुन्तायुधा अश्वारोहकाः, प्रभावशालिनी राजकीया चमूः आंगल-वाद्य-वादकाः पदातयः (बैन्ड), ततः स्थानीया हाई-स्कूलछात्राः अध्यापकाश्च, कन्यापाठशालायाः कुमारिकाः मंगलकलश-युक्ताः सुपूजिताः सुवासिन्यः, ततः याज्ञिक-विद्वांसः ततः सरस्वत्याः सुभूषितो रथः ततः राजवर्गीयाः ततो राजपुरुषाः, प्रतिष्ठित-नागरिकाश्चासन । निशीथानन्तरम् विविधक्रीडा-कौतुकोत्सव तत्परः प्रदक्षिणा, समाजो ग्राम प्रादक्षिण्येन स्वस्थानं पुनः समागतः ।

—अजेयगढ़ राज्यस्थानां सर्वेषां सुधियां मान्यानां नागरिकाणां साधारणजनानां च पूर्णतया हार्दिक सहयोगोऽस्मिन् कार्यं समभवत् । "अजेयगढे-तादृग् यज्ञोत्सवः बहुवर्षाभ्यन्तरे नैवाभूदिति स्थानीयवृद्धानां सम्मतिः"

—प्रासादाग्रे विशालभूमे मध्यभागतः सुविस्तृतो राजमार्गो विराजते, येन अनारतं मृत्तराणि धावन्ति । समीपे तु शोभनं जलाधिगमसौविध्यं वरीवर्ति ।—

यशोधनानां श्रीमतामिदानीमिदमादर्शभूतं कार्यमित्यत्र नास्ति कोऽपि सन्देशलेशावसरः । समर्चिता श्रीमती भगवती कमलेश्वरी सपरिवाराय यजमानाय दीर्घमायुः पूर्णस्वास्थ्यं धार्मिकं यशश्च वितरेदित्येव मनोऽभिलाषो मम ।

निवेदकः—

राज पुरोहितः—पं० देवप्रसादशर्मा.

अजेयगढ़, राज्यस्थः ।

(विश्वसंस्तुतसदाचाराणामग्निहोत्रिप्रवराणामस्मत्पूज्यपादगुरुवर्य्याणां सूर्योदय-
सम्पादकानां प्रातःस्मरणीयमहामहाध्यापकमहामहोपाध्यायस्वर्गीया-
न्नदाचरण-तर्कचूडामणि महोदयानां महाप्रयाणे काशीस्थ-
कालीवाड़ी भवने संजातायां शोकसभायामाश्विन
कृष्णाद्वादश्यां शुक्रे ता० १-१०-३७ई० पठिताः)

## शोकाश्रुविन्दवः।



यस्तर्कचूडामणिराहतो बुधैर्गोविन्ददासादिभिरेत्य काशिकाम् ।
श्रीमालविस्थापितविश्वमन्दिरे ऽप्यध्यापयद्धारतधर्ममण्डले ॥१॥
ग्रन्थाननेकान् विरचय्य विस्तृतान्छिष्यान्सुतान्योग्यतमान् विधाय यः ।
धर्मं प्रतिष्ठाप्य निजप्रभावतः सोऽन्ते जपन् ब्रह्म दिवं गतो गुरुः ॥२॥
अहहा ! विषमोऽशनिः कुतो निपपातैकपदेऽनपेक्षितः ।
निगमागमपारगो यतः स महाज्ञाननिधि विलोपितः ॥३॥
इषुकृष्णदलेऽम्बुधौ तिथौ वयसि प्राप्त इहाष्टसप्ततिम् ।
सुत-शिष्यगणान् विहाय नस्त्वरितं हा ! त्रिदिवं कथं गतः ॥४॥
अपि मूर्तिधरः पतञ्जलिः कपिलो व्यास उताद्य जैमिनिः ।
कणभुग्ननु गौतमो मुनिः क इहासीद्वत नो भवान् भुवि ॥५॥
निगमः कमुपाश्रयेत्क्व ते स सदाचार इहाव्रजेद्वद !
अतिथिप्रिय ! हिन्दुसंस्कृति र्वत दीना गृहिणं कमावसेत् ॥६॥
अयि धर्मविधिं यथार्थतः क उपेत्याद्य समन्वयिष्यति ।
स पुराणनिधिः कमेष्यति व्रतिनं स्वार्थसमर्थकं वद ॥७॥
रुदतीं गृहिणीं सहोदरं स्वसुतान्पौत्रगणान्स्वबान्धवान् ।
अयि शिष्यगणांस्त्यजन् कथं त्रिदिवं हा ! प्रणवं जपन्नगाः ॥८॥
त्रिदिवमुपगतानां तर्कचूडामणीनां वरदकरविहीनः शिष्यसंघः सबन्धुः ।
उपहरति समन्ताच्छ्राद्धपुष्पाञ्जलिं हा ! स्मृतिदिवस इदानीं बद्धशोकाम्बुवेगः॥

श्री गोपालशास्त्रिपुरस्सरस्य

काशीस्थस्य तदीयशिष्यसंघस्य, शोकसन्तप्तस्य।

# शोकोच्छ्वासः ।



काशीवासवशादुपेत्य निकटे काशीश्वरेण स्वयम्
आसन्ने समये च विश्वगुरुणा विश्वेश्वरेणार्पितम् ।
पीत्वा नाम सुधामयं शिवशिवेत्यालिङ्गितस्तारकम्
पूज्यो मे गुरुरन्नदाचरण ! शैवे पदे नन्दते ॥१॥

नानाग्रन्थप्रकाशैर्विदित-सुकृतिभिर्जातलोकानुरागः
सोऽयं काशीनिवासी तपसि सुविहितो दुःखनाशे निमग्नः ।
काशीस्थस्वामिमुख्यैः सकलजनगणैः कीर्तनीयो महात्मा
मूर्तः साक्षाद्दिविष्ठो जयति सुविमलैः पुण्यतेजःसमूहैः ॥२॥

यश्छात्रानपुषत् स्वपोषमनिशं भातेष्वभीतिं ददौ—
यः शिष्यान् निजबान्धवानिव सदा प्रीतिप्रदो ह्लादयन् ।
यो द्वेष्यानपि सम्मतान् विनयिनोऽपश्यत् स्वबन्धूनिव
यो नित्यं परिरक्षति स्म शरणं यत्नेन वै सङ्गतम् ॥३॥

श्रुत्वा यस्य कथां विचित्रभणितां शान्तिः परा कल्पिता
शीलं साधु विचिन्त्य शत्रुभिरपिच्छाया यतः प्रार्थिता ।
आचारः श्रुतिधर्मपूतसुधियां क्षेमं सदा योऽतनोत्
हा ! हा ! भूतिलक ! प्रसन्नवदन ! त्वं साम्प्रतं क्वासि भोः ! ॥४॥

सुजनकुजनशान्ति "अन्नदा" ह्यन्नदानै रनुगत-जनदुःखं नाशितश्चार्थदानैः ।
"चरण" जनसमूहे प्रीतिनेत्रं तवासीत् सुरबुध गुरुमाने "तर्क चूडामणि" स्त्वम् ॥५

प्रबल-पवन-वेगोद्भिन्नवेलो यथाब्धिस्तव गुरुतरशोको दुस्तरो दुःखदायी ।
प्रसरति सहसाऽयं धैर्य्यबन्धं विहाय क इह विपदि धीरा मानवाः सन्ति लोके ॥६॥

काशीनाथजितान्तकात्मतपसा काशीशलीन प्रभो !
स्वर्लोके शिवशाश्वते विलससि मोदीप्तचन्द्रप्रभः ।

नानाक्लेश-वियोग-शोक-विकलास्त्वत्पादपद्माश्रिताः
कल्याणं कुरु नो विधेहि परमामृद्धिश्च सर्व्वात्मिकाम् ॥७॥
नमोऽस्तु शुद्धाय चिदात्मरूपिणे वरेण्यरूपाय च सत्यरूपिणे।
नमोऽस्तु तस्मै गुरवे चिदात्मने तपःप्रलीनाव्ययसौम्यमूर्तये ॥८॥

तात! श्रीचरणाम्बुजेऽशुभदिने विन्यस्तपुष्पाञ्जलि-
र्भक्त्या मानसकल्पितैः शुचिमना याचे नु पुण्यप्रदम्।
प्रज्ञानं वितराशिषश्च विनत "श्रीज्योतिषे" सर्वदा
शेषं श्रीशिवतां गते गुरुपदे संनत्य सम्प्रार्थये ॥९॥

—ज्योतिश्चन्द्र भट्टाचार्यस्य

## तर्कचूडामणि महोदयानां कैवल्योपलब्धिः।

विगताश्विनकृष्णतृतीयायां गुरुवासरे निशीथेऽर्धरात्रे (१९९४ वै०) (ता० ८।९।३७ ई०) महामहोपाध्याय-महामहाध्यापकानामग्निहोत्रिप्रवराणां पूज्यपाद श्रीमदन्नदाचरणतर्कचूडामणिमहोदयानां काश्यां मानससरोवरस्थ निवासभवने कैवल्योपलब्धि जाता। देहावसानसमये पूज्यपादनाम् अवस्था अष्टाशीति वर्षाणामभ्याशमुपगताऽसीत्। एषां जन्म दशमहाविद्यासिद्ध-सर्वानन्द (सर्व विद्या) वंशे वङ्गप्रान्तीय नोयाखालीमण्डलान्तर्गत-सोमपाडाग्रामेऽभूत्। सर्वविद्यावंशो हि वङ्गदेशे शाक्तसम्प्रदाये महाप्रख्यातिमधिगतो विद्याविभूतिविभूषितो महाकुलीनो गण्यते।

तर्कचूडामणिमहोदयाः सर्वप्रथमं व्याकरणन्याययोः सम्यगध्ययनं विधाय स्वगुरुकुलादेव तर्कचूडामणिरित्युपाधिमधिगवन्तः। पश्चाच्च काव्य-सांख्य-योग-मीमांसा-वेदान्तशास्त्राणामध्ययनं धर्मशास्त्रग्रन्थानाञ्च परिशीलनं कृत्वा तेषु प्रावीण्यातिशयमभ्युपगतवन्तः। इमेऽध्ययनानन्तरं प्रथमं स्वमण्डल एवैकस्मिन् इंग्लिशविद्यालयेऽध्यापयितुमारब्धवन्तः। तदानीमेवैकस्यां चतुष्पाठ्यां सर्वशास्त्राणामध्यापनं प्राचीन-संस्कृताध्यापनपद्धत्या पाठयितुमारब्धवन्तः! सैव चतुष्पाठी कियता कालेन नोयाखाली-संस्कृतकालेजरूपे परिणता जाता।

तर्कचूडामणिमहोदया बाल्यावस्थायां यदा ढाकानिवासिनां स्वर्गीयानामभयाचरणविद्यारत्नमहोदयानां निकटे व्याकरणमधीयाना आसन, तदानीमेवैषां प्रतिभायाः परिचयः सर्वैरेव तदीयसतीर्थैः समधिगतः। यतोहि व्याकरणाध्ययनानन्तरं पञ्चषैरेव दिवसैरिमे साहित्यदर्पणस्य विशिष्टमंशं गुरुमुखादधीतवन्तोऽवशिष्टान् ग्रन्थांशांस्तु स्वयमेव स्वप्रतिभाप्रावीण्येन परिशीलयाञ्चक्रुः। यत्रैषां महावैदुष्यमासीत्। एतेषां 'रामाभ्युदय'-महाप्रस्थान-भूदेवचरितप्रभृतीनि महाकाव्यानि ऋतुचित्रप्रभृतीनि च खण्डकाव्यानि विदुषां चेतश्चमत्कराणि विद्यन्ते। व्याकरणे वैदुष्यमेषामप्रतिममासीत् एभिः व्याकरणे निर्मिता बहवो निवन्धाः प्रकरणग्रन्थाः सन्ति। सुब्रह्स्य-नामधातु-प्रत्ययविवेकप्रभृतयो ग्रन्था व्युत्पत्तिमाधातुं व्युत्पत्तिवाद-शक्तिवादप्रभृतिग्रन्थतो न्यूनां कोटिं नासादयन्ति। सिद्धान्तकौमुद्याः कारकभागस्यापि चूडामणि-महोदयैः स्वतन्त्रं व्याख्यानं कृतं विद्यते।

इमे महोदयाः स्वप्रतिभावलेन वङ्गदेशे परमां प्रसिद्धिमासाद्य स्ववयोऽवस्थायाश्चत्वारिंशत्तमेऽब्दे इह काश्यामागतवन्तः। तदानीं च काशीस्थैःसंस्कृत विज्ञैः स्वर्गीय बाबू गोविन्ददास महोदयैः तदानीन्तन-हिन्दु-कालेज-कार्य्य सम्पादकैः श्रीमद्भिः डा० भगवान्दास महोदयैश्च समाहूता इमे हिन्दुकलाशालीय (कालेज) संस्कृतविभागे सांख्ययोगमीमांसादि-दर्शनशास्त्राणमध्यापने-नियोजिताः। ततः प्रभृत्येव श्रीभारतधर्म-महामण्डले च तत्सञ्चालकैः प्रतिष्ठापितस्य उपदेशक-महाविद्यालयस्य प्रधानाध्यापकतामुपेत्य स्वानुरागेण महती धर्मसेवा विहिता। बहून् संस्कृतग्रन्थान् भाष्यवृत्ति-विवरणादिभिः परिष्कृत्य प्रकाशितवन्तश्च। देहावसानं यावत् श्रीभारतधर्म-महामण्डलीयस्याखिल भारतवर्षीय संस्कृताध्यात्मिक विश्वविद्यालयस्य संचालनसभायाः इमे सहायकाध्यक्षपदे आसन् विश्वविद्यालयीय मुखपत्रस्यास्य-सूर्य्योदयस्य च इमे एव प्रधान-सम्पदका आसन्

इह काश्यामागमनकालत एवेमे स्वनिवासे प्रतिष्ठापितायाम् ईश्वरपाठशालायां सर्वाण्येव शास्त्राणि अध्यापयन्तिस्म। तत्रैव यदा हिन्दुकालेजाभिधो विद्यालयो विश्वविद्यालयरूपेण परिणतो जातस्तत्रापि ते सांख्ययोग शास्त्रयोः प्रधानाध्यापका भूत्वा स्वीयसदाचारेण तत्रत्याधिकारिणां श्रीमतां प्रमथनाथ तर्कभूषणमहोदयानां श्रीमतां मदनमोहन मालवीय महोदयानाञ्च सम्मानभाजनान्यभूवन्। इत्थमध्यवसायपरायणा इमे प्रातः काले विश्वविद्यालये पराह्णे श्रीभारतधर्ममहामण्डले अतिरिक्तकाले च ईश्वरपाठशालायामध्यापयन्तः

सततपरिश्रमेण अद्यत्वे दार्शनिकपद्धतौ नूतनयुगपरिवर्तनमेव कृतवन्तइति स्फुटम्प्रतीयते। यतो हि सर्वेषामेव दर्शनानां वृत्तिरूपेण तैः सरलसूत्रार्थौ विहितोऽस्ति। यत्र च सूत्राणामक्षरैरेव येऽर्था निःसरन्ति त एवाङ्गीकृताः सन्ति। येन वृत्तावतिसारल्यं स्फुटार्थप्रतिपादकत्वमपि समागतमस्ति। एवं तदनुसार्य्येव भाष्यं प्रतिदर्शनं पृथगेव विरचितं विद्यते। सर्वेषां दर्शनानां भावार्थमादाय वैशेषिकरहस्यं न्यायरहस्यं सांख्यरहस्यं योगरहस्यं वेदान्तरहस्यम्-इत्यादिनाम्ना गुरुशिष्य-संवाद-( प्रश्नोत्तर ) रूपेण बङ्गाक्षरैर्वङ्गभाषायामेवातिमनोहारीणि पुस्तकानि मुद्रितानि सन्ति। सर्वोपरि च सर्वदर्शनानां चित्राणि निर्मितानि देवाक्षरैर्मुद्रितानि च सन्ति। यान्येव केवलमधीत्य सर्वदर्शनरहस्यज्ञा भवितुमर्हन्ति जनाः। यत्र च तत्तद्दर्शनानामादित आरभ्यान्तं यावत् सर्वसूत्रार्थानां क्रमशश्चित्ररूपेण विन्यासो विद्यते, येषां दर्शनमात्रेणैव सर्वेऽपि तद्दर्शनगाः पदार्था बुद्धावारूढा भवन्ति न कदापि विस्मर्य्यन्ते।

एवं दर्शनशास्त्रस्य दुरूहत्वमधुना तेषामनुग्रहेणापास्तमेव दृश्यते। तैर्निर्मिता मुद्रिता अमुद्रिताश्च द्वापष्टिर्ग्रन्थाः सन्ति, ते सर्वेऽपि समुपादेया नूतनसरल-सरण्या विनिर्मिताः, येषु व्याकरणकाव्यदर्शनधर्मशास्त्राणां सर्वेषामेव विषयाणां नूतनसरण्यैव स्फुटतरं प्रतिपादनं कृतं विद्यते। इत्येवं तर्कचूडामणिमहोदयैः सर्वदर्शनानां पद्धतिपरिष्कारेण वर्तमानशासकेषु अपि स्वीयः प्रभावः समारोपितो येन तेऽपि तान् 'महामहोपाध्याय' पदेन विभूषितवन्तः। कियतः कालात् तेऽग्निहोत्रमपि विधिना गृहीतवन्त आसन्। सर्वमपि अध्यापनादि कृत्यमनुतिष्ठन्तस्ते धर्मशास्त्रपुराणादीनां परिशीलनेन च धर्मशास्त्रकोशस्यापि संग्रहं कारितवन्तः। यश्चाद्यापि अमुद्रित एवास्ति। सम्प्रति शोकसन्तप्तमानसोऽहं नाग्रे प्रभवामि किञ्चिद् वक्तुम्। तर्कचूडामणीनां वियोगेन भारतीय-संस्कृत-पण्डितसमाजस्य सनातनधर्मस्य च महती क्षतिः सञ्जाता। यस्याः पूर्तिरसम्भाविनी विद्यते। सम्प्रति तेषां त्रयः सुयोग्याः पुत्राः पं० देवेन्द्रभट्टाचार्य्यमहोदयाः, पं० यतीन्द्रभट्टाचार्य्यः पं० शचीन्द्रमहोदया श्चातीव योग्याः स्वदेशे एव सन्ति। कन्ये च द्वे परिणीते स्वपतिगृहमधितिष्ठतः, पत्नी च तदीयवियोगदुःखिता इह काश्यामेव स्वावशिष्टजीवनं यापयन्ती निवसति। अनुजश्च स्वगृहकार्य्यमनुतिष्ठन् तदीय-पुस्तकानां प्रकाशनं करोति। सम्प्रति तदीयशोकसन्तप्तपरिवारैः सह समवेदनां प्रकटयन् तेषां पूज्यपादानां पुण्यस्मृतौ कियद्भिरेतैः संस्मरणवाक्यैः श्राद्धपुष्पाञ्जलिं समर्पयन् विरमामि।

तदीयशोकसन्तप्तः शिष्यः—

**श्रीगोपालशास्त्री ( दर्शनकेशरी )**

---

## शोकप्रकाशः।

हन्ताशने ! सुखकरस्त्वमसीति विद्मः
प्राणैर्वियोजयसि यत् क्षणमात्रपातात्।
हा हा ! ! चिरं गुरुवियोगशुचास्मदीय-
प्राणास्त्वदीयपतनाधिकदुःखभाजः ॥ १ ॥

श्रीश्रीगुरो ! भवदपूर्व्ववचोऽमृतानां
सेकेन कल्मषहता ननु जीविताः स्मः।
अद्यैवमेव विनिपातविपत्तिभीतौ
हा ! को भविष्यति पुनः परिरक्षको नः ॥ २ ॥

प्राप्तोऽधुना गुरुवरो ननु वः शिवत्वं
किं शोचथेति वचसा परिसान्त्वयन्तः।
नो जानते स खलु नः शिव एव जीवन्
दृश्योऽभवत् तदवलोकशुचा हताः स्मः ॥ ३ ॥

तत् प्रार्थयेमहि गुरो भवदङ्घ्रिपद्मे
अस्मासु दीनतनयेषु कृपा विधेया।
यत्च्छ्रीमतां शुभपदाङ्कजुषः समस्ता-
स्वापत्सु निर्भयहृदः प्रभवेम शान्त्यै ॥ ४ ॥

—शोकाकुलशिष्यवर्गाणाम्

---

[ महामहोपाध्याय-महामहाध्यापक-सुगृहीतनामधेयानाम् अन्नदाचरण-
तर्कचूडामणि महाशयानां कैवल्ये तद्वियोगार्तानां ]

## शोकसभा

रुदित रुदित वङ्गाः पाणिदूनोत्तमाङ्गाः
वहत वहत शोकं द्राक् समाच्छन्नलोकम्।
कुरुत कुरुत चित्तं वज्रसारानुविद्धं
यदयमधिकृताक्षः स्फायते दुःखपक्षः ॥ १ ॥
किमिति कुलिशघोरां वैखरीं पातयेयम्।
न च हृदयनिहन्त्रीं मध्यमां धर्तुमीशे।

अपि यद्सहनीयं दुःखमन्तः प्रमूर्च्छेत् ।
स्वजनकृत-विभागं तद्भवेत् सह्यपीड़म् ॥ २ ॥
अथवा किमिदं विचार्य्यते नहि वार्त्तेयमिहास्ति संवृता ।
प्रदहन्नचलं दवानलो ज्वलिताचैर्न भवत्यपह्नुतः ॥ ३ ॥
सर्वानेव जनानवैमि विकलान् शोकेन तूर्ष्णीं स्थितान् ।
आनन्दैकनिकेतनं शिवपुरीमालोकयाम्यातुराम् ॥
गङ्गामद्य विलोकयामि कलुलुध्वानैरिवाक्रन्दिताम् ।
अश्रूणामिव सन्ततिं निजपयःपूरोदरे बिभ्रतीम् ॥ ४ ॥
चूड़ामणे ! क्व नु गतो मयि ते स भूयान्
प्रेमाद्य मां यदपहाय चिराय लीनः ।
दूये विमुक्तिपथवञ्चितभागधेयो
जन्मान्तरेऽप्यसुलभं तव दर्शनं यत् ॥ ५ ॥

कोषस्तेऽखिलधर्मशास्त्रमणयो यत्रासते संचिताः
सोऽयं त्वद्विरहेण तातविरहाद् रोरुद्यते बालवत् ।
सर्वा दर्शनभारती विकलिता भाषाऽकुला शाब्दिकी
विप्राणां परमो गुरुश्च दहनो म्लानोऽद्य संदृश्यते ॥ ६ ॥
ज्ञातन्ते प्रियसाधनं, गुरुवचोनिर्दिष्टमप्यद्भुतम्
देवीहस्त-विलोकनं तदनलागारे गरिष्ठद्युतौ ।
त्यागो योगगतिश्च, किन्तु न मया ज्ञातः सखे ! पूर्वतो
मत्तो यास्यसि हा ! विहाय, दयितां त्वज्जीवनालम्बनाम् ॥ ७ ॥
वंगीय ब्राह्मणानां गृहमभवदतो गृह्यवह्निप्रहीणं
छात्राणां शीलशिक्षा विलयमभजत त्वच्छरीरेण सार्द्धम् ।
सर्वानन्दप्रवृत्तं विमलमपि कुलं म्लानतां याति सद्यः
त्वय्येकस्मिन् सुवृत्ते जहति भुवमिमां विप्लवो हन्त ! भूयान् ॥८॥
स्मरणशरणाः सर्वे शोच्या वयं रहितास्त्वया
त्वमसि विदितोऽशोच्यः सद्यो विमुक्तिमुपागतः ।
यदयमनलो गृह्यो नित्यार्च्चितः प्रणवः सदा
जपमुपचितिं प्राप्तो योगः शिवश्च विमुक्तये ॥ ९ ॥
पित्र्ये तावदृणे त्वयाऽपगमिते द्वे लौकिकालौकिके
देवर्णं यजनैरपाकृतमृणं चार्षं महाविद्यया ।
एवं सर्वविधादृणात् स्वयमहो मुक्तो बहूंश्चापरान्

त्यागेनानृणतां नयन्नपि कथं प्रेष्ठानिहोपत्तथाः ॥ १० ॥

शिष्यास्ते महतापदेशवचसा प्रेम्णा सखायोऽर्थिनो
दानेनामलचेतसा बहुविधैर्ग्रन्थैश्च नानाजनाः
त्वत्तो लब्धमहोपकारमुदिता ये तावदेवंविधाः
मन्यन्ते सुजनास्तु तेषु तद्भृणं दृष्ट्याऽपि ते वञ्चिताः ! ॥११॥

आकृत्या व्यवहारतो धिषणया वाचा च सौम्यो भवन्
नो याम्याधिकृतिं कदापि भजतामित्येव सर्वेश्वरी
केनाप्यद्भुतकर्मणाऽनयदहो त्वां सोमपल्लीगृहात्
श्रीकाशीमपि सोमपल्लिमपरां सौख्याय मोक्षाय च ॥१२॥

बाल्येऽपि ते परिणतिं विदुषैव पित्रा
नामार्पितं सफलतामभजत् परस्तात्
देव्यन्नदाचरणसंश्रयणेन नित्य-
मन्नप्रदानसजुषाचरणेन सार्धम् ॥१३॥

भो मुक्त ! क्षपिताष्टपाशः ! शिवतां प्राप्तः प्रसन्नः सदाऽ-
भूर्जीवन्नपि मृत्युना त्वममृत स्वाभाव्यमासादितम् ।
त्वच्छोकोपहतेषु बन्धुषु भवाक्षय्यप्रसादोऽधुना
ते येन प्रशमं भजन्ति भवतः सद्भावपूर्णान्तराः ॥१४॥

कस्यचित् बन्धोः ।

---

## हा ! तर्कचूडामणे !!

विवेदकः—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।
( स० ध० कालेजोपाध्यक्षः, मुलतान )

"अहहाऽन्तक ! विद्वदन्नदा—
चरणं स्वं शरणं निनीषतः ॥
तव निर्दयताऽथ मूर्खता—
प्रकटाऽभूद्गुणज्ञताभृतः ॥ १ ॥

'सूर्योदय' सम्पादकानां महामहोपाध्याय-महामहाध्यापक-श्रीमदन्नदा-चरणतर्कचूडामणिमहोदयानामाकस्मिकमात्यन्तिक-वियोगमाकर्ण्य विषीदत्य-

स्माकमन्तरात्मा । यद्यप्यस्माकमेभिः सार्द्धं साक्षात् परिचयसौभाग्यं पत्रव्यवहृतिसुयोगो वा नाऽभवत्; तथाप्यस्माकं लेखन्या तदीयलेखन्या सह चिरन्तनसंस्तवो विद्यते । प्रागस्माभिः प्रथमवर्षीय 'सुप्रभाते' ( सं० १९८१ ) तल्लिखितं 'धर्म्मशास्त्रवचनविवेचनं' परमप्रेम्णा दृश्यते स्म, यत्र तैर्धर्म्मशास्त्राणामापातत आभासमानस्य मिथोविरोधस्य प्रशमनाय निष्कण्टका सरणिरुपादिश्यत । यत्सरण्याश्रयणेन प्राचीनधर्म्मग्रन्थेषु न भवति कस्यचिद् वचनस्य क्षेपकतासाधनप्रयोजनीयता, नवाऽपि क्लिष्टकल्पनाऽऽवश्यकता, न वा कस्यापि प्रतिकूलवचनस्य भवति निगूहनाऽपेक्षा, नचापि कस्यचन वचनस्याऽमूलकत्वप्रतिपादनयत्नः, नवाऽपि भवति कस्याऽपि वचनस्य अप्रमाणत्वख्यापनाय मस्तिष्कक्लेशनाऽवकाशः, नचाऽपि परस्परविप्रतिपन्नवचसामेकवाक्यतोपपत्तये भवति विकर्षणचूर्णनविचूर्णनाद्यावश्यकता—इतितद्दर्शिनां नाऽज्ञातं स्यात् ।

ततोऽस्माभिः प्रथमवर्षीय 'सूर्य्योदये' ( सं० १९८२ ) तर्कचूडामणिमहाभागानां 'साङ्ख्ये ईश्वरवादः' दृष्टः । यत्र तैर्निरीश्वरवादित्वेन प्रसिद्धस्य साङ्ख्यदर्शनस्याऽपि मते ईश्वरसिद्धिः स्वशैल्या प्रकटीकृता । द्वितीयवर्षीय-'सूर्य्योदये' च ( सं० १९८३ ) अमीभिः साङ्ख्यसूत्राणां विज्ञानभिक्षुप्रणीतत्वे उपपाद्यमानानामुपपत्त्याभासानां निराकरणमकारि । एवञ्च तैरास्तिकदर्शनशास्त्राणां चित्राण्यपि प्रस्तुतानीत्यपि श्रुतम् । ततश्च षष्ठसप्तमादिवर्षीय 'सूर्य्योदय' सङ्ख्यासु अस्माभिः कर्म्ममीमांसादिदर्शनानां तत्कृतभाष्याणि 'पुराणरहस्यम्' इत्यादीनि च पुस्तकानि दृष्टानि; यत्र तेषां दार्शनिकज्ञानस्य बहुश्रुततया अश्रान्तगवेषणायाश्च परिचयोऽनायासं सम्पद्यते । बङ्गभाषाऽपि तैराराधिता । इत्थं पञ्चाशतोऽप्यधिकसुविस्तृतपुस्तकानामुल्लेखनादेभिः सुरसरस्वतीसेवा निःस्वार्थमकारि; तत एव काशीपण्डितमण्डलस्याऽभिनन्दनास्पदान्येतेऽभूवन् ।

एषास्ति वार्त्ता तेषां वैदुष्यस्य । तदीयाचारविषये त्विदमेव कथयितुं शक्यं श्रीविन्ध्येश्वरीप्रसादशास्त्रिमहोदयशर्म्मैर्यत्-ते त्यागस्य मूर्तिभूताः, शान्तेर्निकेतनं, देवर्षिपितृणामादरविश्वासयोरेकं स्थानं, दयादाक्षिण्यादीनामद्वितीयं निवासभवनं, सदाचारस्य प्रत्यक्षमुदाहरणम्, अतिथिसत्कारस्य एकमात्रमायतनम्, आर्षशास्त्राणां जङ्गम आलयः—ईदृशगुणगणविशिष्टा धर्म्मशास्त्रकृतां वचनेषु आ शैशवाद् विश्वसितारः परोपकृतिपराश्चाऽविद्यन्त ।

इमे हिन्दुविश्वविद्यालये साङ्ख्ययोगयोरध्यापकाः, भारतधर्म्ममहामण्डलस्य उपदेशकमहाविद्यालये च महामहाध्यापकाः सन्तो महामण्डलस्य प्राणरूपा व्यराजन्त। महामहोपाध्यायैर्महामहाध्यापकैश्चैभिरनेकशिष्या व्युत्पादिताः। एतेषां विषये श्रीगोपालशास्त्रिणां निम्नशब्दाः परमोपयुक्ता भान्ति।

"अपि मूर्त्तिधरः पतञ्जलिः
कपिलो व्यास उताऽद्य जैमिनिः।
कणभुङ् ननु गोतमो मुनिः
क इहासीद् बत! नो भवान् भुवि?॥
'निगमः कमुपाश्रयेत्, क्व ते—
स सदाचार इह व्रजेद्वद।
अतिथिप्रिय! हिन्दुसंस्कृति—
र्बत! दीना गृहिणं कमावसेत्?॥
अपि धर्म्मविधिं यथार्थतः
क उपेत्याऽद्य समन्वयिष्यति।
स पुराणनिधिः कमेष्यति
व्रतिनं स्वाऽर्थसमर्थकं बत!॥

ईदृक्षाणां दार्शनिकशिरोमणीनामृषिरूपाणामेषामात्यन्तिकवियोगेन तत्साक्षादपरिचितानामप्यस्माकं हृदि महती विषण्णताऽजृम्भत। अधुनैषां क्षतिपूर्त्तिरसम्भाविनी। भारतधर्म्ममहामण्डलोपर्ययमनभ्रवज्रपातोऽजनि। स्वा० श्रीदयानन्दमहाराजानां वियोगो महामण्डलेन विस्मृत एव नाऽऽसीत्; ततोऽयमन्यः सुदुस्सहो वियोगः समुपनतः। हन्त!!!। एतद्विषयेऽस्माकं 'सूर्य्योदय' कार्य्यालयेन, भारतधर्म्ममहामण्डलेन, तत्पुत्रादिककुटुम्बेन च सह खेदसमवेदना वरीवर्त्ति। परमात्मेद्दशाय महात्मने मुक्तिं, तत्परिवाराय च तद्वियोगसहनक्षमताञ्च वितरेदित्याशासानो विरमत्ययं जनः। शम्।

## अखिल भारतवर्षीयैकादशसंस्कृतसाहित्यसम्मेलन कार्य्यालयः अमृतसरनगरम्

सप्रश्रयं निवेदनमिदमस्ति यदस्माभिरत्र नगरे (२५) पंचविंशति दिसम्बरात् (३०) त्रिंशद्दिसम्बरपर्यन्तं महता उत्सवेन अखिलभारतवर्षीय संस्कृत साहित्यसम्मेलनं कारिष्यते। तदन्तर्गतानि चोपसम्मेलनानि भविष्यन्ति तद्यथा—

( १ ) छात्रसम्मेलनम्, ( २ ) महिला-संस्कृत-साहित्य-सम्मेलनम् ( ३ ) स्वर्गीय-कवि-प्रतिनिधि-सम्मेलनं ( ४ ) शिक्षासम्मेलनम् ( ५ ) नव साहित्य सम्मेलनम् ( ६ ) प्राचीन ग्रन्थप्रदर्शनी चेति ।

एतादृशयागस्य सफलतासम्पत्तये च महामान्यानां श्रीमतां निपुणमतीनां विदुषां दर्शनमत्यन्तमावश्यकमिति सानुनयमभ्यर्थये तदाऽलं कर्त्तुं सम्मेलनोत्सवमिति ।

सर्वैर्महानुभावैः स्वस्व प्रतिनिधयो निबन्धाश्च × १५ दिसम्बरात् पूर्वमेव प्रेषणीयाः । स्वेनसह शयनास्तरणमानेयं, प्राप्तितिथिश्चापि सूचनीया ।

सम्मेलने पठनीया निबन्धाः—(१) मुसलिमानसंस्कृतकवयः । (२) संस्कृत स्त्रीकवयित्र्यः । (३) संस्कृतभाषाज्ञानाय सरला सरणिः । (४) वेदाध्ययनाध्यापन-प्रचारः । ( ५ ) संस्कृतभाषा राष्ट्रभाषा कथं स्यात्, प्राचीनकाले चेयं राष्ट्रिय-भाषा आसीन्नवेति । ( ६ ) संस्कृत प्राकृतयोः पौर्वापर्यम् । ( ७ ) केचित्पाश्चात्या भारतीयाश्च संस्कृतसाहित्यस्य अश्लीलता दोषग्रस्तत्वमुदाहरन्ति, तत्सत्यं नवा ? ( ८ ) भूगर्भादुद्धृतेषु 'हडप्पा' 'महञ्जोदड़ो' इत्यादिषूपलब्ध वस्तुभ्योऽस्ति काचित्प्राचीनसभ्यतायाः संस्कृतसाहित्यस्य च प्रतिपत्तिः । ( ९ ) तन्त्रशास्त्रोक्तविधीनां सफलता सम्पत्तिः । ( १० ) योगशास्त्रप्रोक्तसिद्धीनामिदानीमनुपलम्भकारणं तासां चावश्यकत्वम् । ( ११ ) मैस्मरेज़म हिपनाटिजमादिभिः योगेन सम्बन्धः । ( १२ ) आयुर्वेद निघण्टोन्यूनतापरिहारोपायः । ( १३ ) श्रौतस्मार्त्तकर्मणां यागादीनां प्रचारोपायः तद्गतपरिभाषाणां, पद्धतीनां च प्रकाशनम् । ( १४ ) वेदस्य सर्वविद्या निधानत्वम् । ( १५ ) जैन बौद्धदर्शनानां वैदिकदर्शनैर्भेदाभेदौ । ( १६ ) परस्परं वैदिकदर्शनानां तदन्तर्गतानामद्वैतादिमतानां च समताविषमते ।

**समस्या पूर्त्यर्थश्लोकांशाः—**

( १ ) वसन्ति हि प्रेम्णि गुणा न वस्तुषु ।
( २ ) शाकाय वा स्याल्लवणाय वा स्यात् ।
( ३ ) केनापि नालोक्यते ।
( ४ ) न जातु मौलौ मणयो वसन्ति ।
( ५ ) पिपीलिका चुम्बति चन्द्रबिम्बम् ।
"निर्धन कुटीरम्" अस्मिन् विषये रचना च ।

**प्रस्तोतव्याः प्रस्तावाः—**

( क ) भारते संस्कृतभाषाध्यापने आंगलभाषाया माध्यमत्वे दोषः ।
( ख ) ज्योतिः शास्त्रशाखानां प्रचारः ।
( ग ) दानस्य संस्कृतेन सम्बन्धः, दानप्रणाली-संशोधनं च ।

× विलम्बेन अस्मत्समीपेऽत्र प्रकाशनाय विज्ञप्तिपत्रं समागतम्, तथापि प्रकाश्यते । स० सम्पादकः ।

( घ ) संस्कृतविद्यालयेषु प्रारम्भिकशिक्षायां हिन्दीभाषाया आवश्यकत्वं, सर्वेषां संस्कृतभाषा प्रोक्तानां विषयाणां च हिन्दीभाषायामेव संक्षेपतः शिक्षणम्।

( ङ ) मुख्यस्य शृंगाररसस्याधुनिकेषु अश्लीलता प्रतिपत्तिनिराकरणम्।

( च ) शिल्पविज्ञानविषयाणां सरलभाषायां ग्रथनम्।

( छ ) विश्वविद्यालय नियतसरणिसंशोधनम्।

( ज ) तिथिपत्रिका संशोधनम्।

( झ ) आद्यवर्णान्तिमाश्रमयोः संस्कृत प्रचारायावश्यकत्वम्।

( ञ ) वेदेषु पाश्चात्य पण्डितानामुद्भङ्कितदोषसमाधानम् किञ्च अस्माकं समीपं निम्नोलिखितानां मान्यविदुषां सम्मेलन प्रधानपदमलंकर्तुं नामानि प्राप्तानि, तेषां यः कश्चित्श्रीमतामभिप्रेतः स्यात्तदर्थं सम्मतिः सत्वरं प्रेषणीयेति तद्यथा—

( १ ) श्रीविद्यावाचस्पति श्रीपण्डितमधुसूदनझाशर्माणः राजपण्डिताः ( २ ) पं० श्री गिरधरशर्मा महामहोपाध्यायमहोदयः ! ( ३ ) पं० श्री रमापतिमिश्र प्रवराः ( ४ ) श्री पं० प्रमथनाथ भट्टाचार्य तर्कभूषणमहाशयाः ( ५ ) श्री १०८ शंकराचार्य महोदयाः। ( ६ ) श्री पं० ध्रुवमहोदयाः ( ७ ) श्री पं० विधुशेखरभट्टाचार्य महोदयाः ( ८ ) श्री पं० सुब्रह्मण्य ऐयर महोदयाः ( ९ ) महामहोपाध्याय श्री पं० हात्थी भाई शास्त्रि महोदयाः ( १० ) महामहोपाध्याय डाक्टर गंगानाथ झा एम० ए० महोदयाः ( ११ ) महामहोपाध्याय रायबहादुर श्री पं० गौरीशंकरहीराचन्द्र ओझा महोदयाः ( १२ ) महामहोपाध्याय पं० मथुराप्रसाद राज गुरु महोदयाः।

समयविभागः—

( १ ) २५ दिसम्बरे प्रधानस्वागतम्।

( २ ) २६ त्यां प्रातःकालात्मध्याह्नपर्यन्तं ( क ) स्वागताध्यक्षभाषणं ( ख ) प्रधाननिर्वाचनं ( ग ) प्रधानप्रवचनम् ( घ ) विषयनिर्वाचनसमिति-निर्वाचनञ्च।

( ३ ) तस्यामेव रात्रौ "स्वर्गीय-कवि-प्रतिनिधि सम्मेलनम्"

( ४ ) २७ त्यां ( क ) छात्रसम्मेलनम् ( ख ) महिलासंस्कृतसाहित्य सम्मेलनम् ( ग ) शिक्षासम्मेलनम् ( घ ) नवीनसाहित्यसम्मेलनम् ( ङ ) निबन्धपाठः समस्यापूर्तिश्च।

( ५ ) २८ त्यां मध्याह्न पर्यन्तं प्रस्तोतव्याः प्रस्तावाः प्रधानस्य धन्यवादादिकम्।

मध्याह्नोत्तर "हिन्दी की उन्नति में संस्कृत की आवश्यकता है या नहीं" अत्र विषये वादः।

मिहिरचन्द्रशर्म्मा पुष्करणा

प्रचारमन्त्री सम्मेलनस्य।

# सूर्योदयदशा।

[ ले० श्रीभूपनारायणझाः व्या० न्या० मी० सा० वेदान्ताचार्यः साहित्यरत्नञ्च
प्रधानाध्यापकः हाजीपुरीय र० सं० विद्यालयस्य ]

नियतसमयमाविर्भूय भूयश्छटाभि—
विंघटितजनतान्तर्ध्वान्तसन्तानकेन।
कतिपयदिनमर्वाग् वीक्षितेनेह तेने
विबुधजनविनोदोऽनेन सूर्योदयेन ॥ १ ॥

ज्येष्ठो यदा विलसतिस्म तदेकसेवी
"देवीप्रसाद"कविरुष्णितसर्वदिक्कः।
गीर्वाणवाग्जगति यः सुदिनं विधाय
भूदेवतानिवहमोहनिशामशासीत् ॥ २ ॥

सूर्योदयस्य सौभाग्यमेधमानमभूत्तदा।
यदा "नारायणः" साक्षादासीत्तमनुकम्पयन् ॥ ३ ॥

"विन्ध्येश्वरीप्रसादा"द्विन्ध्यप्रतिमेऽपि वारिते विघ्ने।
सूर्योदयः समन्तादप्रतिघातं पुरा प्रथते ॥ ४ ॥

अधुना तु—

गीर्वाणवाणीं द्विषतामाननेन्दुरुदञ्चति।
तस्मादायामिनीदानीमेधते मोहयामिनी ॥ ५ ॥

हरितश्छन्नाः परितः सन्तीदानीमनुद्यमैस्तुहिनैः।
तस्माद्विन्दति मान्द्यं सम्प्रति सूर्योदयः क्रमशः ॥ ६ ॥

गीर्वाणगीरसिकमानसशालिलोकाः
कोका इवाद्य वत ? शश्वदरीणशोकाः।
सूर्योदय-द्युतिकृते नितरामधीरा—
धीराग्रगण्य"मवधेश"मुपालभन्ते ॥ ७ ॥

अस्तु,—

तथापि नेदृग्विह्वलता विदुषामुपपद्यते

यतः—

कूर्माङ्गमिव सङ्कोचविकासनियतं जगत्।
पश्चादुपचयस्यैव हेतोः प्रागपचीयते ॥ ८ ॥

मया तु विश्वस्यते—

सूर्योदयमक्लेशः पुनर "वधेशः" प्रचारयेदधुना ।
जगदुन्नमनप्रवणं शरणं कृत्वाऽ"न्नदाचरण"म् ॥ ९ ॥

किञ्च—

योगजदृष्टिसनाथो "गोपीनाथो"ऽपि कारणं पश्यन् ।
सूर्योदयवैधुर्योद्धूननधुर्यो भवेदधुना ॥ १० ॥
स्वकीयस्फारसंस्कारविश्वविद्यालयोऽपि सन् ।
साकं शिष्यसहस्रेण विश्वविद्यालये वसन् ॥ ११ ॥
"**मिश्रश्रीबालकृष्णो**"ऽपि सतृष्णोऽस्तु समन्ततः ।
स्वस्य गद्येन पद्येन सूर्योदय-समृद्धये ॥ १२ ॥
सूर्योदयमुत्पश्येदप्यासीनः सरस्वती-भवने ।
"श्रीनारायणशास्त्री" गद्यैः स्वस्याथवा पद्यैः ॥ १३ ॥
**सभापतिरुपाध्यायः** प्रबन्धकसभापतिः ।
भूत्वाऽवन्ध्यप्रबन्धेन सूर्योदयमुदञ्चयेत् ॥ १४ ॥
"**मिश्रश्रीबालबोधो**"ऽपि मार्मिको धार्मिकोत्तमः ।
सूर्योदये दयादृष्टिकणं क्षणमपि क्षिपेत् ॥ १५ ॥
कविवर "**बदरीनाथो**"वितरतु सूर्योदये दयादृष्टिम् ॥
राधापरिणयवीक्षणवाधामुत्प्रेक्ष्य लोकस्य ॥ १६ ॥
सूर्योदयस्य सुषमामतिवेलं निभालयन् ॥
"**गोपाल**"स्त्रिदिवेशानां प्रचारयतु गां भुवि ॥ १७ ॥
श्रीमता वैद्यरत्नेन पाटलीपुत्रवर्त्तिना ॥
सूर्योदये दयादृष्टिर्देया "**व्रजविहारिणा**" ॥ १८ ॥
प्रत्येकं ग्राहकाः सन्तः कुर्वन्तो ग्राहकान्तरम् ॥
सूर्योदयमुदीक्षन्तां यथाकाले विचक्षणाः ॥ १९ ॥

---

* प्रबन्धेऽस्मिन् यथासम्भवं श्लेषो रूपकं ध्वनिश्च पाठकैरूहनीयाः ।

# शरदृतुः ।

( ले०—माध्यमिक आनन्द मोहनशर्मा टेहरी गढवाल )

प्रिय पाठकाः ! दृश्यतां तावद् विश्वसृजः सृष्टिवैचित्र्यम्। अत्र हि स्थावरजङ्गमेषु मानव एव सर्वेषां श्रेष्ठः। तत्र च मानवता समेषूच्चतरा। अत्र च 'अणोरणीयानित्या-रभ्य महतो महीयानिति पर्यन्तम्' सर्वविधमनुजानां कृते भगवता करुणावरुणालयेन परमेश्वरेण कर्मभूमिः स्थापिता। तत्र कर्मचारिणां कर्मकरणाय समयश्च निर्धारितः, यत् षष्टिभिः पलैरेका घटिका, सार्द्धद्वयघटिकाभ्यामेका होरा, चतुर्विंशतिभिर्होराभि-रहोरात्रम्। अहोरात्रसप्तकैः सप्ताहः। प्रायश्चतुस्सप्ताहैर्मासमेकं सञ्जायते। चैत्रादि-द्वादशमासैरेको वत्सरः। एकस्मिन्मासे द्वौ शुक्लकृष्णौ चेति पक्षौ भवतः। मास-द्वयेनैक ऋतुः। ते च वसन्त, ग्रीष्म, वर्षा, शरद्, हेमन्त, शिशिराः षडृतवः। तेषु शरदृतुरुपवर्ण्यते। ऋतुरयं सकलेषु ऋतुषूच्चतमः। अस्मिनृतौ विधातुरद्भुतमेव कर्म दृष्टिपथे पथिकायते। पुष्पितकाशैः समग्रा गोत्रा समाच्छन्ना, यथा वर्षर्तुः वृद्धा-वस्थामापन्नः स्यात्। नानाशास्त्रावगाहनश्रेष्ठ-विदुषां मनांसीवामल-सकमला सरिद् भेरीझङ्कारमिव कलकलकल्लोलं कुर्वती पापात्मनोऽस्माद्दशान् पावयन्ती स्वेष्टस्थानं समुद्रं प्रत्युद्गच्छति। दुष्करैर्दुष्कर्मभिस्सञ्चितास्सम्पद इव क्षुद्रनद्योऽपि शुष्यतां गता। भूः शुष्कपङ्का सञ्जाता। शैलशृङ्गेषु निवासिनः पक्षिण उपत्यकायां समायाताः। सूर्यजनितशारदिकं सन्तापं रात्रौ कलाधरश्चन्द्रः सुचारुचन्द्रिकाचयेनाऽपहरति। याचका भैक्ष्याय वैश्या व्यापाराय साधुसमाज उपदेशार्थं राजानो विजयार्थं फलतः सर्वेऽपि अनवरत-वर्षया सन्त्रस्तमानसाः साम्प्रतं निराकुला ससन्तोऽभीष्टपूरणार्थं देशं साऽपदेशं भ्रमन्ति। स्वच्छा वायवो वान्ति। प्रथमतः प्रारम्भकेऽस्मिन्नृतौ कन्या-गतपक्षः समायाति। आस्तिका जनाः स्वपितॄन् श्राद्धविधानेन तर्पयन्ति। तेषु दिवसेषु ब्राह्मणाः पुत्रोत्सववद् हर्षिता भवन्ति। एकस्मिन्नह्न्येव पञ्चषेषु गृहेष्वपि भोजनं कृत्वा पुनरपि भोक्तुकामास्तिष्ठन्ति।

ततः श्राद्धपक्षावसाने शुक्लप्रतिपदः प्रारम्भे ब्राह्मणाः प्रतिगृहं वेदीं निर्माय तदु-परि कलशं परितश्च सप्तधान्यान् विकीर्य श्रीमत्या भगवत्याश्चण्डमुण्डविनाशिन्या महिषासुररक्तबीजशुम्भनिशुम्भाद्यखिलासुरभासुरनिकरमर्दिन्या दुर्गाया आराधनं कुर्वन्ति। 'राजानश्च विजयादशम्यां शस्त्रास्त्राणि सम्पूज्य, कलशस्थजलाऽभिषेकानन्तरं ब्राह्मणेभ्य आशास्यं गृह्णन्ति'। सस्यादिगुणसम्पन्ना भूरासादितयौवना नायिका इव प्रतिभाति। अवनतशालिफलस्तवकशोभिनी भुवः श्रीः 'शरत्' स्वागतार्थं तिष्ठति। सरसिजैः सरांसि हृतप्रियादृष्टिविलासिनीनां शोभां धारयन्ति। परिभ्रमद्भिः षट्पदकुलैः पुष्पितलतामण्डपाश्चेतो मोहयन्ति। निर्मलाम्बरे निरम्बुरम्बुदः पृथिव्या आनुकूल्यं सूचयति। श्रवणानि शिखण्डिरववाञ्छां विहाय कलकलहंसनादश्रवणे

तिष्ठन्ति । परिपाकेन नताश्शालयः केदारोदकेषु समुत्पन्नानां कमलानां सौरभमाघ्रातुमिवोपलक्ष्यन्ते । ऋतावस्मिन् बहुविधानि सस्य, कोद्रव, कुलत्थ, मुद्गादीन्यन्नानि समुद्भवन्ति । अथ च 'कोजागरी' पौर्णिमासी आयाति, अद्य मानवा आकाशदीपदानम्, कुर्वन्ति । सत्यदेवव्रतपूजनानन्तरं विदारितनारिकेलस्थं चन्द्रकिरणसम्मिश्रितं दुग्धमुपभुज्यात्मानं चिरजीविनं मन्यन्ते मानवाः । अक्षैश्च दीव्यन्ति । अथ च कृष्णत्रयोदश्यां यमाय चतुष्पथे दीपो दीयते । चतुर्दश्यां अपररात्रौ ब्राह्मे मुहूर्त्ते विचेयतारकाङ्कित नभसि पक्षिगणकल्लोलिते महीमण्डले श्रोत्रियगणगीयमाने तथा बन्दिजनजालसंस्तूयमाने प्रभाते संस्नाय लाङ्गलोद्धृतमृत्तिकां करमर्दकं कटुतुम्बिकामपामार्गञ्चेति समादाय स्वस्योपरि भ्रामयन्ति नरकभीरवो नराः । ततः केदारोदकेषु कमलमुकुलेषु गुञ्जायमानमधुकरकलापेषु पूर्वस्यां दिशि जाग्रति भारतभाग्यभास्करेऽमावास्यादिनमायाति । अद्यप्रति गृहेष्वनुभित्ति सुधालेपितसौधेषु श्रीमहालक्ष्म्याश्चित्रचित्रणं कुर्वन्ति नराः । ततोऽस्तमिते नलनीनायके गगनप्राङ्गणे क्रीडति तारागणे निशामुखे परितोदीपमालया देदीप्यमाने सौधे भेर्य्याद्यवाद्यपुरःसरगन्धाक्षत-मधुरव्यञ्जनादिभिर्महामायां लक्ष्मीमर्चयन्ति । अन्येद्युः प्रतिपदायां कृषका नूतनान्नेन बलीवर्दान् श्रीकृष्णं भगवन्तं वासुदेवं पूजयन्ति । उत्सवोऽयम् 'बलिराजे'त्याख्यया व्याख्यायते लोकैः । अथ द्वितीयेऽहनि 'यमद्वितीया'भ्रातृद्वितीया वा विद्यते, अद्य भगिनीवन्तो जना भगिन्युदवसित एव भक्षयन्ति गृह्णन्ति च स्वसृहस्ताद् गन्धाक्षत-तैलादिकम् । ततः शुक्लैकादश्या दिने तुलसीविवाहप्रबोधोत्सवौ भवतः । अस्मिन्नहनि सर्वे हिन्दवो राधादामोदरौ पूजयन्ति । कृषकाश्च स्वक्षेत्रत इक्षुदण्डान् त्रोटयित्वा तैस्तथान्यैः फलमूलादिभिरर्चयन्ति तुलसीदेवीम्, जागरयन्ति च त्रैलोक्याधिपतिं हरिम् । एकादश्यैषा 'हरिबोधिनी'ति संज्ञायते । ततश्चतुर्दश्यां विकसितागणिततारागणे गगने क्रीडति च भगवति व्योमविहारिणि चन्द्रमसि, तिरस्कृत-चन्द्रिकाभिरभिमानवत्यलकापुरीरमणीये मन्दिरे रमणीभिः स्त्रीभिः पुरुषैश्च वैकुण्ठचतुर्दश्या उत्सवो मन्यते । तदा घृताक्तकार्पासनिर्मितवर्तिकाभिः सहस्राधिकसंख्यापरिमिताभिर्नरनार्यः, विष्णोरारार्त्तिक्यं विधाय प्रदक्षिणसमये स्वमन्दगतिभिर्मरालमपि विस्मारयन्त्यः, विष्णुलोकस्यैवानुकूल्यं कुर्वन्ति स्वहस्तगतदीपैः । अहो ! अनिर्वचनीयोऽयं दिवसः । अद्य पुरुषोत्तमस्य श्रीभगवतो मन्दिरे समायाति पशुपतिर्मन्मथशमनकः शिवः । एवमेव द्वितीयेऽहनि प्रातःकाल एव गङ्गायाः पूजनमारार्तिक्यञ्च कुर्वन्ति तथा रात्रावपि शिवमन्दिर उत्सवो भवति । अद्यैव भवशङ्करः शङ्करस्त्रिपुरासुरमप्यघातयत् । अहो ! साम्प्रतं गच्छति शरदृतुः । येनास्माकं मनसि नूतना भावा उत्पादिताः येन शबरीणां मनस्सु 'चारुचन्द्रिका-संक्रान्ततया मौक्तिकफलत्वेन सञ्चित-कर्कन्धूफलेम भ्रान्तिरुत्पादिता सोऽपि शशी साम्प्रतं शाम्यतामेति । इदानीं वनेषु विकसितकमलजाला अपि प्रोषितभर्तृका इव कृशत्वं गताः । नास्ति रात्रौ चकोराणां कलकलकोलाहलः कलहंसानां कलरवश्च । न

भवतीदानीं कश्चिदपि हर्षोत्पादक उत्सवः। इति गद्गद्गिरया लेखन्याश्वासामर्थ्यतया दुःखातिशोकेन विरम्यते। प्रार्थ्यते च परमात्मा यदेनमृतुवर्य्यमाशु समानयत्विति।

---

## श्रीकृष्णाष्टकम्।

( ले०—उमाचरणदीक्षित श्रीबलदेवसहाय सं० म० वि० नयागंज कानपुर। )

नवदूर्वादलश्यामं द्विभुजं पद्मलोचनम्।
सौन्दर्यसागरं वन्दे सुरासुरसुपूजितम्॥ १॥
धारयन्तं करे वामे मुरलीं नीलनीरजम्।
लीलाविहारिणं वन्दे सततं चपलेक्षणम्॥ २॥
लसन्नूपुरकेयूर-काञ्ची-कंकण-भूषिताम्।
राधिकां वामभागे वै समारोप्य विराजितम्॥ ३॥
मायातीतन्निराकारं साकारं निर्गुणं गुणम्।
शरीरवाङ्मनोऽतीतं तं वन्दे वनमालिनम्॥ ४॥
पीताम्बरं मन्दहास्यं विस्फुरन्तं मुहुर्मुहुः।
राधया सह दीव्यन्तं यमुनायाः तटे नवे॥ ५॥
बर्हिवर्हकृतापीडं कर्णिकारावतंसितम्।
वनपालं सदावन्दे राधया सह संस्थितम्॥ ६॥
सुध्युपास्यं मध्वरिं धात्रंशं लाकृतिं वरम्।
देवकीनन्दनं वन्दे कंसारातिमधोक्षजम्॥ ७॥
शरणं तव प्रपन्नाः स्म करुणावरुणालय!।
प्रसादं कुरु दीनेष्वेतेष्वस्मास्वपराधिषु॥ ८॥

---

## गुरु-स्तुतिः।

( ले०—रचयिता-रामस्वरूप विद्यार्थी मुम्बयीस्थः। )

श्री सम्पन्न-सुकान्त-कान्ति सहितो वेदान्त-विद्या युतो,
रेवा-नोर-समा शिवा तनु-विभा श्री मेघजिद्वंशजः।
बाह्याभ्यन्तर-शुद्ध-चित्त-सुखदो लक्ष्म्यापि शुश्रूषितः,
शं मह्यं प्रददातु सोऽत्र सततं रेवादिकश्शंकरः॥ १॥

कर्त्ता यस्तु 'शिखारहस्य' कुसुमस्यानन्ददाता धियः
रम्याश्चापि मनीषिणा विरचिता धर्मस्य नव्याः कथाः ।
गुर्व्योपाधिविभूषितः कविवरो डी० एल० शालास्थितः,
प्रेम्णा मामवलोकयेद्गुणगुरुः क्षुद्रं पुरोभागिनम् ॥ २ ॥
विज्ञानस्य निधिः पुरोहितवरो ज्ञानाग्निशुद्धायतिः,
द्यावाभूमिसनातनीकृतवपुर्देवीप्रभाया प्रियः ।
पादानाम्प्रपदीनधूलिरनिशं, कुर्याच्छिवं पापिनम्,
दद्याच्चापि सपुत्रिका गुणवती देवी प्रभा भावुकम् ॥ ३ ॥

## श्रीकृष्णस्तुतिः

ले०—भगवानदत्तशास्त्री 'कविरत्नम्'
( श्री जगन्नाथसंस्कृतपाठशालामुख्याध्यापकः काजडा )

गुञ्जन्मधुव्रत-निषेवित-मञ्जुकुञ्जे,
वंशी-विमुग्ध-वदनेन निनादयन्तम् ।
चञ्चच्चकोर-नयनं सजलाभ्र भासं-
स्मेराननं सकलदुःखहरन्नमामि ॥ १ ॥
वन्दे मुकुन्दमरविन्द-दलायताक्षं—
कुन्देन्दु-कन्द-दशनं शिशु-गोपवेषम् ।
ब्रह्मादि-देवगण-वन्दित-पादपद्-मम्
वृन्दावनाश्रयमहं वसुदेव-सूनुम ॥ २ ॥
वन्दारु-मन्दारममन्दवन्द्यम्,
जगज्जनुर्वीजमनाथनाथम् ।
विशालभालं नवकञ्जमालम्,
गोपालबालं सततं स्मरामि ॥ ३ ॥

## छात्र-जीवनम् ।

( लेखक—पं० श्री श्रीनाथझा मुखर्जी सेमिनरी, मुजफ्फरपुर )

अयि संस्कृतविद्यारसास्वादनपराः ! नाविदितमस्ति तत्रभवतां भवतां विद्वत्स-माजशिरोमणीनां यथावद्विधानि भूतानि परब्रह्मपरमात्मनः सृष्टौ प्राप्यन्ते । तत्र नराणामेव मुख्यत्वं स्वीकुर्वन्ति सर्वे । तस्यैव पुंसः चतस्रोऽवस्था ब्रह्मचर्य्यगार्हस्थ-वानप्रस्थसंन्यासाख्या विभक्ता दरीदृश्यन्ते । तत्र प्रथमाऽवस्था या तस्यां यस्तिष्ठति

स ब्रह्मचर्य्यव्रत-पालन पूर्वकं वेदं वेदौ वेदान्वाऽधीते। इयमेव छात्राऽवस्था प्रतिपाद्यते। चतसृणामवस्थानामियमाद्या मूलभूता वरीवर्ति। यस्य पुरुषस्य प्रथमेयमवस्था न सम्यक्तया परिपालिता सेविता वा याभि र्दोषकरीतिभिर्या अवलम्बमाना अस्माकं पूज्यचरणमहर्षय आर्यावर्त्ते चकाशिरे तस्याजागलस्तनस्येव जन्म निरर्थकम्। यतस्तस्यान्या अवस्था अपि भ्रष्टा एव बोधिता भविष्यन्ति यदा-वयं तस्य च्छात्रावस्थां शोचनीयाम्परिपश्यामः। इष्टकागृहनिर्म्माणे मूलभित्तेरिष्टिका यदि सुदृढा न कृता सन्ति तर्हि भित्तय अन्या या भवितारस्तासामपि दृढत्वमसम्भावितमेव। तथा अपरिपालितच्छात्रावस्थाकाश्छात्रा अपि गृहस्थवानप्रस्थसन्यासावस्थासु कथमपि न सफलीभूता भवितुमर्हन्ति। अतश्छात्रावस्था पूर्वोक्तास्ववस्थासु श्रेष्ठेति सिद्धम्।

अस्यामवस्थायां तिष्ठन् छात्रः साधारणं कार्यं केवलं न साधयति किन्त्वेकं महत्तमसुत्तरदायित्व कार्यं करोति। गुरोर्गृहे स्थित्वा "काकचेष्टी वकध्यानी श्वनिद्र ................." इत्यादि नियमानुयायी भवेत्। न च गुरोः सम्मुखे कदाचिदुच्चासने तिष्ठेत्। गुरुं कदापि नानुकुर्य्यात्। यत्र गुरोर्निन्दा भवेत् तत्र कर्णौ पिधातव्यौ वान्यतो गन्तव्यम्। गुरोराज्ञा कथंचित्कदाचिन्नावमन्तव्या। गुरुसन्निधौ सदा हीनाङ्गवेषः, गुरोः पूर्वं शयनादुत्तिष्ठेत् पश्चाच्च शयीत। दूरात्समिध आहृत्य प्रातः सायमतन्द्रितो भूत्वा विहायसि संनिधाय जुहुयात्। पञ्चमहायज्ञान्कुर्वतां गृहेभ्यो ब्रह्मचारी भिक्षामन्वहमाहरेत्। गुरोः कुले ज्ञातिबन्धुकुलेषु च कदापि भिक्षां न याचेत। अन्यगृहाणां त्वलाभे तु पूर्वं पूर्वं विवर्जयेत्। इत्थं ब्रह्मचारी गुरोः शुश्रूषां कुर्वन् गुरुगतां विद्यामधिगच्छेद्यथा खनित्रमादाय खनन्धरां वारि लभते।

छात्रश्छत्रमिव व्यवहरेत्संसारे। यथा छत्रं प्रचण्डमार्तण्डमण्डलमयूखेभ्यस्त्रायते नरं वर्षाभ्यो वा तथैव छात्रो गुरुमातृपितृज्ञातिबन्धून् विविधेभ्यः सामयिकासामयिकदुःखपुञ्जेभ्यस्त्रायते। छात्रा एव स्वधर्मानुकूलं कार्यं संम्पाद्य यदा गृहस्थाश्रमं प्रविशन्ति तदा बहुविधा भारास्तेषां शिरसि निपतन्ति। समये समये यदा महतां रोगाणामाक्रमणमस्माकं देशे भवति, अन्ये वारिवर्धनभूकम्पादय उत्पाताः समुद्भूय देशविध्वंसनं विधातुं प्रयान्ति, तदा त एव छात्राः छात्राऽवस्थायां नागरिकावस्थायां वा तिष्ठन्तो देशोत्पातपीडितान् भ्रातॄन् त्रातुं बद्धपरिकरा देशस्य कोणे कोणे सभासमितिद्वारा कार्याणि विभज्य कुर्वते।

अत एव ये छात्रा विद्यालये, महाविद्यालये वा पठन्ति तैः कदाप्यसावधानतया न पठनीयम्। उत च शोचनीयं प्रतिक्षणं मनसि यत्ते शिरसा गुरुमातृपितृदेशोद्धारऋणभारान्वहन्ति। तैः कदापि गुरुभिः सहान्यप्रतिष्ठितपुरुषैर्वा हास्यादिकं न विधेयं यतस्तत्र तेषां समयोऽमूल्यो मूल्यरहितपदं धत्ते।

# गुल्लरचिकित्सा-विज्ञानम्।

( ले०—धर्मनाथशास्त्री त्रिपाठी, आयुर्वेदाचार्य्यः, काशी )

परम-कारुणिकेन भगवता भूतभावनेन धरणीतले चम्पारण्यस्थ श्रीचन्द्रशेखरधर-मिश्रमहोदयद्वारा गूलर-चिकित्साविज्ञानमुद्भाव्य न केवलं मानवजातेरेव प्रत्युत पशु-पक्षि-सरीसृपादीनामपि महानुपकारः सम्पादितः। इदमौषधं विफलतां गतास्वपि सकल-चिकित्सासु रोगिणां चरमघटिकासु प्रतिशतं पञ्चनवतिसंख्याकान् रोगिणो नीरोगान्, सम्पादयतीत्यस्याऽनन्यसाधारणो गुणः। आर्थिककष्टमनुभवतां विपन्नजनानां कृते तु द्रव्यव्ययं विनैव सुलभेयं चिकित्सेति महतो महीयसीयमस्या उपकारिता।

सर्वतोऽधिकं वैशिष्ट्यं तथा सौकर्य्यं त्विदं विद्यते यदेतच्चिकित्सासाधनी-भूतस्य गूलरतरोः प्रतिग्रामं विद्यमानतया न कापि गवेषणाया नवा परिचयस्या-वश्यकता भवति। यथा ह्यस्या प्राप्तिः सुलभा तथैव व्यवहारोऽपि सरल एव। आन्तरिकरोगाणां कृते गूलरपत्रपेषणं विधाय तद्रसपानं, चर्वणान्ते जलपानमेव वा बाह्यरोगाणां कृते पिष्ट्वा व्रणादिषु तल्लेप एव परमं लाभं जनयति। पशुरोगोपशम-नार्थमेतच्चिकित्साप्रयोगस्तु सरलादपि सरलतरः। यतस्तेषां तु भक्ष्यमेवेदं गूलर-पत्रम्। बाह्यरोगाणाञ्च कृते तत्तत्स्थले तल्लेप एव विशेषतयाऽमृतमिव नैरुज्यं सम्पादयति। स्त्रीजातेरसाध्यरोगस्य श्वेतप्रदरस्य तु समूलमुन्मूलनं विधायेयं चिकित्सा नवजीवनमिव समर्पयति जीविताशारहिताभ्योऽबलाभ्यः।

एवमेवास्याश्चिकित्साया अनन्यसाधारणान्गुणानवलोक्य हिन्दूविश्वविद्यालयस्य सरसुन्दरलालमैडिकलकालेजे, आयुर्वेदविभागे, एलोपैथिकविभागे च प्राचुर्येण प्रयोगो विधीयते। कालिकात्तास्थश्रीमहामहोपाध्यायगणनाथसेन एम्० ए० एल० एम्० एस्० महोदयानां विश्वनाथायुर्वेदकालेजेऽपि चिकित्सेयं व्यवह्रियते।

एवं सत्यामपि सकलामयशमनसम्पादिकायां शक्तावेतस्याश्चिकित्साया विज्ञानेन-विरहिता एव बहवो वैद्याः सन्तीति महतो विषादस्याऽवसरः। एतच्चिकित्साद्वारा बहूनां विसूचिकारोगग्रस्तानां नैरुज्यप्राप्तिसमाचारा देशरत्न बाबू राजेन्द्रप्रसाद महोदयेन एडवान्स ( Advance ) प्रभृतिपत्रेषु प्रकाशिताः।

अतःपरं नवीनशासनविधानस्य सुयोग्यशासकमहोदयानामेतत्कर्म, यत्तै-श्चिकित्साया अस्या व्यवहारपुस्तकं "गूलर गुणविकाशम्" हिन्दी प्रभृतिभाषायाम् प्राइमरीप्रभृतिपरीक्षासु पाठ्यपुस्तकत्वेन निवेश्य जनताया उपकारः क्रियेत, आधुनिकचिकित्सासु चास्य उदुम्बरसारस्यावश्यं स्थानं दीयेत। अन्याऽन्य-स्वदेशीयवस्तुप्रचारवत् नितरां सुलभाया अस्याः स्वदेशीयचिकित्साया अपि प्रचारः सुतरां श्लाघनीयतरः।

—:०:—

# गोरक्षणम्।

( लेखकः—जगदीशचन्द्रो 'विद्यार्थी' लवपुरीय-ब्राह्ममहाविद्यालयीयः )

( पठियार—काङ्गड़ास्थः )

अयि! वैदिकधर्म्ममर्म्मावगमशालिनो धर्म्मध्वजधूननाभिमानिनः प्रक्षियमाण पापसारणोद्योगिनः! नेदमविदितं तत्रभवतां भवतां भावुकानां यद्वृन्दारक-वृन्द-वन्दिता पशु-जगत्प्रख्याताऽऽर्यजनैर्जननीत्वेनाभिमता गोमाता सङ्कटकङ्कासङ्कुले समयेऽस्मिन् कीदृश्यां शोचनीयायां दुरवस्थायां वर्त्तते। तस्या उपरि प्रत्यहं या कठिन-कुठाराणां वृष्टिर्बोभूयते तया कस्य सहृदयस्य हृदयं न दूयते, कस्य स्वान्तं शुक्सागरे समुन्मज्जन्न सन्तप्यते, कस्य वा दयार्द्रचेतसि सुचेतसि करुणारसस्निग्धा असन्दिग्धा भावा नाविर्भवन्ति? किम्बहुना सर्व एव 'हिन्दु' रित्यभिधानभाजः सङ्कटसन्तानवितानेन वेवेष्ट्यमाना गवानवनाधर्म्मजन्यसन्त्रासमापद्यमाना इव दुःसहमपि दुःखं सहमाना आसते। एषां समक्षमेव विदेशीया घातुकाः कललाभिलाषुका दीनामेतां निघ्नन्ति। किमेषेमानपकुरुतेऽस्मांश्चोपकरोति, किंवाऽस्मभ्यं समधिकं पयः प्रयच्छति एभ्यश्च-न्यूनतरम्। नैव वयमत्र किमपि कारणमुपलभामहे, यतो ह्येषा वर्जितविशेषा अशेषा-नेव मनुष्यान्समानदृशा संवीक्षमाणाः सुतानिव सम्पोषयति। तदप्येतेऽस्यां कर्कश-शस्त्राणि निपातं निपातं न विरमन्ति। नैर्घृण्यं नूनमेतत्। हा हन्त! धेनुवधं विदधाना निर्दया इमे न दयन्ते मनागपि, न त्रपन्ते किञ्चिदपि क्वचिदपि। नूनं निष्कारुण्यबीजनि-र्मिता न करुणायन्ते। हिंस्रसपरिप्लावितानि चेतांस्येषाम्। करुणारसविचारप्रचारो न सञ्चरति चेतस्स्वेषाम्। दूरे चास्तां तावद्धर्म्माङ्गतया अस्या रक्षणकरणम्। एतदीयौ-ल्लाभान्विन्दमाना अपि न निष्क्रयीकुर्वन्ति। सर्वे विश्व एव विदन्ति यद्धेनुदुग्धेन यावती मेधा समेधते, यावती च नीरोगतासाद्यते न तावदन्यदीयेन क्षीरेण। तदपि प्राणतां प्राणभृतां प्रियतरान्प्राणान्परिपालयन्तीमिमां पयःप्रस्राविणीं न प्रीणयन्ति। न प्रेमपाशपाशिताः प्राणानपि समुपहरन्ति।

अपि च देशोऽयं कृषिप्रधान आख्यायते। कृषिश्च वृषभानन्तरेण सुदुरुत्पादा कठिना खलु। तथा च यदि भूयो धेनुहननं सञ्जायेत तासां संख्या ह्रसिमानमासाद-यन्ती समधिकान्वृषभान्समुत्पादयितुं न शक्नुयुरेताः।

इदमस्मदीयं दौर्भाग्यं खलु यद्वयं हिन्दुबाहुल्योपेतेष्वपि जनपदेषु कृषिप्रधाने देशे च नैर्घृण्येन विधीयमानं धेनुहननं निवारयितुं न पारयामः। एषा च निष्कृपेभ्यः क्रूरेभ्यः सन्त्रस्यन्ती तरलितलोचना शरणमिव शरण्यान् (रक्षितॄन्) याचमानास्माकीनानि-आननान्यवलोकते। परं धिग्! अस्मानसमर्थान् ये रक्षणाय सम्प्रार्थ्यमाना अपि रक्षितुं नोद्युञ्जते। जनन्येवानया दैनन्दिनं सम्वर्ध्यमाना अपि न मातॄणमपाकुर्म्महे!

आस्माकीनेषु मनस्सु समुत्पद्यमानानां कारुणिकभावानां तत्रैव विलयो जायते। नहि ते कार्य्यरूपतामाधातुमवकाशलेशमपि लभन्ते। किमेभिराविर्भूतैर्भावैर्ये नाम-चेतस्सु प्रसूय तत्रैव विलीयेरन्। कार्य्यक्षेत्रेऽवतरीतुम्, अवतीर्य्य च कार्य्यरूपमासादयितुं समयं न विन्देरन्।

भूयांसो दयालवः श्रद्धालवश्चैनां स्नेहसम्भृता दृशा वीक्षन्ते परन्तेषामसौ श्रद्धालुता दयालुता वाऽकिञ्चित्करी खलु। यावत्पर्य्यन्तमेते श्रद्धावन्तः सम्बद्धदृढ़परिकराः कार्य्यक्षेत्रे पदं न निदधति तावद्गो-रक्षाऽसुरक्षैव। अतएव सर्वैरेव सङ्घटन-शक्तिमुत्पादयद्भिः गोरक्षणं निनादयद्भिः सम्भूय तथा प्रयतितव्यं यथा न चिरेणैव गोहननं सूदूरमपसरेत्।

---



## अयि मातस्तव बालः

नास्ति मदन्ते मन्त्रस्तन्त्रं, नच नैवेद्यं वस्त्रं पुष्पम्।
धूपो दीपः कोऽपि च नास्ति, केवलक्रन्दनशीलः, ॥
अयि मातस्तव बालः ॥ १ ॥

ज्ञातं नहि तव देवि चरित्रम्, किं कथयामि स्वीयं वृत्तम्।
दृष्ट्वा वक्त्रं ज्ञास्यसि सर्वम्, केवल-दर्शनशीलः ॥
अयि मातस्तव बालः ॥ २ ॥

ध्यायन् तेऽङ्घ्रिं रचयति लोकम्, ब्रह्मा रक्षति विष्णुः सर्वम्।
शम्भुस्तं संहरते भद्रे, दयनीयो मतिहीनः ॥
अयि मातस्तव बालः ॥ ३ ॥

मिथ्या जातं जन्मसहस्रं, नहि परिगीतं किञ्चिद्गीतम्।
शरणापन्न इदानीं जातः, भववारिधिभीभीतः ॥
अयि मातस्तव बालः ॥ ४ ॥

सौम्ये पश्य तवायं पुत्रः, दुःखं जल्पति साश्रुनेत्रः।
दुग्धं पाययसीति कथन्नो, भवभयनाशनशीलः ॥
अयि मातस्तव बालः ॥ ५ ॥

---

# उद्‌बोधनम् ।

निबन्धकः—पण्डित बामाचरण भट्टाचार्यः न्यायाचार्यः काशीस्थः ।



अहह ! मोहवता मद्यसागरे, निपतिते सहसा सति भारते ।
द्विज ! निजामयि ! मुञ्च विमुञ्च रे, सुखसुषुप्तिमकीर्तिमनन्तरम् ॥१॥
अतिपुरातन घातनतापदैर्गुणनवीनजनारणिजानलैः ।
अजनि धूमशिखाशिखरीकृते मनसि ते न हि दारुणवेदना ॥२॥
वचनमेव धनुर्वसुधाजयम् गुरुनिधाय विधास्यति मादृशः ।
इति विचिन्त्य मनः सुसरोवरे, किमधिकं पिवसीव सुखं पयः ॥३॥
मुहुरहो बहुपापघनागतप्रियसमाजविनाशशताशनेः ।
अतुलनीयगुणाचरणे सताम् शिरसि किं पतनञ्च सहिष्यसे ॥४॥
गतमितो भवतो बहुगौरवम् बहुलमानधने च गते पुनः ।
ननु तथापि कथं वद भीरुतामतितमामधुनापि निषेवसे ॥५॥
विलयतां यदि याति सनातनो विविधवेदविधिः सुधियां निधिः ।
अनशने मरणं स्वमनस्तदा, कथमहो न वृणोति धरामर ! ॥६॥
सनयनो यदि पश्य विमृश्य तं नियतपापरताश्रितभारतम् ।
परिणतिः समुपैति विभीषणे, तव वने गमनं मरणं बिना ॥७॥
स्मर पुरातनभारतमादरादजनि यत्र सती जनकात्मजा ।
अहह ! तत्र किमद्य न दृश्यते, बहुविवाहविधिर्विधवाकुले ॥८॥
स्मर च वीरवधूमधुनातनीमतिविकारवतीञ्च विलासिनीम् ।
त्यज पतिं यदि तेन न मेलनमिति सभास्वसतीमिव भाषिणीम् ॥९॥
बिपुलकालसमागतशर्मणि प्रहरतीव पदं यदि पातकी ।
वद तदाऽपि सदा भवतः सत स्तमपि निन्दति न व्यथितं मनः ॥१०॥
बद विदेशिपदाहतपापिनम् निजनिकेतनशत्रुविभीषणम् ।
वदतु मूढमतिः कतमः प्रभुस्तमिह रक्षति दाशरथिरथौ ॥११॥
अनुचकार विकारभरेण यः शतविदेशिमतं वत भारते ।
बहिरितः कुरुतं कृतपातकम् स्वजनदेशविरोधिनमादिमम् ॥१२॥
अंहरहः सह वेदसुधांशुना ग्रससि चेज्जननीं स्मृतिकौमुदीम् ।
कथय भारत पापविधुन्तुद ! ग्रससि किं पुनरेवमतः परम् ॥१३॥

दयित ! पृच्छ तु ते निजदेशिनः पतितपातकिनः कथयन्तु ते ।
ददति के परकीयपदे वृषाः शयनभोजनपानविधीनपि ॥१४॥
प्रलयकालतमः समुपागतम् सदसतश्चपलत्वमतिद्रुतम् ।
सपदि संहरतीव तव प्रभामितिविदस्तरणे मरणं वरम् ॥१५॥
स्वकुलघातकपातकवारणे निजकृतिर्विफला यदि मन्यसे ।
सुरविरोधिनिपातमभीप्सतो भगवतश्चरणं शरणं कुरु ॥१६॥

---

## गङ्गाशतकम् ।

( क्रमागतम् )

( ले०—पण्डित नारायणपति त्रिपाठि महोदयः काशीस्थः । )

कावेरि ! गोदावरि ! सिन्धुरेवे ।
श्रीताम्रपर्णी-सरयू-त्रिमार्गाः ।
पुनन्तु मां साभिधसप्तगङ्गाः
वाराणसीविश्रुतपञ्चगङ्गाः ॥२०॥

विवाह-कार्यस्य समाप्ति-सिद्धी,
यस्यास्सपर्य्यां न विना भवेताम् ।
महारथश्रीलभगीरथस्य,
रथानुगा स्तादभयाय गङ्गा ॥२१॥

दानेन पुण्येन जपेन पूजया,
स्नानेन तीर्थेन तपोभिरिज्यया ।
देवार्चया सज्जन-सत्यसेवया
लभ्यं फलं गाङ्गजलं मतं मम ॥२२॥

कपर्दिनः केशभरे भ्रमन्त्या,
यस्यास्तले चन्द्रकला नवीना,
सहस्रकृत्वः प्रतिबिम्बिताङ्गा
श्रीनीलकण्ठं कुरुते यथार्थम् (नटने प्रयुक्ते) ॥२३॥

अनेकजन्मान्तरसञ्चितानि,
महामहोद्योगविवर्द्धितानि ।
महान्ति पापानि ममार्जितानि
विनाशितान्यम्ब ! तवाम्बुलेशैः ॥२४॥

प्रभाते सन्ध्यार्थं तटगतमहीदेवकरतः,
परिभ्रष्टो यावन्मिलति सलिले कम्बलकचः ।
इमे मेषा स्तावन्नृजनिफलदा राशिगणिताः
स्वलोम्नां माहात्म्यात् त्रिदशपुरवासा स्समुदिताः ॥३५॥

क्वचित्स्फुटे भ्रमेरिते क्वचिद्दृषत्तिरोहिते,
क्वचिच्छनैश्शनैर्गते क्वचित्समुच्छ्वलत्प्लुते ।
क्वचित्स्वनत्तरङ्गिते क्वचिच्च नीरनीरवे
निलिम्पनिर्झरीझरे मनो ! मरालतां व्रज ॥३६॥

प्रायः स्वच्छं प्रभवति मनोहारि शैवालिनीनाम्,
कूलं मातस्तव तु जगति प्रेक्ष्यते किञ्चिदन्यत् ।
हित्वा रोगान् वितरति महाभोगयोगानमुत्र
पश्चान्मोक्षं करतलगतं कारयत्यम्बुपानात् ॥३७॥

क्वचिच्छ्रुतं नापि विलोकितं वा,
जले भवेद्दाहकशक्तिरम्ब ! ।
परन्त्वदीयं सलिलं सलीलम्,
दहत्यघौघान्महतो विचित्रम् ॥३८॥

पुमर्थसंसिद्धिकपाटकच्चा
अघौघविद्ध्वंसनदीर्घपच्चाः ।
सुराङ्गनालिङ्गनदानदच्चा
जयन्ति भङ्गास्तव भक्तरच्चाः ॥३९॥

यदि त्वं सहस्राम्बुधाराप्रवाहैः
समुद्रन्नगच्छेस्स्वयं धावनोत्का ( माना ) ।
अवश्यं स और्वेण दन्दह्यमानो
व्रजेच्छुष्कतां संशयः कोऽत्र मातः ॥४०॥

सन्त्यज्य गेहं गृहिणीसमेतम्,
कुटुम्बवित्तादिभिरेव साकम् ।
कदा त्वदीये पुलिने वसन्त-
मात्मानमेवं प्रभवामि कर्तुम् ॥४१॥

विलपति यमराजश्चित्रगुप्तेन सार्द्धम ,
कथय किमिह कार्यं गाङ्गवाहे मम स्यात् ।

द्विजगणपरितापी यस्सुरापी च पापी
तमपि वहति नन्दी पक्षिराजोऽथ हंसः ॥४२॥

भूत्वा विषादी भवशूलमेकम्,
त्यक्तुं प्रतीरं समुपाश्रयन्ते ( यः )।
महाविषादी भव एव साक्षात्,
त्वया त्रिशूली विहितस्स सद्यः ॥४३॥

तव स्तवे कः प्रभुरस्तु मातः!
सहस्रशीर्षः पुरुषोऽसमर्थः।
सहस्रनेत्रोऽप्यवलोकनाय,
सहस्रभोगी कथनेऽक्षमः स्यात् ॥४४॥

भवानि गङ्गे! कृपया यदा ते,
सहस्रबाहुः किल कार्तवीर्यः।
तदा पिबेयं सलिलन्त्वदीयम्,
भूत्वा सहस्रास्य इतीह याचे ॥४५॥

सहस्रशः सन्ति न किं तटिन्यो,
या स्नानमात्रेण हरन्ति पापम्।
परन्तु सा मुक्तिवधूस्त्वदीये,
वशे (जले-करे) सदा तिष्ठति निश्चयो मे ॥४६॥

याचे न गङ्गे! धनदस्य रिक्थम्,
न वा महेन्द्रस्य च राज्यलक्ष्मीम्।
सम्प्रार्थये बद्धकरद्वयोऽहम्,
सदा त्वदम्भोगतमीनभावम् ॥४७॥

पुरातनैः पण्डितराजिराजैः,
स्तव स्तवोऽभाण्यसमस्समस्तः।
तथापि खद्योतसमोऽहमद्य,
प्रकाशयिष्ये मिहिरं स्वभासा ॥४८॥

भगीरथकुलोद्धारि, त्रैलोक्यत्राणकारि यत्।
पापतारि मनोहारि, गाङ्गं वारि निपीयताम् ॥४९॥
राजते धनुषाकारा, राजमौलिपुरीसरा।
रामोत्तरामुखी धारा, राजीवमहिता वरा ॥५०॥

धन्यास्ते कृतिनस्त एव सफलं तेषां जनुर्जीवनम् ,
ते जाताः परमोत्तमा गुणिगणैर्गण्याः प्रणम्याश्च ते ।
तेषां पादयुगं वहन्ति शिरसा देवाः प्रमोदान्विता,
यैर्दृष्टं विधृतं निपीतमभितस्स्नातं त्वदीयं जलम् ।।५१।।

त्वत्तीरे मणिकर्णिका शिवपुरीमध्यस्थिताऽहर्निशम्,
वीचीभिर्मणिकर्णिकेव विधृता कर्णे स्वयं पाणिभिः ।
प्राप्तेभ्यः स्वतटं ददाति मनुजेभ्यो या पदं शाश्वतम्,
वन्दे तां कलिकल्मषौघशमनीं मन्दाकिनीं मुक्तिदाम् ।।५२।।

क्षणे क्षणे पातकिनः सहस्रशः
सन्तारयेयं निजवारिबिन्दुभिः ।
इतीव गर्वेण सफेनबुद्बुदै
र्निष्ठीवनं यानुदिनं करोति ह ।।५३।।

महामहापातकि – तारणेन,
त्वदीर्ष्यया श्यामलतामुपेता ।
यमस्वसा कृष्णपदस्पृशाऽपि,
तमालनीला यमुनाद्य (वि) भाति।।५४।।

गिरीशोत्तमाङ्गाद्गिरीशोत्तमाङ्गम्,
स्वधाराभिराभी रटन्तीं पतन्तीम् ।
महापातकानि स्वयं क्षालयन्तीम्
स्वभक्तानवन्तीं नुमो जह्नुजाताम् ।।५५।।

हरिद्वार आस्यं प्रयागे भुजाभ्याम्,
नदीभ्यां समेतेव काश्यां स्वहृच्च ।
स्वयं दर्शयन्तीं स्वपादाङ्गुलीभिस्,
स्पृशन्तीं नदीशं नुमो देवसिन्धुम् ।।५६।।

गर्जन्ति तावन्मम पातकानि,
ददन्ति दुःखं बहु तर्जयन्ति ।
भक्तानुकूलं तव देवि ! कूलं,
प्रयाति यावन्न समक्षमम्ब ! ।।५७।।

संवाहयन्त्वां स्वपदा मुरारिः,
कृष्णोऽभवत्सत्त्वगुणप्रधानः ।
निजोत्तमाङ्गेन दधत्पुरारिः,
कर्पूरगौरस्तम आदधानः ।।५८।।

विभूतिभूषितः कदा बसन्त्वदीयरोधसि,
नियम्य मारुतं निजं निमील्य नेत्रयुग्मकम् ।
विभूतिभूतिभासितं भवं विलोकयन् हृदि,
भवस्य वैभवं विहाय सम्भवेयमम्बिके ॥५९॥

मुक्तिप्रचारा भुवनप्रसारा,
विरागभाराः करुणावताराः ।
पापौघदाराः कृपरूपनारा—
यणप्रकारास्तव वारिधाराः ॥६०॥

किन्नेत्रे शिखिचन्द्रिके नु कथिते याभ्यां न दृष्टं जलं,
तौ कर्णौ विवरे मते नहि ययो र्मध्ये त्वदम्भोध्वनिः
सा दुष्टा रसना कथन्न रसितो दिव्यो रसस्ते यया,
कूपो वास्यमदो न यत्र विशति ब्रह्मद्रव स्तावकः ॥६१॥

यावन्तः पापनिष्ठा दुरितकुलरता स्त्यक्तसद्धर्ममार्गा,
मिथ्याचारप्रचारा मतिगतिरहिता नित्यवेश्याविहाराः ।
पित्रो र्द्रोहाऽब्धितीर्णा निजसलिललवै स्तारिता ये त्वयाद्य
तेऽतीता स्तारकाणां गगनतलगतानां च संख्यामसङ्ख्याः ॥६२॥

यथा यथा नीचजनान् करोषि,
चतुर्भुजाँश्चक्रगदादियुक्ता (हस्ता) न ।
तथा तथा तेऽपि पदा स्पृशन्ति,
कुपात्रदानात्कुफलं हि लभ्यम् ॥६३॥

यूनोऽपि मे या मलमूत्रसङ्घान्,
सदा वहन्ती कृपयैव मार्ष्टि ।
पानाशनार्थञ्च पयो ददाति,
नमामि तां मातरमादिशक्तिम् ॥६४॥

त्रयीमयीयं त्रिगुणप्रधाना,
त्रैलोक्य–कल्याणपरा त्रिमूर्तिः ।
त्रिदेवपूता त्रिदिवं नयन्तो,
त्रिमार्गगा मा मावतात् त्रिनेत्रा ॥६५॥

( पुनरग्रे )

# उत्तरे जिज्ञासा ।

लेः—'जिज्ञासुः'

मया 'सूर्योदये' दशमवर्षस्याऽन्तिमसङ्ख्यायां 'केचिन्' प्रश्ना व्यधीयन्त। तत्र व्याकृतिविषयकप्रथमप्रश्नद्वयस्योत्तरणं श्रीकेदारनाथत्रिपाठिमहोदयेन दातुं द्वादशवर्षीय-'सूर्योदय'स्य ४-५-६-७ इति संयुक्तसंख्यायां चेष्टा कृता। तदर्थं तन्महोदयाय धन्य-वादं वितरामि। परं तदुत्तरे मम काचिज्जिज्ञासा वर्त्तते। सा चेयम्—'आव-श्यक शब्दे' तत्र भवता 'कोपधादण्' ४।२।१३२ इत्यण् समर्थितः; परं स तु 'देशे' वाच्ये भवति; स चाऽण् जनपदवुञोऽपवादः; अत एवाऽस्योदाहरणम् 'ऋषिकेषु जातः आर्षिकः, माहिषिकः, ऐक्ष्वाक इति वर्त्तते। तस्य 'आवश्यक' इति सामान्यशब्दे प्रवृत्तिस्तु न युक्ता। तस्मादत्र उत्तरान्तरमपेक्ष्यते।

'पृणध्यै' इति प्रश्नाशयस्तत्र भवता सम्यङ् न ज्ञातः। तत्र मम केवलमयं प्रश्नो यत्—'पृणध्यै अत्र अध्यैन् प्रत्ययत्वात् कथं न गुणावकाशः? अत एवैतदुदाहरणं कध्यैन एव मत्वाऽध्यैन उदाहरणान्तरं देयम्; यथाच काशिकाकारेण 'उपाचरध्यै' इति दत्तम्, श्रीमता च 'गमध्यै' इति दत्तम्। तथा दीक्षितेनाऽप्यन्यदुदाहरणीय-मासीत्, 'पृणध्यै' इति कथं दत्तम्? इत्येव मत्प्रश्नाशयः। आशासे उत्तरकृन्महा-शयः पुनरत्र लेखनकष्टमूरीकुर्यादिति।

---

# मुक्तिनिरूपणम् ।

( निबन्धकः—श्रीवामाचरणभट्टाचार्यः, न्यायाचार्यः )

परिदृश्यमाने वस्तुभूते तावदस्मिन् द्वैते जगति नानाविधं नाम दुःखं वर्त्तते। किञ्चिद् रोगादिजनितम्, किञ्चित् पश्वादिकृतम्, किञ्चिच्च कामक्रोधादिजनितम्। तत्-सर्वमेव प्रतिकूलतया ज्ञानविषयीभूतं दुःखं प्रत्यात्मवेदनीयं देहवति वर्त्तमानमपि सर्वेषा-मेव जिहासाविषयीभूतं भवतीति तद्धानकारणमनुसन्दधानाः श्रेष्ठतमे सकलशास्त्रार्थ-प्रकाशकतया प्रदीपायमाने न्यायशास्त्रे एव प्रवर्त्तन्ते मुमुक्षवः। तच्च न्यायशास्त्रं स्वप्रतिपाद्यप्रमाणादिपदार्थतत्त्वज्ञाने मोक्षकारणतानिश्चयं जनयित्वा परम्परया मोक्ष प्रयोजकं भवतीति प्रतीयते। सर्वं हि दुःखकारणं दुःखम्, सुखमपि दुःखानुषङ्गितया दुःखं दुःखमिति भावयन्तः सन्तो वैराग्यं प्राप्नुवन्ति। विरक्ता एव जना मोक्षाधिका-रिणः प्रमाणादिपदार्थतत्त्वज्ञानाधीनमिथ्याज्ञाननिवृत्तिपरम्परया परमपुरुषार्थं मोक्षं लभन्ते। स च मोक्ष आत्यन्तिकदुःखध्वंसस्वरूपः। दुःखध्वंसे आत्यन्तिकत्वं नाम, यदीयदुःखध्वंसः दुःखप्रागभावसमानकालीनस्तदन्यपुरुषीयत्वम्। तद्विशिष्टेन च दुःख-ध्वंसेन मोक्षभावमावहता पुरुषप्रयत्नविषयीभूतेन भवितव्यमिति न्यायसिद्धान्तः।

ये तु मन्यन्ते ब्रह्मस्वरूपताप्राप्तिरेव मुक्तिरिति, सिंहदशनायमानाया द्वैतापत्ते र्भीति-मापन्नानां तेषां मते तादृशप्राप्तेरपि ब्रह्मात्मकतायाः सर्वथाऽवश्यकतया, ब्रह्मस्वरूपस्य

च नित्यत्वेन असाध्यत्वात् पुरुषाणां मोक्षे प्रवृत्तिरेवानुपपन्ना सम्पद्येत। नहि सर्वकालीने नित्येऽसाध्ये च वस्तुनि कस्यचित् प्रवृत्तिरुपलभ्यते।

नवा प्रकृतिपुरुषयोर्भेदप्रत्ययस्यैव मुक्तित्वं सम्भवति। अभिन्नत्वे तयोर्भिन्नत्वस्य वक्तुमशक्यत्वात्। भिन्नयोस्तु तयोर्भेदप्रत्ययस्य सर्वकालीनतया सर्वदैव सर्वेषां पुरुषाणां मोक्षप्रसङ्गः स्यात्। भिन्नमभिन्नमभिन्नं वा भिन्नमिति तु न यौक्तिकं नवानुभविकम्। नहि युगसहस्रेणापि घटभिन्नमेव पटं ब्रह्मापि घटयितुं शक्नोति न च कुण्डलवलययोः कुण्डलत्वादिना भिन्नत्वेऽपि सुवर्णत्वेनाभिन्नताया दृष्टतया भिन्नमप्यभिन्नं भवतीतिवाच्यं तथा सति प्रमेयत्वेन सर्वदा प्रकृतिपुरुषयोरभिन्नत्वेन पुरुषाणां सर्वदा मुक्त्यभावापत्तेः प्रकृतित्वादिना तयोर्भिन्नत्वेन प्रकृतिप्रणयिनामपि पुरुषाणां सर्वदा मोक्षापत्तेश्चेति ध्येयम्।

यत्तु नित्यसुखाभिव्यक्तिर्मुक्तिरितिभट्टैरभिहितम्, तदप्यसङ्गतम्। नित्यस्य सुखस्याभिव्यक्तिः साक्षात्कारः, तस्य मोक्षदशायां सत्त्वे प्रमाणाभावात्। तादृशाभिव्यक्तेरपि नित्यत्वाभ्युपगमे सुखतदभिव्यक्त्योर्द्वयोरेव नित्यतया सर्वकालीनत्वेन मुक्तस्येव संसारिणोऽपि जीवस्य नित्यसुखसम्भोगप्रसङ्गः स्यात्। न चेष्टापत्तिः सांसारिकसुखदुःखानुभवकाल एव जीवानां नित्यसुखभोगप्रसङ्गापातात्। नहि तयोर्यौगपद्यं कदाचिदपि सम्भावनीयम्, तादृशयौगपद्यस्य सकलतन्त्रासिद्धत्वात्। यदि च साऽभिव्यक्तिरनित्या योगसमाधिजनितधर्मसहकृतादात्ममनःसंयोगादुत्पद्यते इत्युच्यते, तदा धर्म्मस्य चरमफलविनाश्यतया धर्मनाशे नित्यसुखाभिव्यक्तेरपि नाशाभ्युपगमस्यावश्यकतयाऽनिर्मोक्षप्रसङ्गः स्यात्। नहि धर्मस्यापि नित्यत्वं युक्तिसिद्धं उत्पत्तिधर्मकत्वेन तत्रानित्यत्वस्यैवानुमानात्। नच सुखप्राप्त्यर्थमेव लोकानां प्रवृत्तिदर्शनात् सुखार्थिनमुद्दिश्यैव मोक्षोपदेश इति वाच्यं दुःखनिवृत्तेरेव मोक्षोपदेशविषयतया तत्रैव मुमुक्षूणां प्रवृत्तिदर्शनात्। सुखस्य नित्यत्वे नानुमानं प्रमाणं लिङ्गाभावात्। नचानन्दं ब्रह्मणोरूपं तच्च मोक्षे प्रतिष्ठितम्। "रसो वै सः", "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्याद्यागम एव मोक्षदशायां नित्यसुखसत्त्वे मानमितिवाच्यं निरुक्तागमघटकानन्दादिपदस्य दुःखनिवृत्तिपरत्वात्। सामयिकज्वरादिनिवृत्तौ सुखीतावदहमित्यादि प्रत्ययस्याबाधिततया दुःखनिवृत्तितात्पर्यकसुखशब्दस्य बहुलमुपलभ्यमानत्वात्। किञ्च नित्यसुखसम्भोगमकामयमानानां तत्र प्रवृत्तिरेवानुपपन्नेत्यतो मोक्षदशायां कामनावत्त्वाभ्युपगमेऽनिर्मोक्षः स्यात्, कामनाया बन्धप्रयोजकत्वात्। एतेन श्रुतीनां मुख्यार्थत्वसम्भवे गौणार्थत्वकल्पनमयुक्तमित्यपि समाहितम्। मोक्षकाले नित्यसुखसम्भोगमभ्युपगच्छतां मतेऽपि "अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इत्यादि श्रुतिघटकप्रियपदस्य जन्यसुखे लाक्षणिकत्वस्यावश्यकत्वाच्च। तस्मादस्मादपितन्त्रान्तरसिद्धान्तान्न्यायसिद्धान्त एव समीचीन इति युक्तमुत्पश्याम इति सङ्क्षेपः।

# मम मातृभूमिरेषा।

( देश-गीतिः )

( साहित्यरत्नं श्रीमदीशदत्तपाण्डेयः 'श्रीशः' 'शास्त्री, काव्यतीर्थः, काशी। )

मम मातृभूमिरेषा
मम पितृभूमिरेषा ॥ ध्रुवम् ॥

( १ )

गुञ्जन्मधुव्रतानां
सुषमासमञ्चितानाम्
दन्तावली लतानाम्
मुग्धाऽतिमुग्धवेषा
मम मातृभूमिरेषा ॥

( २ )

रविचन्द्रकान्तिकान्ता
मलयेन चालितान्ता
चञ्चद्वनान्त-तान्ता
प्राण-प्रिय-प्रदेशा
मम मातृभूमिरेषा...॥

( ३ )

रामोऽभवत्कदाचित्,
श्यामोऽभवत् कदाचित,
वामोऽभवत्कदाचित्-
अंशा हरेर्विशेषाः,
मम मातृभूमिरेषा... ॥

( ४ )

यत्रार्णवाः स-भङ्गाः,
गङ्गा च सत्तरङ्गा।
गगनङ्गतप्रसङ्गाः
यस्यां धराधरेशाः
मम मातृभूमिरेषा......!!

---

गीतिरेषा 'द्वारवङ्ग' मण्डलान्तर्गत 'जोगियारा' नरेन्द्रेण श्रीललिताप्रसाद-चतुर्धुरीणेन २५) रुप्यकैः पुरस्कृता।

## दीपावली ।

( ले०--पण्डित विश्वनाथ व्यासः, सहायकाध्यापकः, संस्कृतपाठशाला उरई )

आयासि फुल्लवदना प्रतिवर्षमत्र,
विज्ञापनाय शुचिदीपमहोत्सवस्य ।
किन्तु ब्रवीमि सुरलोककृताधिवासे,
दीपावलि त्वमसि देशदशानभिज्ञा ॥ १ ॥

स्वातन्त्र्यसौख्यरहिते द्रविणेन हीने,
देशे विदेश्यधिकृते सततं वसन्तः ।
भोज्यात्यभावविलपत्पृथुकाः कृषाणाः,
कुर्युः कथं हि वद देवि ! शुभागतन्ते ॥ २ ॥

ये मानवा स्तृणमयेषु गृहेष्वुषित्वा,
दीपं विनैव बहुधा क्षपकाः क्षिपन्ति ।
दारिद्र्यदुःख-दलिता विहितोपवासा
दीपोत्सवं कथय ते तु कथं विदध्युः ॥ ३ ॥

हे पर्वमौलिमणिके ! व्रज लध्वितस्त्वम्,
देशे न सन्ति तव केऽपि महत्त्वविज्ञाः ।
किं मौक्तिकप्रणयिमानसराजहंस
आगत्य पल्वलतटे लभते स्वपूजाम् ॥ ४ ॥

आसाद्य तां हि त्वयका पुनरेष देशो
मुच्येत यर्हि निगडात्परतन्त्रतायाः ।
गीर्वाणवाग्विलसितैः परमैः स्तवैस्त्वाम्,
स्तोष्यन्ति भक्तिप्रवणाखिल-भारतीयाः ॥ ५ ॥

---

# मामकीननिबन्धानां सिंहाऽवलोकनम्।

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः
( स० ध० कालेजस्य उपाचार्य्यः; मुलतान )

बहवः प्रशस्या वयस्या मामकीनसर्व्वनिबन्धानां शीर्षकप्रकाशनाय मामागृह्णन्ति। तदाग्रहपूर्त्त्यै उद्यच्छेऽहमद्य। तत्र प्रागिदं वक्तव्यं नाऽप्रयोजनीयं मन्येत यदमीषां निबन्धानां प्रवृत्तौ प्रधाननिदानं 'सुप्रभात' 'सूर्य्योदय' पत्त्रयोर्भूतपूर्व्वसम्पादकः श्रीविन्ध्येश्वरीप्रसादशास्त्रिमहाभागः; तेन कृतज्ञोऽस्मि तत्कृते। मया एकविंशतिवर्षवयस्कतायां सर्व्वतः प्राग् यः पञ्चपद्यबद्ध एको लेखः 'सुप्रभाते' प्राहीयत; सोऽद्य चतुस्त्रिंशद्वयस्कत्वे मद्दृष्टौ साधारणम्, किन्तु प्रभूतनर्थकपदसंवलिततां मुद्रणायाऽनत्यावश्यकताञ्च बिभर्त्ति। परं तदानीं तत्पत्त्रसम्पादकेन श्रीविन्ध्येश्वरीप्रसादशास्त्रिमहोदयेन अपरिचयेऽप्यसौ लेखः सोत्साहं शीघ्रञ्च प्रकाशितः। तत्प्रकाशनम्, अग्रिमलेखानां कृते उत्साहनञ्च, पर्य्यायवाचकमिवाऽभवत्। एतस्माद् अन्यैः सम्पादकैरपि शिक्षा ग्राह्या। यत्—ते कस्याऽप्युत्साहिनो लेखकस्याऽऽद्यं निबन्धं कामं साधारणमपि स्वयं साधु सम्पाद्य अवश्यं प्रकाशयन्तु। अन्यथा सम्पादकतागर्व्वात् प्रथमप्रथममेव तत्तल्लेखकस्योपेक्षितोऽप्रकाशितश्च लेखो भविष्यत्कृते तस्य जाड्यकारणं भवेत्। समाचारपत्त्राणां लाभो लेखकानां भूयिष्ठसङ्ख्यायामुत्पादनमेव, यदि सम्पादका उत्साहिनां लेखकानां विघातायैव प्रमाणपत्रम् ( Certificate ) लभेरँस्तर्हि तादृशा दूरतो नमस्कर्त्तव्याः स्युः। अस्तु। अस्य महाभागस्य सम्पादकतायां बृहदाकारे 'सुप्रभात' प्रथमवर्षे मम पञ्च कवितालेखा मुद्रिताः। अथ च अदसीयसम्पादकत्वे एव 'सूर्य्योदये' मम एकविंशतिर्लेखाः ( ६ पद्यमयाः, १५ गद्यमयाः ) प्रकाशिताः। तदनन्तरमयं 'सूर्य्योदयेन' सह स्वसम्बन्धमच्छिनत् *।

तदुत्तरमस्मद्धन्यवादभाजनं श्रीमान् पं० अवधेशप्रसादद्विवेदः काव्यतीर्थः 'सूर्य्योदय' स० सम्पादको वर्त्तते। अयमपि महाभागो मामात्मीयनिर्व्विशेषं मन्वानो मदीयाः सर्व्वविधाः प्रेरणाश्चाऽऽद्रियमाणः † 'सूर्य्योदय' स्याऽऽरम्भादेव मल्लेखानां प्रकाशने व्याप्रियमाणोऽद्यापि 'सूर्य्योदयेन' सह मां सम्बध्नन्नास्ते। अस्य श्रीमतः सम्पादकतायां मम बहवो निबन्धाः प्रकाशिताः; प्रकाश्यन्ते,

* अच्छिनत्। छिनत्तेर्लङि। † आद्रियमाणः—कर्त्तरि शानच्, एवं 'व्याप्रियमाणः'।

अग्रे प्रकाशयिष्यमाणाश्च। अस्य सम्पादनसमयेऽपि 'सूर्य्योदय' स्य सुषमा उन्नाममभार्षीत्।

तदनन्तरं न्यायाचार्य्य श्रीगिरीशशुक्लसम्पादकतायाम् 'सुप्रभातेन' मम सम्बन्धो जातः। ततः श्रीकेदारनाथसम्पादकत्वेऽपि मम लेखाः प्रकाशिता अमुत्र पत्रे। ततः 'सुप्रभातम्' अस्तं जातम्। ततस्तस्य पुनः प्राकट्येऽपि मम लेखास्तत्र समुदिताः। १९२८ ईशवीयेऽब्दे 'लवपुरे' श्रीनृसिंहदेवशास्त्रि श्रीपरमेश्वरानन्दशास्त्रि-सम्पादकतायामुद्योतपत्त्रं प्रकाशितम्; तत्राऽपि मम निबन्धाः प्रकाशिताः। एकवर्षान्ते 'उद्योतः' अस्तमितः। ततोऽमृतसरनगराद् 'अमरभारती' श्रीसीताराम-शास्त्रिसम्पादकत्वे प्रकाशिता; तत्राऽपि ममैको निबन्धो मुद्रितः; ततोऽङ्कत्रितयं स्वकीयं प्रकाश्येयमपि पत्त्रिका लोपमापद्यत। अथ लवपुरीये 'ओरियण्टल कालेज-मेगज़ीने'ऽपि ममैको निबन्धोऽमुद्र्यत। ततो जयपुराद् म० म० श्रीगिरिधरशर्म्मभिः श्रीसूर्य्यनारायणशास्त्रिव्याकरणाचार्य-भट्टश्रीमथुरानाथशास्त्रिसम्पादकत्वे १९३३ ईसवी-येऽब्दे 'संस्कृतरत्नाकरः' प्राकाश्यत। अहमपि तेन स्वं समबध्नाम्।

ततः श्रीनगरप्रकाशितया त्रैमासिक 'श्री' पत्त्रिकया, काशीप्रकाशितया 'अमरभारती' पत्त्रिकया 'वल्लरी' पत्त्रिकया च मम सम्बन्धोऽभूत्। तत 'आगरा' प्रकाशितायाम् 'कालिन्दी' पत्त्रिकायामपि मम लेखः प्रकाशितः। ततो 'बेलगाम' प्रकाशितायाम् 'मधुर-वाणी' पत्त्रिकायामपि मम निबन्धाः प्रकाशिताः। १९९२ वर्षे अयोध्यायां प्रकाशितेन साप्ताहिकेन 'संस्कृतम्' पत्त्रेणाऽपि मम लेखदान-सम्बन्धोऽभूत्। इत्थं संस्कृतपत्त्रेष्वेषु मम बहवो लेखाः प्रकाशिताः। येषां सूची अग्रे दीयते। यद्यपि मम विचारः संस्कृतपत्त्रेष्वेव लेखप्रदानस्याऽऽसीन्न हिन्दीपत्त्रेषु; तथापि पं० श्रीकालूरामशास्त्रिमहोदयस्याऽनुरोधात् तदीये 'हिन्दू' नामकहिन्दीपत्त्रेऽपि सनातनधर्म्मविषयका मम लेखाः प्रकाशिताः। अधुनाऽत्र यावत्प्रकाशितानां स्वनिबन्धानामहं शीर्षकाणि तत्पृष्ठसङ्ख्यां तत्तत्पत्त्राऽङ्कनिर्देशञ्च विदधामि। प्रणयिपाठकाः प्रणिहितदृष्ट्या पश्यन्तु—इति निवेद्य तत्सूचीं प्रारभे।—

## 'सुप्रभाते' मुद्रितानां मम निबन्धानां सूची।

(सं० १९८१–८३–८५)

१ 'प्रेरितपत्त्रम्'—प्रथमवर्षस्य चतुर्थसंख्यायां पञ्चपद्यात्मकम् अर्द्धस्तम्भे। २ 'उपवासः'–१ वर्षे षष्ठसंख्यायां सप्तपद्यात्मकः पादोनस्तम्भे। ३ 'हिन्दुषु दुराचरणम्' १।७ अष्टपद्यात्मकम् एकस्तम्भे। ४ 'प्रश्नः'—१।८ द्वादशपद्यात्मकः सार्द्धस्तम्भे। ५ 'उत्तरम्'—१।१० चतुर्विंशतिपद्यात्मकं सपादस्तम्भद्वये। ६ 'नामधामगुप्तिः'—तृतीयवर्षस्य ६–७ संयुक्तसंख्यायाम् अर्द्धस्तम्भे श्लोकत्रयात्मिका। अस्या उत्तरम् अष्टसंख्यायां श्रीदेवीप्रसाद शुक्लकविचक्रवर्त्ति प्रभृतिभिर्विद्वद्भिर्दत्तम्। ७ पञ्चनद्रीयो-

विश्वविद्यालयः—३ वर्षस्य ९-१० संख्ययोः समाप्तोगद्यमयोऽष्टसु स्तम्भेषु । ८ शिवराजविजयविमर्शः—पञ्चमवर्षस्य विशिष्टाङ्के गद्यमयः ५ स्तम्भेषु । ९ सुरभारतीप्रणयिनां कर्तव्यम्—५।३।४ पादोनचतुःस्तम्भे । १० सहानुभूतिपत्रम्—५।१० अर्द्धस्तम्भे ।

## सुप्रभातम् ।

( दशमवर्षे १९९१ )

११ ज्यौतिषविषयकज्ञातव्यवार्त्तासंग्रहः—३ संख्यायां स्तम्भद्वये । १२ भारतदुर्ग भङ्ग प्रसङ्गविवरणम्—५ सं० सपादस्तम्भद्वयमयम् । १३ संस्कृत्रिमा गद्यमय्यः सूक्तय —६-७ सं० स्तम्भपञ्चके । १४ ज्यौतिषविषयकज्ञातव्यवार्त्ता संग्रहः—१० सं० सार्द्धस्तम्भत्रयम् । १५ स्वरादिमानिसुभाषितानि—१३-१४ सं० स्तम्भचतुष्के । १६ स्पर्शादिमानि पद्यरत्नानि—१५-१६ सं० ८ स्तम्भेषु । १७ अन्तःस्थाद्याः पद्यमयसूक्तयः—१७-२० सं० पादोनस्तम्भत्रये । १८ स्पष्टचन्द्राज्जन्मनामादिमाऽक्षरज्ञानम्—२१-२४ चतुर्षु स्तम्भेषु ।

## सुप्रभातम् ।

( एकादशवर्षे १९९२ )

१९ किं प्रह्लाद ऐतिहासिकव्यक्तिर्नासीत ? १ संख्यायाम्, ६ स्तम्भेषु । २० मेदपाट गौरवम्—८ सं० ६ स्तम्भेषु । २१ ब्रह्मचर्य्यम्—( अपूर्णम् ) १० सं०, स्तम्भत्रये ।

## सुप्रभातम् ।

( द्वादशवर्षे १९९३ )

मम 'ब्रह्मचर्यं जीवनस्य पर्य्यायः' 'ब्राह्मणानामपि वेदत्वम्' 'कतिपय न्यायास्तद्विवरणञ्च' इति लेखत्रयम् 'सुप्रभात' सम्पादकस्य पार्श्वे वर्त्तते । परं १९९३ संवत्सरादद्य यावत् । 'सुप्रभात'स्य पुनर्दर्शनं न जातम् । इदं चतुर्थवारं तस्याऽदर्शनम् ।

## सूर्य्योदये प्रकाशितानां मन्निबन्धानां सूची ।

( प्रथमवर्षे सं० १९८२ )

२२ समाचारपत्रश्लेषः—चतुर्थसंख्यायाम् , चतुर्दशपद्यमयः सपादस्तम्भे (अस्य लेखस्य कर्णपुरीय 'प्रताप' पत्रे आगरास्थ 'सैनिक' पत्रे च प्रशस्तिः प्रकाशिता । २३ श्रीव्यासपूर्णिमा—५ सं०, द्वादशपद्यमयलेखः, सार्द्धस्तम्भे । २४ कर्म्ममहिमा ८, ९, १०, ११ संख्यासु प्रकाशितो द्वात्रिंशत्पद्यमयः सार्द्धचतुःस्तम्भे । इतोऽग्रे प्रायो गद्यमयलेखाः । २५ श्रीसनातनधर्म्ममहिमा—१३, १४, १५, १६ संख्यासु समाप्तः ९ । २६ गीर्वाणवाणीसाहिती—२०, २१, २२ संख्यासु समाप्ता ७ ।

स्तम्भेषु। २७ पाणिनीयसूत्रे प्रश्नः—२४ सं० पद्यद्वयमयः पादस्तम्भे। अस्योत्तरं द्वितीयवर्षस्य ७म संख्यायां पण्डितद्वयेन दत्तम्।

## सूर्य्योदय द्वितीयवर्षे मम निबन्धाः।

(सं० १९८३)

२८ प्रत्नपुस्तकभद्राकरणम्—द्वितीयवर्षस्य १, २, ३ सख्यासु प्रकाशितं सार्द्धपञ्चस्तम्भे। २९ अनिड्धातुपरिगणनम्—७ सं०, एकादशपद्यमयम्, ३ स्तम्भेषु। ३० प्रसिद्धाऽपपाठोदाहारः—८, ९ संख्ययोः समाप्तः ६॥। स्तम्भेषु। ३१ प्रहेलिकोत्तरम्—तस्यामेव संख्यायां पादस्तम्भे। ३२ पञ्चनदे सदाचारदुरवस्था—१२, १३, १४ संख्यासु समाप्तो गद्यपद्यमयलेखः, १३ स्तम्भेषु। ३३ प्रसिद्धाऽपपाठोदाहाराऽवशेषः—१६, १७, १८ इति संयुक्तसंख्यायां प्रकाशितः स्तम्भत्रये।

## 'सूर्य्योदय' तार्तीयीकवर्षप्रकाशितमामकीननिबन्धाः।

(सं० १९८४)

३४ सनातनधर्म्मणां प्रणिधानप्रयोजनीयता—तृतीयवर्षस्य २-३ अङ्कयोरवसितो गद्यप्रबन्धः ९। स्तम्भेषु। ३५ अन्यैः सह विवादे तु वयं पञ्चोत्तरं शतम्—५-६ अङ्कयोः प्रकाशितः—७। स्तम्भेषु। ३६ जागत्की प्रकृतिः—१२ सं०, अष्टपद्यमयनिबन्ध एकस्तम्भे। ३७ प्रतिवादः—देवराजशास्त्रीयनाम्ना प्रहितो धर्म्मदेवशास्त्रिण आक्षेपस्योत्तररूपोऽध्यर्धस्तम्भे १४ संख्यायाम्। ३८ असम्भवशब्दस्य कूपमण्डूकानां कोषे सम्भवः १५-१६-१७ संख्यासु समाप्तः ११॥ स्तम्भेषु। ३९ वर्ण्णव्यवस्थागत भ्रान्तिनिरासः—२० सं०, स्तम्भद्वये श्रीसत्यव्रतलेखस्योत्तरे। ४० वर्ण्णव्यवस्था जन्मनैव—२३-२४ सं० श्रीधर्म्मदेवशास्त्रिणो निबन्धस्योत्तररूपोनिबन्धः ६ स्तम्भेषु।

## 'सूर्य्योदय' तुरीयवर्ष प्रकाशितमन्निबन्धाऽनुक्रमणिका।

(सं० १९८५)

४१ शिवराजविजय विमर्शः—४।२ सार्द्धचतुःस्तम्भे। ४२ अन्याय्याक्षेप समाधिः—५ संख्यायां सपादस्तम्भद्वये 'सुप्रभात' सम्पादककृताऽऽक्षेपोत्तररूपः। ४३ 'नमस्ते' युक्ताऽयुक्तत्वविमर्शः—८-९-१३ संख्यासु प्रकाशितस्त्रयोदशस्तम्भेषु। ४४ विवाहवयोविमर्शः—२२,२४ सङ्ख्ययोः, पञ्चमाब्दस्य च प्रथमसंख्यायां द्वादशस्तम्भेषु।

## 'सूर्योदय' पञ्चमवर्षे मन्निबन्धाः।

(सं० १९८६)

४५ अहो! महिष्ठं यमसाहसिक्यम्—५-६-संख्यायां गद्यपद्यमयः प्रबन्ध पञ्चसु स्तम्भेषु। ४६ मामकीना हरद्वारयात्रा—७,८-९ संख्यासु ८॥ स्तम्भेषु।

४७ म० म० पण्डितश्रीगिरिधरशर्माऽभिनन्दनम्'—१२ सं०, षोडशपद्यमयं २। स्तम्भे। ४८ विधवाविवाहयुक्ताऽयुक्ताविमर्शः—१४-१५,१६-१७,१८-१९ संख्यासु समाप्तः १६ स्तम्भेषु। अयं निबन्धो विद्वद्भीरुचिविषयं नीतः। ४९ प्रियतमोपालम्भः—२०-२१ सं०, दशपद्यमयः १॥ स्तम्भे। ५० समस्यापूर्तिः—२२-२३-२४ सं०, सप्तपद्यमया सार्द्धैकस्तम्भे।

'सूर्योदय' षष्ठवर्षे प्रकाशिता मन्निबन्धाः।

( सं० १९८७ )

५१ टिप्पणे टिप्पणम्—६-७ अङ्कयोरवसितम् ५॥ पृष्ठेषु। ५२ नवीनाविष्कारैः का क्षतिर्निष्पन्ना—८ सं०, ७॥ पृष्ठेषु। ५३ निबन्धनामधामनिह्नवः—९-१० सं०, पद्यचतुष्टयमयी प्रहेलिकाऽर्द्धपृष्ठे। एतदुत्तरं ७।१२ मुद्रितम्। ५४ काचित्की परिवर्त्तना परिवर्द्धना च—१२ सं०, २। पृष्ठे।

सप्तमवर्षीय सूर्योदये मन्निबन्धाः।

( सं० १९८८ )

५५ नलचम्पूसमालोचना—१-२ सङ्ख्ययोः, १० पृष्ठेषु। ५६ (क) सूचनायां सूचना— ६ सं०, मदनमोहनशास्त्रीयनाम्ना प्रकाशिता *३॥ पृष्ठे। ५६ (ख) सूचना—७ सं० अर्द्धं पृष्ठे। ५६ (ग) ढुण्ढेस्मृतिः—( माधुरीत उद्धृता )।

'सूर्योदय'स्य अष्टमवर्षे।

( सं० १९८९ )

५७ समाचारपत्राणां लाभस्तद् ग्राहकवृद्ध्युपायाश्च—२-३ संख्ययोः, ११ पृष्ठेषु। एतल्लेखप्रकाशनानन्तरमेव 'संस्कृतरत्नाकर'स्योद्वेलनं प्रारब्धम्। तदेकवर्षानन्तरञ्च अस्तमितस्य 'सुप्रभात'स्याविर्भावो जातः। ५८ अद्यत्वे समर्घतायामपि कथमिवाऽशान्तेः साम्राज्यम्—५-६ सं०, ९॥ पृष्ठेषु। ५९ स्वराज्यशब्दपरिभाषा—८ सं०, १० पृष्ठेषु। ६० धिगर्थान् कष्टसंश्रयान्—१२ सं०, ४॥ पृष्ठेषु।

'सूर्योदय'स्य नवमवर्षे।

( सं० १९९० )

६१ जनताया अन्धपरम्परापरत्वम्—१ सं०, ७। पृष्ठेषु। ६२ क्षणं प्रज्वलितं श्रेयो नहि धूमायितं चिरम् २-३ सं०, १६॥ पृष्ठेषु। ६३ धर्मदुर्गत्राणाय अस्मत्पूर्वजानां दूरदर्शित्वम्—५-६-७ सं०, १६ पृष्ठेषु। ६४ लेखवक्तृतयोस्तारतम्यविमर्शः—९-१० सं०, ७। पृष्ठेषु।

* श्रीरामनारायणशास्त्रिण उत्तररूपे।

## सूर्य्योदयस्य दशमवर्षे।

(सं० १९९१)

६५ उपयुक्तक्रियाक्रमिकसङ्कलनम्—२–३–४–५–६–७ संख्यासु समाप्तम्, २४ पृष्ठेषु। ६६ चाण्डालाद्यस्पृश्यतायां प्रमाणसंग्रहः—८–९–१० संख्यासु समाप्तः, १४ पृष्ठेषु। ६७ अहो साहसम्—९ सं०, ३ पृष्ठेषु अन्तर्यामिनाम्ना। ६८ उपयुक्तक्रियाक्रमिकसङ्कलनशोधनम्—११ सं०, पृ० ३॥। ६८ (ख) केचित् प्रश्नाः—जिज्ञासुनाम्ना १ पृष्ठे। एतत्प्रश्नोत्तरं नागतम्।

## सूर्य्योदयस्य एकादशवर्षे।

(सं० १९९२)

६९ वेदपुराणयोरेकवाक्यता—(अश्लीलतानिरासः) १–२–३–७–८, ९–१०–११, १२ संख्यासु ४० पृष्ठेषु समाप्तः। ७० भट्टमहाभागानां समाधिः—अन्तर्यामिनाम्ना ३ सं०, पृ० २। ७१ शोकोच्छ्वासः—४ सं०, पृ० १।

## सूर्य्योदयस्य द्वादशवर्षे मुद्र्यमाणमन्निबन्धाः।

(सं० १९९३)

७२ वेदपुराणयोरेकवाक्यता—(अवैदिकतानिरासः) १–२–३ संख्यासु, ५। पृष्ठे। अग्रेऽपीदं पुस्तकं मुद्र्यते। 'मामकीननिबन्धानां सिंहावलोकनम्' अपि अत्र वर्षे प्रकाश्येत।

## लवपुरीये 'उद्योते' प्रकाशितानां मन्निबन्धानां सूची।

(सं० १९८५)

७३ आधुनिक जागतकी दुरवस्था—१ मवर्षस्य २ य संख्यायां ३ पृष्ठेषु। ७४ हते प्रहारा निपतन्त्यभीक्ष्णम्—३ सं०, ४॥ पृष्ठेषु।।७५ गीर्व्वाणवाणी कथं व्यावहारिकत्वमश्नुवीत—६–७, सं०, ७ पृष्ठेषु। ७६ हैन्दसंख्याह्रसिम-निदान-विमर्शः—९,११ सं०, ६ पृष्ठेषु। ततः 'उद्योतः' अस्तमितः।

## अमृतसरस्थायाम् 'अमरभारत्याम्'

(सं० १९८६)

७७ स्वर्गीये पाणिनिभ्यायालबे कश्चिदभियोगः—प्रथमवर्षस्य तार्त्तीयीक-संख्यायां १०॥। स्तम्भेषु। ततः पत्रिकेयमस्तमिता।

लवपुरीये 'ओरियण्टलकालेज मेगजीने'

(सन् १९३०)

७८ 'अष्टाध्यायीसिद्धान्तकौमुद्योस्तारतम्यविमर्शः'—सप्तमवर्षस्य द्वितीयसंख्यायां, ८ पृष्ठेषु। एतल्लेखस्य एकस्याष्टिप्पण्या उत्तरं सम्पादकेनैतत्संख्यायां मुद्रितम्। तत्प्रत्युत्तरञ्चाऽस्माभिः प्रहितमपि सम्पादकेन स्वपत्रे न प्रकाशितं कदाचित् स्वहानिभिया; ततश्चाऽस्माभिस्तत् 'टिप्पणे टिप्पणम्' इति शीर्षकेण सूर्योदये ६।६-७ मुद्रापितम्।

जयपुरीयसंस्कृतरत्नाकरे प्रकाशिता मन्निबन्धाः।

(सन् १९३३)

७९ भूदेवाः ऽव्ययाधिक्यं परिजिहीर्षत—प्रथमवर्षस्य चतुर्थसञ्चिकायां, पञ्चसु पृष्ठेषु। ८० व्याकरणराज्ये क्रान्तिकारिणी दमनकारिणी व्यवस्था—६ सं०, ६॥ पृष्ठेषु। ८१ सुप्तिङन्तानां प्रथमं लघुसम्मेलनम्।—१०—११ अङ्कयोः, १४ पृष्ठेषु।

'संस्कृतरत्नाकरस्य द्वितीयवर्षे'

(सन् १९३४)

८२ सूर्य आत्मा जगतस्तस्थुषश्च—६-७-८-९ संख्यासु समाप्तः २४॥ पृष्ठेषु। ८३ चन्द्रस्पष्टतायाः सुगमरीतिद्वितयी—१० सं०, ७ पृष्ठेषु। ८४ ज्वरदर्पाऽपसर्पणम्—आयुर्वेदविशिष्टाङ्के १२ सं०, ८ स्तम्भेषु।

'संस्कृतरत्नाकर' स्य तृतीयवर्षे।

(सन् १९३५)

८५ वेदे जन्मना वर्णव्यवस्था—७ सं० ७ पृष्ठेषु। ८६ किं वेदे देवनामानि परमात्मार्थकानि—९-१०-११- सं०, ९ पृष्ठेषु। ८७ मन्त्रभागवद्ब्राह्मणभागस्याऽपि वेदत्वं वेदे इतिहासश्च—(वेदस्य विशिष्टाङ्के) १२ सं०, ४२ स्तम्भेषु।

संस्कृतरत्नाकरस्य चतुर्थवर्षे।

(सन् १९३७)

*'पण्डितप्रष्ठान् प्रति प्रार्थना' 'विधवेव देवरम्' 'रक्तबीजस्य रक्तादसुरोत्पत्तिः' इति निबन्धत्रयं मम 'संस्कृतरत्नाकर' कार्यालये वर्त्तते। परमद्य यावत् कोऽपि न प्रकाशितः।*

* तत्र 'पण्डितप्रष्ठान् प्रति प्रार्थना' इति मे लेखो 'रत्नाकर' स्य ७ माङ्के ११ पृष्ठेषु प्रकाशितोऽद्यत्वे।

## श्रीनगरस्थ 'श्री' पत्त्रे तृतीयवर्षे ।

( सं० १९९१ )

८८ परीक्षागुणदोषविमर्शः—३–४ अङ्कयोः, १० पृष्ठेषु ।

## 'श्री' पत्त्रिकायाश्चतुर्थवर्षे ।

( सं० १९९२ )

८९ देवमनुष्याणां भिन्नतायां वेदमतोपन्यासः—१ संख्यायां १५ पृष्ठेषु प्रकाशितः । अयं निबन्धो बुद्धदेवस्नातकेन 'श्री' पत्त्रे ३।४ प्रकाशितस्य लेखस्य खण्डनस्वरूपः; परमस्योत्तरं तेन स्नातकेन वर्षद्वयेऽपि जाते न प्रेषितम् । ९० विवाहवयोविचारः—२–३ सङ्ख्ययोः समाप्तः २० । पृष्ठेषु । अयं लेखः स्नातकधर्म्मदेवस्य 'श्रीः' ४।१ अङ्के प्रकाशितस्य लेखस्य खण्डनस्वरूपः । ९१ अन्त्यजानां मन्दिरप्रवेशेऽनधिकारः—४ संख्यायां, ११ पृष्ठेष्वपूर्णः प्रकाशितः । अयं निबन्धः 'श्री' ४।२ प्रकाशितस्य आर्यसामाजिकविश्वदेवशास्त्रि लेखस्य खण्डनस्वरूपः; परं तेन शास्त्रिणाऽस्योत्तरं न प्रकाशितम् ।

## 'श्री' पत्त्रिकायाः पञ्चमे वर्षे ।

( सं० १९९३ )

९१ (ख) अन्त्यजानां मन्दिरप्रवेशेऽनधिकारः—पूर्व्वस्याऽवशेषः १ संख्यायां, १२॥ पृष्ठेषु समाप्तः । ९२ 'विवाहवयोविमर्शः—द्वितीयतृतीयसंख्ययोः ४२ पृष्ठेषु समाप्तः । अयं निबन्धः स्नातकधर्मदेवीय 'श्रीः' ४।४ प्रकाशितलेखस्य खण्डनस्वरूपः । ९३ प्रमाणपरीक्षणम्—४ संख्यायां ५॥ पृष्ठेषु । अयं निबन्धः 'श्रीः' संख्याप्रकाशित श्रीविद्याधरभास्करलेखस्य खण्डनस्वरूपः ।

## 'श्रीः' पत्त्रिकायाः षष्ठे वर्षे ।

९४ विवाहवयोविवेकः—प्रायः ३५ पृष्ठात्मक प्रथमसंख्यायां मुद्र्यते । अयं निबन्धः 'श्रीः' ५।१ प्रकाशितस्नातकधर्म्मदेवनिबन्धस्य खण्डनस्वरूपः । विवाहवयोविवेचना—अयमपि पूर्व्वोक्तलेखकनिबन्धनिराकर्त्ता पूर्वलेखस्य उपसंहारभागः श्रीपत्त्रे प्रकाशनाय प्रहितो वर्त्तते; अयमपि निबन्धः प्रायः ३५ पृष्ठात्मकः । विवाहवयोनिर्णयः—अत्र वेदस्मृत्यादिप्रमाणानि राशीकृतानि—अयमपि निबन्धः 'श्री' पत्त्रे प्रकाशनाय प्रहेष्यते ।

काशीप्रकाशितायाः 'अमरभारत्याः' प्रथमे वर्षे।

( सं० १९९१—९२ )

९५ पुराणोक्तदीर्घायुष्कतायां वेदसादस्यम्—८–९ अङ्कयोः, ६ पृष्ठेषु। ९६ स्त्रीणामवरोधप्रथायां वेदादिमतम्—१०–११ सं०, ७ पृष्ठेषु।

'अमरभारती' पत्रिकाया द्वितीयवर्षे।

( सं० १९९२—९३ )

९७ मूर्त्तिपूजने पूर्वोत्तरपक्षिणोः संवादः—१–२–३–४, ७–८ संख्यासु समाप्तः ३२ पृष्ठेषु। ९८ भूतपिशाचादीनां वेदायुर्वेदादौ सत्ता—११–१२ सङ्ख्ययोः प्रकाशिता, १४। पृष्ठेषु।

अमरभारत्यास्तृतीयवर्षे।

( सं० १९९४ )

'प्रकृतिनियमानां सामान्यशास्त्रता' इति लेखोऽत्र प्रकाशनाय प्रहितो वर्त्तते।

काशीप्रकाशितायाः 'वल्लरी' पत्रिकायाः प्रथमवर्षे।

( सं० १९९२—९३ )

९९ ग्रहणविज्ञानम्—५–६ अङ्कयोः, ९ पृष्ठेषु। १०० इष्टं नामकरणञ्च—७ संख्यायां, ५॥ पृष्ठेषु। १०१ इष्टं नामकरणञ्च—८–९ सङ्ख्योः ५॥ पृष्ठेषु। अग्रे एतत्पार्श्वे 'बहुसन्ततिसम्भवमीमांसा' इति निबन्धः प्रकाशनाय प्रहितो वर्त्तते; परं नवमसंख्यातोऽग्रे पत्रिकाया दर्शनमेव न संवृत्तम्।

( क्रमशः )

---

## भारतीयसंस्कृतेरादर्शरूपेषु विद्वत्सु सप्रश्रयमावेदयन्ति।

महोदयाः! भारतस्याभिनवशासनविधानानुसारतः प्रान्तीयस्वायत्तशासने व्यवस्थापकसभाः ( कौन्सिल असेम्बली प्रभृतयः ) यदि प्रजानां धार्मिके सामाजिकेऽपि विषये प्रवर्तेरन्, मन्यामहे तत्र नास्ति कोपि तादृशो नियमः संरक्षणं नाम, यो हि धार्मिकहस्तक्षेपं प्रतिबध्नीयात्। व्यवस्थापकसभाश्च राजनीतिककार्यप्रभावेण नवमतवादिभिरेवात्मसात्कृता इति सर्वेषां विदितमेव। एवं सति स्वाभिमतं धर्मविरुद्धं प्रस्तावं व्यवस्थापकसभासु स्वीकारयितुं समर्था अपि धर्मपरिवर्तनपक्षपातिनो नवमतवादिनः सम्प्रति तथा कर्तुमप्रवृत्ता यद्दृश्यन्ते तत्र शास्त्रैकशरणस्य महतो जनसमाजस्य

व्यवस्थापकसभातो बहिःस्थितस्य व्याकोपभीतिरेव कथंचिद्धेतुतामासादयति । तन्निरसनार्थं ते स्वमतस्य शास्त्रीयत्वसंपादनाय बहुशः प्रयतमाना दृश्यन्ते । यन्निदर्शनभूतो मद्रासनगरे डिसेम्बरमासे अखिलभारतपण्डितपरिषन्नाम्ना अनुष्ठीयमानः तेषां महान् समारोह एव तत्र भवतां पुरः समुपक्षिप्यते । सा परिषत् नवमतवादिभिराहूयते । तस्यां परिषदि विचारार्थं त एव विद्वांसः तैराहूयन्ते ये परिस्थित्यनुसारेण धर्मपरिवर्तनपक्षपातिनः प्रगतिशीला इति कथ्यन्ते ।

माननीयाः !

एवंविधेन प्रसङ्गेन शास्त्रपरतन्त्रेषु साधारणेषु जनेषु भ्रमः संभवतीति तेषु तेषु विवेचनीयविषयेषु वास्तविकं शास्त्ररहस्यं शास्त्रमर्मज्ञैर्झटिति समये प्रकटनीयमित्यापतति, तदेतदभिसन्धाय मद्रासप्रान्तनिवासिभिः दूरदर्शिभिः धार्मिकैः सम्भूय अखिलभारतवर्षीय-विद्वत्परिषद्परादिसम्बरमासे मद्रासनगरे एव समाहूयते । अस्यां परिषदि महतां सर्वेषां धर्माचार्यचरणानां शुभाशासनं संरक्षणं चातिशयविशेषमादधाति । अस्याः परिषदः दिसम्बरमासस्य पञ्चविंशतितारिकामारभ्य ( २५–१२–३७ तः २८–१२–३७ पर्यन्तं ) दिनचतुष्टयं यावत्समावेशनं भविष्यति । अस्यां भारतस्य सर्वेभ्यः प्रान्तेभ्यः विद्वांसः प्रचुरसंख्यायां समाहूयन्ते । विचारार्थमुपक्षिप्ता विषयाश्च तथा सङ्कलिता येन नवमतवादिनां जिज्ञासिता विषया अपि सङ्गृह्येरन् । एषु विषयेषु भवद्विधानां विदुषां सयुक्तिकः सप्रमाणको विचारः नितान्तमावश्यक इति पूर्वत एव विवेचनीयविषयसञ्चिकां संप्रेष्य प्रार्थ्यते यत्सर्वेष्वेषु विषयेषु प्रमाणवचनैर्युक्तिभिश्च स्वीयं मतं निबन्धरूपेण प्रदाय अनुगृह्णन्त्विति ।

काशिकसंकेतेन प्रहितो निबन्धः दिसम्बरमासस्याष्टमतारिकापर्यन्तं यथा लभ्येत तथा सत्वरं प्रयतितव्यमिति विशेषतो निवेद्यते । उपलब्धाश्च तत्र भवतां निबन्धा उपरिष्टात्परिषदः कार्यविवरणप्रकाशनपुस्तके प्रकाशयितुमिष्यन्ते । तदर्थमनुमतिरपि तत्र भवद्भिर्देया । इति । संयोजकाः—

**म.म.)श्रीअनन्तकृष्ण शास्त्री (कलिकाता)**
**श्रीराजेश्वर शास्त्री द्राविड़ ( काशी )**
**श्रीदेवनायक आचार्य ( काशी )**
**(रायबहादुर)सदाशिवमाधवरावपराण्डे**
(रिटायर्ड डिस्ट्रिक्ट सेशन जज–नागपुर)
**टी. एस्. रामस्वामी ऐयर (मद्रास)**

परिषदो निबन्धसम्बन्धिनस्तथाऽन्यान्यशास्त्रीयविचारसम्बन्धिनश्च पत्रव्यवहारस्य कार्यालयसंकेतः— ( ता० १० दिसम्बर १९३७ पर्य्यन्तम् ) नं० १० माधोराय, बनारस सिटी । (अनन्तरं) ललिता सदनम्, रायापेटा, मद्रास ।

परिषदो व्यावहारिककार्यसम्बन्धिनः पत्रव्यवहारस्य कार्य्यालय संकेतः—

(१) श्री रा. सा. नटेश ऐय्यर एडवोकेट नं. ५५, तामिल संघम् रोड, मदुरा ।

(२) श्री टी. यस्. रामस्वामी ऐय्यर ललिता सदनम्, रायापेटा, मद्रास ।

---

नोट—सूर्योदये प्रकाशितुकामैः शीघ्रमत्र कार्यालये परिषद्वधितः पूर्वम्प्रेष्यम् । (सम्पादकः)

१९९४ वैक्रमसंवत्सरे पौषकृष्णाष्टमी ( ता० २५-१२-३७ ) तः मद्रासनगरे भाविन्यां

## अखिलभारतवर्षीयविद्वत्परिषदि विचारणीयाः

## प्रश्नाः–

(१) धर्मस्वरूपनिर्णये युक्तेः स्वातन्त्र्येण प्रामाण्यमस्ति न वा ?

(२) यदि वर्तते तर्हि शास्त्राणां युक्तेश्च विरोधे कस्य प्रामाण्यम् ?

(३) आत्मतुष्टिः ( Conscience ) शास्त्रविरोधे प्रमाणं वा न वा ?

(४) यदि प्रमाणं तर्हि किमीया व्यवस्था समादरणीया ?

(५) देशकालपरिस्थित्यनुसारेण शास्त्राणां परिवर्तने कस्याप्यधिकारो वर्तते न वा ?

(ख) राज्ञा धर्मशास्त्रपरिवर्तनं कर्तुं शक्यते न वा ?

(६) धर्मशास्त्रप्रामाण्यरक्षणं राजनीतिक्षेत्रे आवश्यकं न वा ?

(७) शास्त्रार्थनिर्णये किं मीमांसकपद्धतिः समाश्रयणीया उत ऐतिहासिकपद्धतिः ( Evolution theory )

( सूचना ) उपरितनाः प्रश्नाः तर्कप्रामाण्येन वादपद्धत्या विचारणीयाः। प्रश्नोत्तर-प्रणाल्या ( Cross Question ) अपि अवसरो दीयेत।

अधस्तनानां प्रश्नानां श्रुतिस्मृतीतिहासपुराणवचनावष्टम्भेन पूर्वतनविचारनिर्णीत-पद्धत्या विचारो भविष्यति।

### स्पर्शास्पर्शविचारः।

(क) वर्णाः अनुलोमप्रतिलोमसंकरजातयश्च गुणकर्मकृता उत जन्मसिद्धाः ?

(ख) अस्पृश्यानामस्पृश्यत्वं जन्मतः कर्मतो वा ?

(ग) इदानीन्तना अस्पृश्याः शास्त्रोक्तस्पृश्यजातिष्वन्तर्भवन्ति न वा ?

(घ) अस्पृश्यानां सभादिप्रवेशे देवालयप्रवेशे कूपोदकग्रहणे च कीदृशी शास्त्रव्यवस्था ?

### शुद्धिः।

(क) धर्मतो म्लेच्छीकृतानां पुनः स्वपूर्वतनजातिधर्मे प्रायश्चित्तादिना प्रवेशाधिकारो दातुं शक्यते न वा ?

(ख) यदि शक्यते तर्हि कीदृशी व्यवस्था ?

### विवाहः।

(क) ब्राह्मणादिजातिष्ववान्तरश्रेणीनां परस्परं विवाहः शास्त्रसंमतो न वा ?

(ख) असवर्णविवाहः शास्त्रसंमतो न वा ?

### संस्कारः।

(क) संस्काराणां लोपः सङ्कोचो मनुष्यसामान्यधर्ममात्ररक्षणव्यवस्थापनेन वर्णाश्रमा-दिविशेषधर्मनिवर्तनं च संभवति न वा ?

(ख) अन्ये च विचारणीया विषयाः।

# जन्मदिनोत्सवशुभाशंसनम्।



ले०—'शास्त्री' प्राणजीवनः, बी० जोशी ( कच्छी ) काव्यतीर्थः, साहित्यभूषण, साहित्याचार्य-श्रेणिस्थः, "रिसर्चस्कॉलर"—( गवर्न्मेंन्ट सं० कॉलेज—सरस्वती भवन-काशी, )।

## गोब्राह्मणप्रतिपाल-धर्मधुरंधर-अखण्डप्रौढप्रताप-क्षत्रियकुल भूषण श्रीमन्महाराजाधिराज-कच्छदेशाधीश्वर-युवराज श्रीविजय-राजजी बहादुर-महोदयानां

धर्मात्मन् प्रथिताभिधान ! युवराट् त्वद्यौवराज्यं परम्
साफल्यं गतमित्यवैमि नहि तन्नूत्नं मया गीयते।
भक्तिः साम्बभवे, भवे सुचरिता श्रद्धाद्यशेषैर्गुणै-
र्नश्चित्ते मुदमातनोति भवतो धर्मे रति श्चेति यत्॥ १॥

विद्याकलाकौशलमप्रमेयम्
बलञ्च, लोकोत्तरराजधाम
गो विप्रसंरक्षणमित्यनेकै—
र्गुणैर्विशिष्टं भवदाधिराज्यम्॥ २॥

स्व-राज्यनीतावतुलाम्प्रतिष्ठा—
ञ्जतस्य विज्ञानगभीरताञ्च
शास्त्रास्त्रविद्याकुशलस्य लोके
कोऽप्यद्य भाग्याभ्युदयस्तवायम्॥ ३॥

"कृष्णाष्टमी" जन्मदिनं त्वदीय—
मपूर्वमैश्वर्यगुणं दधाति,
धन्यत्वमस्मादधिकं न किञ्चि—
ज्जयप्रदोऽसौ तव "जन्मकालः"॥ ४॥

राजन्! कच्छ-भचाउ-वर्ति-"दुधई"ग्रामाधिवासी द्विजः।
काश्यां जह्नुसुतातटे च निवसन्सम्प्रत्यधीत्यै पुनः,
स्मृत्वाहं भवतोऽद्य जन्मदिवसं काशीपतेः सन्निधौ।
जीयास्त्वं सुचिरं नयेन वसुधा रक्षन्निति प्रार्थये॥ ५॥



# दुःख-संवेदनम् ।

सुरभारतीप्रणयिनो विज्ञाः !!! घोरेऽस्मिन् कलिकाले, दैनंदिनं ह्रासमुपगच्छति, धर्माद्याचारप्रचारे ये केचन तदादिप्राणभूताः सन्तः सन्ति, हन्त ! तेषामपि—अकाण्ड एव ( हृदयमर्मच्छिदा ) स्वर्गप्रयाणेन, कस्य न चेखिद्यते 'सहृदो' हृदयम् ।

सम्प्रत्येव 'सूर्योदय' पाठकैरवगतं, श्रीमन्महामहाध्यापकानां 'सूर्योदय' सम्पादकानां, म० म० पं० श्रीअन्नदाचरणतर्कचूडामणि-मान्यानां दुःखदमवसानम् । यस्मिन्प्रत्यग्र एव हृद्व्रणे तदन्तरा पुनः, क्षते क्षारमिवास्मद्दौर्भाग्यादापतितं शोकवृत्तान्तरम् ।

"कच्छ भुज"-पत्तनस्थ महाराज्ञी श्रीनानीबाख्य राजकीयसंस्कृत-पाठशालाध्यापकाः महामहोपाध्याय स्वर्गीय पं० नित्यानन्द पर्वतीय-चरणानां शिष्याः पं० श्रीदुर्गाशङ्कर शास्त्रिण—आश्विनस्य सिते पक्षे स्वर्गवासमभजन्त । सौजन्यसौशील्य—पाण्डित्यादिप्रशस्यगुणवन्तस्ते, कच्छ-राज्यशास्त्रिणां श्रद्धेय पं० श्रीप्रभाशङ्कर भाई महोदयानां सोदर ब्रह्मी भूत-पं० श्रीलक्ष्मीशङ्करशास्त्रिणां सुपुत्रा आसन् तेषां कलत्रपुत्रादि-कुटुम्बस्य महत्यामस्यां विपदि समदुःखतामात्मनः प्रकटयन्नहं, परमका-रुणिकाद्भगवतो विश्वेश्वरात्तत्कुटुम्बिभ्यो धैर्यं, सद्गतात्मशान्तिश्चाभ्यर्थ-यन् शोकनिर्विण्णो विरमामि ।

—शास्त्री प्राणजीवन बी० जोशी कच्छी,
"रिसर्चस्कालर" गवर्न्मेन्ट संस्कृतकॉलेज,
सरस्वतीभवन, काशी ।

# मानदान।

श्रीमहामण्डलका यज्ञानुष्ठान विभाग जिस प्रकार देवपूजनके बिचारसे स्थापित किया गया है, उसी प्रकार श्रीमहामण्डलके मानदानविभागका कार्य नृयज्ञरूपसे मनुष्योंकी गुणपूजाके लिये स्थापित है। इस विभागसे निम्नलिखित श्रेणीके मान प्रतिवर्ष यथासम्भव दिये जाते हैं।

( १ ) धार्मिकता और धर्मकार्योंमें सहायताके विचारसे राजा महाराजाओंको मानदान। ( २ ) उसी विचारसे सब श्रेणीके योग्य व्यक्तियोंको मानदान। ( ३ ) धार्मिक तथा परोपकारिणी आर्यमहिलाओंको मानदान। ( ४ ) साधारण विद्याविषयकमान। ( ५ ) संस्कृतविद्योपाधि। ( ६ ) विविध विद्योपाधि। यथा वैद्यक ज्यौतिष, कर्मकाण्ड आदि। ( ७ ) विशिष्ट विद्योपाधि। ( ८ ) हिन्दी विद्योपाधि। ( ९ ) पदार्थ विद्या साइन्स और शिल्प सम्बन्धी। (१०) भारतीय अन्य देश भाषाओंकी विद्योपाधि। (११) संगीत विद्योपाधि। (१२) विशेष अभिनन्दनपत्र। (१३) धर्मोपदेश सम्बन्धी—उपदेशक, महोपदेशक, और महामहोपदेशक। (१४) साधारण-मानपत्र प्रशंसापत्र और धन्यवादपत्र। (१५) कृषि और उद्भिज्ज विद्योपाधि।

जो जातीयमान दिये जाते हैं, वे धर्माचार्य और राजन्यवर्ग एवं सब प्रान्तीय प्रतिनिधि वर्गकी ओरसे होनेके कारण इस मानदान विभागका आदर जातीय पुरस्काररूपसे किया जाता है और इस विद्यासम्बन्धीय मानका प्रभाव यूरोप-अमेरीका जैसे सभ्य देशोंमें भी हुआ है। श्रीमहामण्डल, विद्या साइन्स और आर्ट आदिके सम्बन्धमें मानदेनेमें धर्म और जाति का विचार नहीं रखता है।

इस मानदान विभागकी स्थापनासे लेकर सन् १९३५ के अन्त तक इन श्रेणियों की मानों की संख्या ३७५७ थी। इसके बाद अबकी साल जिन जिन विद्वानों एवं गुणीजनोंके गुणकी पूजा की गयी है, उनको नामावली नीचे प्रकाशित की जाती है।

बालकृष्णमिश्र ( बी० ए०एल-एल० बी० काव्यतीर्थ )

**सेक्रेटरी।**

# धर्मोपाधि

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् भोलानाथ नर्मदाशंकर त्रिवेदी<br>माण्डवीकी पोल, चकाब कालीखड़की,<br>अहमदाबाद। | धर्मभूषण |
| ,, कुमार मग्नानन्दजी शास्त्री<br>शाहीबाग भीमनाथ महादेव, ऋषिकुल पाठशाला,<br>अहमदाबाद। | धर्मरत्न |
| ,, पं० रामप्रसादशर्मा<br>खेतड़ी ( राजपूताना ) | धर्मविनोद |
| ,, सेठ जमनादास हरख जी संघवी<br>मदनजी मोहनजी हाउस, अगियारी लेन,<br>बम्बई। | धर्मसुधाकर |
| ,, सेठ द्वारिकादास कल्याणदास<br>कृष्णकुंज रिजरोड, मालावार हील,<br>बम्बई। | धर्मरत्न |
| ,, सेठ वल्लभदास कृष्णदास नाथा बड़गादी,<br>बम्बई। | धर्मविभूषण |
| ,, बाबू रामनन्दनप्रसाद—नारायणसिंह जमीन्दार,<br>रियासत सेहरा, पो० सेहरा, पटना। | धर्मभूषण |
| ,, पं० गोवर्द्धन मिश्र वकील, गया। | धर्मविनोद |
| ,, बाबू दुर्गाप्रसाद झुनझुनवाला<br>दानापुर कैन्ट पटना। | धर्मविनोद |
| ,, डाक्टर वजीर सिंह "सरीन" छिली इट<br>आगरा। | धर्मभूषण |
| ,, लालाराम किशनदास<br>प्रोप्राइटर लाला गणेशीलाल सन्स<br>१३ ड्रमण्ड रोड आगरा। | धर्मरत्न |

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् सेठ केशवदेव पोद्दार　　बिरला रोड, हरद्वार। | धर्मरत्न |
| ,, ओ० सी० गांगुली एटर्नी　　कलकत्ता। | धर्मरत्न |
| ,, आनरेबुल रायबहादुर साहु जगदीश प्रसाद रईस मुजफ्फरनगर (यू० पी०) | धर्मभूषण |
| ,, सरदार जयदेव शर्मा　　काशीपुर नैनीताल। | भक्तिभूषण |
| ,, साहू रामनारायण साहब रईस, गवर्नमेन्ट ट्रेजरर, मिल ऑनर,　　बरेली। | धर्मभूषण |
| ,, सेठ धनपतरायजी रईस महल्ला कानून ग्वान　　मेरठ सिटी। | धर्मरत्न |
| ,, सेठ शिवचरणदासजी रईस महल्ला कानूनग्वान,　　मेरठ सिटी। | धर्मरत्न |
| ,, मुन्शी मुरारीलालजी,　　मेरठ सिटी। | धर्मभूषण |
| ,, लाला शोभनलालग्वेल　　बल्लभगढ़। | धर्मरंजन |
| ,, लाला रामप्रसाद सर्राफ　　दिल्ली। | धर्मालंकार |
| ,, लाल हरनामदास खन्ना,　　दिल्ली। | धर्मभूषण |
| ,, पं० राम एकबाल पाण्डेय, स्टेशन मास्टर, विन्ध्याचल। | धर्मभूषण |
| ,, बाबू सुबोधचन्द्र चट्टोपाध्याय एम० ए० बी० एल० एडवोकेट कटक (उड़ीसा)। | धर्मभूषण |
| ,, पं० श्रीकृष्ण कन्हैयालाल ज्योतिषी प्रधान मंत्री सनातन वर्णाश्रम-धर्म सभा उज्जैन। | धर्मविनोद |
| ,, पं० पुष्करदत्त शास्त्री व्यवस्थापक, हरियाणा शेखावाटी-ब्रह्मचर्याश्रम भिवानी (पंजाब)। | धर्मभूषण |
| श्रीमान् पं० रामशरणजी रामायणी मैनेजर-हरियाणा शेखावाटी-ब्रह्मचर्याश्रम भिवानी (पंजाब)। | धर्मविनोद |

| नाम और पता | उपाधि |
|---|---|
| ,, बाबू ज्ञानेन्द्रनाथ वसु एम० ए० ९ पार्कलेन, कलकत्ता। | धर्मभूषण |
| ,, पं० पुरुषोत्तमलाल जेटली २ क्लाइव रोड इलाहाबाद। | धर्मरत्न |
| ,, रायबहादुर नलिनी मोहन मजुमदार डिप्टी कमिश्नर आफ पुलिस केदार धाम १।१ हजरा रोड कालीघाट कलकत्ता। | धर्मभूषण |
| ,, बाबू सन्तोष कुमार बनर्जी १५ जकडीया रोड़ बालीगंज, कलकत्ता। | धर्मभूषण |
| ,, राजा क्षितीन्द्रदेवराय महोदय बांस वेरिया २१ ई० रानीशंकर लेन कालीघाट, कलकत्ता। | धर्मविनोद |
| ,, महाराजा साहब सूरज सिंह जी प्राइवेट सेक्रेटरी श्री जी हूजुर श्रीदरबार किशनगढ़ स्टेट। | धर्मविनोद |
| **(कुलाङ्गनामान)** | |
| श्रीमती हर हाईनेस श्रीमती महारानी पार्वती बाई साहिबा देवास देवास २। | धर्मचन्द्रिका |
| धर्मविनोद बाबू भोलानाथ चटर्जीकी श्रीमती धर्मपत्नी ५२ हरीश मुकर्जीरोड, भवानीपुर कलकत्ता। | धर्मचन्द्रिका |
| श्रीमती कुलदीपादेवी C/o पं० रामनारायणशर्मा, मुंसरीम जजी बनारस। | धर्मचन्द्रिका |
| **उपदेशक।** | |
| श्रीमान् पं० यादवराम नत्थुरामजी काम्बावाड़ी, तम्बाकुवाला जूनामाला बम्बई। | धर्मोपदेशक |

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् पं० धीरजराम जगन्नाथ शास्त्री मु० पो० गोधरा ज़ि० पंचमहाल, (गुजरात)। | धर्मोपदेशक |
| **महोपदेशक।** | |
| ,, शास्त्री ईश्वरलाल कचरेश्वरजी, अहमदाबाद। | |
| ,, पं० मदनमोहन मालवीय बम्बई। | |
| ,, पं० राममनोरथ शास्त्री उपाध्याय मो० नवधन, पो० उज, बनारसस्टेट। | |
| ,, पं० हनुमानदत्त जोशी काव्यतीर्थ, १९९५ हरिसनरोड कलकत्ता। | |
| ,, राय नलिनीमोहन लाहिडी– २५ बी० टानसेन्डरोड भवानीपुर कलकत्ता। | |
| **महामहोपदेशक।** | |
| ,, श्रीरामानन्द, श्रीज्ञानदेव, विद्यापीठ अहमदनगर। | |
| ,, पं० विश्वम्भरदत्त शास्त्री, चीराखाना-मनमहल देहली | |
| ,, पं० धूमावतीप्रसाद पांडेय, जगतगंज, काशी। | |
| **संस्कृतविद्योपाधि।** | |
| ,, पं० अनूपराम सदाशिव शास्त्री– खाडिया, अमृतलालनीपोल, अहमदाबाद। | दर्शनकेशरी |
| ,, पं० गणपतराम त्र्यम्बकराम द्विवेदी खाडिया, श्रीरामजी की शेरी, अहमदाबाद। | वेदरत्न |
| ,, पं० घनश्यामचन्द्रजी शास्त्री लक्ष्मणगढ़, सीकर। | विद्यारत्न |
| ,, पौराणिक बालकृष्ण पुरुषोत्तम शारङ्गपुर, राधाकृष्णमन्दिर, अहमदाबाद। | विद्याभूषण |
| ,, कौशिकराम विघ्नहरराम बी० ए० खाडिया वनिताविश्राम, अहमदाबाद। | विद्यारत्न |
| ,, स्वामी दर्शनानन्दजी प्रिंसिपल श्रीचन्द्रविद्यालय, काशी। | वेदान्तभूषण |

| नाम और पता | उपाधि |
|---|---|
| ,, के० भुजबली शास्त्री (एन० ए० एन० के० बी०) चीफ लाईब्रेरीयनसेन्ट्रल जैन लाईब्रेरी, आरा। | विद्याभूषण |
| ,, पं० गणेशदत्त मिश्र एरियन रोड, दानापुर ( पटना )। | पण्डितभूषण |
| ,, पं० अमीरचन्द्र साहित्यशास्त्री ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार। | विद्यारत्न |
| ,, पं० गोपालदत्तशास्त्री, ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार। | विद्यालङ्कार |
| ,, पं० विष्णुदत्त शास्त्री ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार। | विद्याभूषण |
| ,, पं० रघुनन्दन शर्मा स्नातक ऋषिकुल ब्रह्मचर्याश्रम हरद्वार। | वेदालङ्कार |
| ,, पं० नीलाम्बर पन्त वेदशास्त्री ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार। | ,, |
| ,, पं० शिवनाथशर्मा शास्त्री , साहित्यभूषण नरपीरस्थान श्रीनगर ( काश्मीर )। | विद्यावारिधि |
| ,, पं० अवधकिशोरदास 'श्रीवैष्णव' मु० कटाव, पो० मोरवाड़ा, बनालकाठा श्री जानकी घाट, अयोध्या। | वेदान्तभूषण |
| ,, पं० शंकरप्रसाद कालीदास शास्त्री माढिया शेरी, बाजवाड़ा बड़ौदा। | याज्ञिकरत्न |
| ,, पं० जगदीशप्रसाद मिश्र श्री वेंकटेश्वर स्टीमप्रेस, बम्बई। | विद्यारत्न |
| ,, पं० गोपालशास्त्री दर्शनकेशरी साहित्याचार्य काव्य न्यायतीर्थ, ( छपरा )। | महामहाध्यापक |
| ,, पं० नत्थीलालदेव शास्त्री कात्यायनी पीठ, वृन्दाबन। | |
| ,, पं० रामचन्द्र शास्त्री, संगरिया, बीकानेर। | विद्यालङ्कार |

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् पंडित बलदेव मिश्र राजपण्डित दरभंगा राज्य ( विहार )। | महामहाध्यापक |
| ,, पं० दुर्गादत्तजी उप्रेती शास्त्री मु० कपीना, अल्मोड़ा। | वेदान्तभूषण |
| ,, पं० सतीन्द्रचन्द्र न्यायाचार्य व्याकरणतर्कतीर्थ, विद्यालङ्कार, मु० घोषकान्ता, पो० बजूरा जि० नोआखाली। | धर्मशास्त्रभास्कर |
| ,, पं० के० एस० रामस्वामी शास्त्री प्रधान पण्डित—सेन्ट्रल पुस्तकालय, बड़ौदा। | मीमांसावाचस्पति |
| ,, डाक्टर विनयतोष भट्टाचार्य डाइरेक्टर ओरियण्टल इस्न्स्ट्यूट बड़ोदा। | विद्यालङ्कार |
| ,, पं० जयकान्तमिश्र, रामनिवास आश्रम करनीबाद देवघर, वैद्यनाथधाम। | विद्याविभूषण |
| ,, काव्यविनोद सहित्यरत्नाकर, साहित्यवाचस्पति साहित्यसुधाकर श्रीमान् एम. कृष्णमाचारियर एम. ए. एम. एल. पी. एच. डी. एम. आर. ए. एस. एसिस्टेन्ट सेशनजज विजयापट्टम (मद्रास)। | शारदाविलास |
| ,, पं० रामचन्द्र न्यायरत्न २३।३।२।५ A. रूपनारायणलेन, भवानीपुर कलकत्ता। | महामहाध्यापक |
| ,, पं० गुरुपद हल्दार हल्दार पारालेन, कालीघाट, कलकत्ता। | वेदान्तभूषण |
| ,, पं० नडादूर स्वामी कृष्णमाचार्य लक्ष्मी मन्दिरम्, पो० नच्चियरकोयल, जि० तंजोर। | पण्डितराज |
| ,, पं० के० एल० बी० शास्त्री गवर्नमेंट विक्टोरिया कालेज कालपाती पालघाट, ( मद्रास )। | विद्यासागर |
| ,, पण्डित नारायणदीक्षित द्विवेदी अहमदाबाद। | वेदकर्मकाण्डविशारद |

| नाम और पता | उपाधि |
|---|---|
| **विविधविद्योपाधि** | |
| श्रीमान् पं० बालाशंकर मगनलाल शुक्ल, खाडिया पिपलासेरी, धोलेश्वर महादेवके पास, अहमदाबाद। | सामुद्रिकशास्त्ररत्न |
| ,, स्वामी नारायण धर्माचार्य श्री वासुदेवप्रसाद स्वामी, नारायणमन्दिर अहमदाबाद। | शास्त्रवारिधि |
| ,, प० केशवलाल अमृतरामशास्त्री शाहपुर गसा गान्धीनीपोल, अहमदाबाद। | शास्त्रविशारद |
| ,, ज्योतिर्विद् पं० गिरिजाशंकर हरिशंकर साकडीसेरी हजीरानीपोल, अहमदाबाद। | दैवज्ञशिरोमणि |
| ,, पं० हरिलाल पी० धोलकिया मैनिंज डाइरेक्टर सौराष्ट्रहाई स्कूल पो० राजकोट काठियावाड़। | साहित्यवारिधि |
| ,, श्रीबालानन्दजी C/o स्वामी स्वरूपानन्दजी मण्डलेश्वर टेढ़ीनीम, काशी। | आयुर्वेदभूषण |
| ,, पं० कन्हैयालालजी वैद्य कालवादेवी रोड बम्बई। | वैद्यभूषण |
| ,, पं० बालमुकुन्द वैकुण्ठराय शास्त्री वीरपुर रेवाकाठा, बम्बई। | साहित्यरत्न |
| ,, पं० धनञ्जयशास्त्री बम्बई। | ज्यौतिषरत्न |
| ,, बाबू वासुदेवनारायणसिंह बी० ए० सब इन्स्पेक्टर आफ स्कूल, सुल्तानगंज, जि० भागलपुर। | विद्याभूषण |
| ,, पं० रेवाशंकर मेघजी शास्त्री, अध्यापक देवीदास लल्लुभाई सं० पा० गुलालबाड़ी। | महोपाध्याय |
| ,, पं० जटाशंकर शुक्ल वैदिक बम्बई। | कर्मकाण्डविशारद |

| नाम और पता | उपाधि |
|---|---|
| ,, गोस्वामी श्रीमदनिरुद्धाचार्यजी शुद्धाद्वैतकेसरी वेदान्तसुधाकर बम्बई। | महोपाध्याय |
| ,, वैद्य रमणीकलाल जेठामल रीचिरोड, दवे फार्मेसी, अहमदाबाद। | आयुर्वेदविशारद |
| ,, मिश्र कैलासनाथ हनुमानप्रसाद काल्लू पुर हीरालाल, नूडहेल्लू अहमदाबाद। | भिषग्रत्न |
| ,, प० देवकृष्ण दयाशंकर पुरोहित मु० पो० थान, काठियावाड़। | साहित्यरत्न |
| ,, वैद्य पञ्चानन राजवैद्य श्रीमान् जीवराम कालीदास रसवैद्य, रसशाला औषधाश्रम गोंडाल, काठियावाड़। | चिकित्सकचूड़ामणि |
| ,, पं० रामोत्साह मिश्र शास्त्री ज्यौतिपाचार्य मु० केवरा, पो० वासडीह, जि० बलिया। | ज्योतिर्भूषण |
| ,, पं० बालमुकुन्द बैकुण्ठ शास्त्री भुलेश्वर कैथीड्रील स्ट्रीट सकलाधीश मन्दिर बम्बई। | साहित्यरत्न |
| ,, वैद्यरत्न पं० रामरत्नजी, वांसबाजार अमृतसर। | वैद्यभूषण |
| ,, पं० पुरुषोत्तम बी० वैद्य, राजवैद्य ३३६, कालवादेवीरोड बम्बई। | वैद्यविशारद |
| ,, पं० बालकृष्ण ज्योतिषी गोसेवक मु० पो० कुरम जि० अंकोला ( बरार )। | ज्योतिर्भूषण |
| ,, पं० सुरेन्द्रदत्तपाण्डेय मु० दुवहर पो० भड़सर जि० बलिया। | वैद्यभूषण |
| ,, पं० घुरामिश्र वैद्य, मु० राघवपुर पो० विहटा, ( पटना )। | वैद्यभूषण |
| ,, बाबू उग्रदत्त सिंह मु० काशीपुर, पो० हरैया जि० बस्ती। | वैद्यभूषण |
| ,, पं० छगनलाल नारायण ज्योतिषी, समडी पोल, वादवाड़ा बड़ौदा। | दैवज्ञविभूषण |

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् पं० जगन्नाथ त्रिपाठी मु० डहरौली, पो० रुद्रपुर, जि० गोरखपुर। | वैद्यभूषण |
| ,, काजी मुहम्मदहुसेन, युनानी वैद्य, काशीपुर नैनीताल। | भिषग्विभूषण |
| ,, पं० गंगादत्त पन्त राजवैद्य, काशीपुर नैनीताल। | आयुर्वेदभूषण |
| ,, पं० रामसहायजी मेरठ। | आयुर्वेदवारिधि |
| ,, पं० रोशनलाल शर्मा वैद्य, मेरठ। | भिषग्रत्न |
| ,, गोस्वामी रामकृष्ण विशारद जम्बू राजकीय मन्दिर, जम्मू। | भिषग्भूषण |
| ,, पं० मनसाराम शर्मा चुरु। | भिषग्रत्न |
| ,, पं० सूर्यनारायण व्यास उज्जैन। | ज्यौतिषसुधाकर |
| ,, पं० मुनिराम शास्त्री, मु० रसशाला, कनखल, जि० सहारनपुर। | आयुर्वेदभूषण |
| ,, पं० लक्ष्मणदत्त जोशी मु० मनोहरपुर, पो० प्रतापगढ़ जि० जयपुर। | वैद्यभूषण |
| ,, प० ताराचरण शर्मा मु० रमाला, पो० कीरथल जि० मेरठ। | वैद्यभूषण |
| ,, रजनीकान्त शास्त्री बी० ए० बी० एल० बक्सर, (शाहाबाद)। | ज्योतिर्भूषण |
| ,, श्रीमती निर्मलादेवी ८२ दादिया सेठ अगियारी लेन बम्बई। | विद्यापारिजात |
| ,, एस० एन० कविराज काव्यतीर्थ गोरखपुर, जि० जब्बलपुर। | आयुर्वेदभूषण |
| ,, निरञ्जनानन्द वैद्य रसायनकार्यालय, अबोहर, जि० फीरोजपुर। | भिषग्भूषण |
| ,, प० हरकृष्णदयालुजी राजज्यौतिषी सुकेत स्टेट (पञ्जाब)। | ज्योतिर्भूषण |
| ,, प० कैलासपतिमिश्र मु० अहियापुर, पो० भोरे जि० सारन। | ज्यौतिषालङ्कार |

| नाम और पता | उपाधि |
| --- | --- |
| श्रीमान् प० रामस्नेहीजी, रेवाड़ी ( पञ्जाब ) | कविभूषण |
| ,, महन्त भगवान्दासजो महाराज यमुनातट, इटावा । | महन्तभूषण |
| ,, गोस्वामी राधागोविन्दजी, दुर्गाचरण पितरीलेन, बहुबाजार कलकत्ता । | पुराणकोविद |
| ,, पं० दयाचन्द्जैन वैद्य, भारतभैषज्यभण्डार इटावा । | आयुर्वेदविभूषण |
| ,, पं० चन्द्रिकाप्रसादमिश्र मु० आटा, पो० परसपुर, जि० गोण्डा । | वैद्यशास्त्री |
| ,, लाला मदनगोपालसिंहल सदर बाजार मेरठ । | साहित्यभूषण |
| ,, गोस्वामी व्रजनाथशर्मा, शीतलागली आगरा । | साहित्यभूषण |
| ,, पं० वाराणसीदत्त शर्मा ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार । | हिन्दीभूषण |
| ,, पं० रामसुन्दरपांडेय साहित्याचार्य, हेड पण्डित गवर्नमेण्ट हाई स्कूल बस्ती । | हिन्दीरत्न |
| ,, पं० दुग्धनाथ पाण्डेय मु० बसांव पो० वसन्तपुर, जि० सारन । | वैद्यभूषण |
| ,, पं० कृष्णदत्त भारद्वाज एम० ए० आचार्यशास्त्री माडर्न हाई स्कूल, न्यू दिल्ली । | साहित्यरत्न |
| ,, पं० लोकनाथ द्विवेदी, ( प्रधान सम्पादक ) 'हिन्दी वंगवासी' कलकत्ता । | साहित्यरत्न |
| ,, पं० सूर्यदेवमिश्र, अध्यापक, जयनारायण हाईस्कूल बनारस । | साहित्यरत्न |
| ,, सेठ बाबू मूलचन्द अग्रवाल, प्रोप्राइटर— 'विश्वमित्र' तथा 'एडवांस' विश्वमित्र कार्यालय, कलकत्ता । | विद्यालङ्कार |
| ,, पं० रामचन्द्र गोस्वामी श्रीराधारमण मन्दिर वृन्दावन । | गोस्वामीकुलभूषण |
| ,, पं० व्रजविहारी पांडेय, बलिया । | साहित्यभूषण |

| नाम और पता | उपाधि |
|---|---|
| श्रीमान् श्रीमहाराणा उदयपुराश्रित ज्योतिर्विद् श्रीहनुमानप्रसाद मिश्र गौड़ात्मज– पं० रामचन्द्रशर्मा गौड़ जंगमबाड़ी, काशी । | ज्यौतिषरत्न |
| **संगीतविद्योपाधि** | |
| श्रीमान् एस० एन० रतनजंकर बी० ए० प्रिंसिपल मारिसकालेज आफ म्युजिक लखनऊ । | सगीतरत्नाकर |
| ,, उस्ताद खुदाबक्स अहमद बक्सखां साहब, ध्रुपदिया, हरियाना जि० होसियारपुर (पञ्जाब) । | संगीतभूषण |
| ,, उस्ताद महम्मदहुसेन खां साहब, उर्फ हींगन खां, नं० ३ मानिकताला हाजिजकरियालेन, कलकत्ता । | संगीतविनोद |
| ,, पं० आत्माराम शर्मा 'शोख" सीतारामकुटी, पहाड़गञ्ज दिल्ली । | कीर्त्तनकलाभूषण |
| ,, श्रीगुहादास, सिगलीपुरम् जि० तंजोर । | संगीतभूषण |
| ,, ठाकुरदत्त शर्मा कथावाचक, मेरठ सिटी । | कीर्तनकलाभूषण |
| ,, रहीमुद्दीन खां इन्दौर । | संगीतरत्न |
| ,, श्रीमती सरस्वती बाई गायनपटु, कीर्तनपटु । | |
| ,, C/o पं कृष्णाचार्य ट्रीप्लीकेन, मद्रास । | संगीतरत्न |
| ,, रामकमल भट्टाचार्य, देवनाथपुर, १९७ बंगालीटोला बनारस । | कीर्तनकलाविशारद |

# गङ्गाशतकम् ।

रचयिता—पं० नारायणपति त्रिपाठी महोदयः काशीस्थः ।

[ अस्मिन्नेवाङ्के प्रकाशितात् ५०—पञ्चाशत्तमपृष्ठादग्रे ]

ये मज्जनार्थं प्रतियान्ति गङ्गे !
विगाहितं यै स्तव वारि नित्यम् ।
स्नातुं समेष्यन्त्यथ ये मनुष्या
स्तत्पादधूल्या स्वमहं पुनामि ॥६६॥

पराङ्गनाभोगविलाससक्तै
र्न पूजितो यै स्सुमना गुरुर्वा ।
गोघ्नान् द्विजघ्नान् गुरुतल्पगांश्च
पुनासि तानम्ब निजाम्बुलेशैः ॥६७॥

ये घोरपापा कलिकल्मषेषु,
निबद्धभावा अभियान्तु तेऽद्य ( सद्यः ) ।
इति स्वनद्वारितरङ्गहस्तै
स्समाह्वयन्ती विजयस्व गङ्गे ! ॥६८॥

दास्यामि गालिं गणनाविहीनां,
करोमि निन्दां जनतामुपेतः ।
पश्यामि धैर्यं सहसे कियत्त्वं,
कुपुत्रदौरात्म्यमहो कठोरम् ॥६९॥

विरागजज्ञानपथप्रसङ्गा
स्तडिल्लताविभ्रमलोलदङ्गाः ।
दोलायमानाविहरद्विहङ्गा
जयन्ति गीर्वाणधुनीतरङ्गाः ॥७०॥

मात ! स्त्वदुत्सङ्गगतोऽधुनाऽहं,
धय (पिब) न्पयस्ते विलसंस्त्वदीयैः ।
तरङ्गहस्तै रतिलाल्यमानः
स्वपृष्ठदेशे जननीं स्मरामि ॥७१॥

गङ्गे ! त्वदम्भश् श्रयतान्न केषां,
स्वयंवरा मुक्तिवधूर्गलेषु ।
विज्ञानकल्पद्रुमपुष्पमालां,
सम्मेलयन्ती भ्रमति त्रिलोक्याम् ॥७२॥

के वा देवा न तव सलिलैः स्नापिता जह्नुकन्ये !
के वा सेवाकरणविधिना न स्तुवन्तिस्म धन्ये ! ॥
के वा पापाचरणशरणा नैव मुक्ता वदान्ये !
के वाऽभीष्टा न च सुकृतिभिर्लभ्यमाना न मन्ये ॥७३॥

दशाश्वमेधे मणिकर्णिकायां,
केदारकुण्डे वरणासिसङ्गे ।
श्री (त्वत्) पञ्चगङ्गे निवसन् स्वकाश्यां,
स्नायी कदा स्यां कलिकामधेनो ! ॥७४॥

समस्तपापौघविनाशमूलं,
स्वभक्तसद्भक्तिविलासतूलम् ।
विमुक्तिबालाविगलद्‌दुकूलं,
भजामि गङ्गे ! तव दिव्यकूलम् ॥७५॥

यन्नामस्मरणेन योजनशतैर्दूरङ्गता मानवा
स्तीर्त्वा संसृतिसागरं सुकठिनं गण्डूषमण्डूकवत् !
पापौघान्परिहाय हन्त ! सुमनोवृन्दोर्चिताङ्घ्रिद्वया,
यान्ति श्रीपतिलोकमाशु सहसा दिव्याङ्गनालालिता ॥७६॥

पिपासाशान्त्यर्थं वितरति सदा स्वादुसलिलं,
क्षुधातृप्त्यै धान्यान्यथ कमलबीजान्यपि च या ।
स्वकूलक्षेत्रेषु प्रकिरति मुदा पङ्कनिचयान्,
पुनाना त्रैलोक्यं जयति जननी जह्नुतनया ॥७७॥

ज्ञात्वा विष्णुपदोद्गतां भगवतीं भागीरथीं मुक्तिदा,
तन्माहात्म्यविलङ्घनोत्सुकतया या सत्वरागत्वरा ।
ईर्ष्याव्यापृतमानसाऽतिमलिना कीनाशतातात्मजा,
स्पृष्ट्वा श्रीवसुदेवसूनुचरणाङ्गुष्ठं कृतार्थाऽभवत् ॥७८॥

चेतश्चिन्तय सादरं हिमवतश्शृङ्गात्पतन्तीमिमां,
रे पादौ ! मम गच्छतञ्च पुलिनं श्रीजह्नुजायाश्शुभम् ।
चक्षुः ! पश्य तरङ्गितं जलचयं रे घ्राण ! जिघ्राम्बुजं,
गङ्गेत्यक्षरयुग्मकं रट मुदा जिह्वे रसास्वादिनि ॥७९॥

त्रिविक्रमपदोद्भवा त्रिविधतापसंहारिणी,
त्रिलोचनशिरोगता, त्रिदिवमार्गसंस्कारिणी ।
त्रिसन्ध्यमुनिसंस्तुता त्रिनयना जगत्तारिणी,
त्रिविष्टपतरङ्गिणी त्रिपथगामिनी मामवेत् ॥८०॥

देहार्द्धदानाद्गिरिराजपुत्र्यै,
केशग्रहं या गिरिशस्य चक्रे।
सापत्न्यभावात्कुटिलं प्रयान्त्या-
स्तदेव युक्तं तव निम्नगायाः ॥८१॥

विचार्य्य धाष्ट्र्यं गिरिराजकन्ये !
मन्ये महेशो भवतीं मुमुक्षुः।
निगील्य हालाहलमम्ब ! मत्तो,
भ्रमत्यसौ सागरसङ्गमात्ते ॥८२॥

या स्नातुं समुपागतान्निजजनांल्लोलत्तरङ्गभ्रमै-
स्स्पृष्ट्वा स्पर्शसुखावहै स्तनुभिर्हस्ताम्बुजातोपमैः।
हिन्दोलागमनागमौ प्रकुरुते शश्वत्स्वपुत्रानिव,
हा हा !! तां जननीं विहाय करुणामूर्त्तिं कुतस्ते श्रमः ॥८३॥

यद्धारानिपतन्निवद्धमुसलाकाराम्बुधाराधरै-
रत्याच्छादितभूतिरोहिततटोद्भूतद्रुमालिच्छविः।
ध्वान्तध्वंसचलत्तडिद्रवरवत्पाथःप्रवाहच्छटा,
रोधस्थै रवलोक्यते सुरधुनी स्वर्गात्पतन्ती भुवम् ॥८४॥

सेतुं समारुह्य विलोकयेच्चेत,
तदन्तराले शुचिगाङ्गधाराम्।
ब्रूयादवश्यं मनुजोऽत्र काश्यां
पातालगङ्गा सुतरामधस्स्था ॥८५॥

मिलद्वीचिपूरे तटीस्थे कुटीरे,
वसंस्त्वत्प्रतीरे निमज्जंश्च नीरे।
प्रविष्टः समीरे परित्यक्तचीरे,
स्वकीये शरीरे कदा निस्स्पृह स्स्याम् ॥८६॥

अयि ! सागरतारिणि सागरवारिणि वीचिविहारिणि कञ्जकरे !
काशीतलवाहिनि मङ्गलदायिनि मकरस्थायिनि देवि ! परे !।
कृतहरिपदवासे सुकृतविकाशे दुरितविनाशे देवनुते,
तुहिनाचलकन्ये ! त्रिभुवनधन्ये जय–जय गङ्गे जह्नुसुते ॥८७॥

( क्रमशः )

# कलङ्कमोचनम् ( नाटकम् )



[ त्यक्त महामहोपाध्याय पदवीक—श्रीपञ्चानन तर्करत्न भट्टाचार्य—विरचितम् ]

## प्रस्तावना

राधासङ्गभवोर्जितस्रुतिरसा बर्हश्रियं पुष्णती
प्रोड्डीनालिविलोल-माल-चपलापीताम्बराडम्बरा ।
कालिन्दीतटिनीतमालविटपिच्छायासमालम्बिनी
पापं तापमपास्यतां सपदि वः श्रीकृष्णकादम्बिनी ॥१॥

अपि च—

जगदालोकगोलोकरासमण्डलमण्डनम् ।
खण्डनं सर्वतमसां पातु वो राधिकामहः ॥२॥

नान्द्यन्ते सूत्रधारः—अलमतिप्रसङ्गेन, आह्वयामि तावद्द्वितीयां मदनुवर्त्तिने द्वितीयां मे परिषदमिमामाराधयितुं नवेन प्रयोगेण। ( नेपथ्याभिमुखमवलोक्य ) आर्ये इतस्तावत्।

नटी—( प्रविश्य ) इअं दावह्मि, आणवेदु अज्जो किं करणिज्जं त्ति। [ इयं तावदस्मि, आज्ञापयतु आर्यः किं करणीयमिति ]।

सूत्र०—आदिष्टोऽस्मि वाराणसेयविदग्धैः कश्चिन्नवः प्रयोगः प्रवर्त्यतामिति। तद् भवत्याः साहायकमत्र कामये।

---

( १ ) श्रीकृष्णपक्षे—राधायाः श्रीराधिकायाः सङ्गो मेलनम्। ऊर्जितस्रुतिः प्रबलगतिः। रसः प्रीतिः। बर्हश्रियं चूडायां सन्निवेशनेन बर्हस्य मयूरपिच्छस्य श्रियं वर्द्धयन्, बर्हधारण-जन्यां शोभां दधत् वा। प्रोड्डीनभ्रमरा विलोला माला यस्य—स चासौ चपला-पीताम्बरा-डम्बरश्चेति विशेषणसमासात्। अलिः भ्रमरः। विलोला चञ्चला। माला पुष्पमाला। चपलावत् पीतं यत् अम्बरं तस्याडम्बरः विन्यासः यत्र। तेन आडम्बरयति हर्षं जनयति इति वा। तापः संसारक्लेशः। अत्र पक्षे लिङ्गविपरिणामः। कादम्बिनी पक्षे—राधो वैशाख-मासः, आसङ्गः मेलनम्। ओर्जितस्रुतिः कार्तिकमासपर्यन्तं कृता स्रुतिः क्षरणं यस्य तादृशो-रसः जलं यस्याः। ऊर्ज्जः कार्त्तिकमासः आ ऊर्ज्जात् ओर्ज्जं तद्वती वा कृता ओर्ज्जिता। "आ वैशाखाद् भुजगवनिताचुम्बनायासखिन्नो देवो दैत्यप्रमथनपटुर्यावदेकान्तशान्तः। अम्भःशय्यापरिगततनुर्योगनिद्रामुपैति तावद् वृष्टेः समय उदित"इति ज्यौतिषवचनात् वैशाखमारभ्य श्रीहरिशयनसमयव्यापी वृष्टिपतनकालः। अन्यच्च, मार्गशीर्षमासमारभ्य चैत्रान्तं यावन्न वृष्टिपतनसमयः, तदानीं वृष्टिपाते अकाल-वर्षणजो दोष इति ज्ञेयम्।

नटी—आस्सवह्मि अज्जस्स, आणवेदु अज्जो कदमो पश्रोश्रो अणुट्ठादव्वो त्ति। [ आश्रवास्मि आर्यस्य, आज्ञापयतु आर्यः कतमः प्रयोगोऽनुष्ठातव्य इति ]।

सूत्र०—अपि ज्ञायते भवत्या ?

वाशिष्ठाद्यैर्द्विजबुधवरैः शोभितो भट्टपल्ली-
नामग्रामः सुरसरिदभिष्यन्दनप्रत्यगन्तः।
आसन्नायां यमदिशि मतो यो नवद्वीपधाम्नो
विद्याचारस्फुरितगरिमा विश्रुतो गौडभूमौ ॥ ३ ॥

नटी—अज्ज, गोदमसिद्धपुरिसाणं अह्लालभट्टवादाणं पढमग्गहारदाए भट्टवल्लित्ति जस्स नाम, तं कधं ण आणामि ? [ आर्य, गौतमसिद्धपुरुषाणाम् अह्लालभट्टपादानां प्रथमाग्रहारतया भट्टपल्लीति यस्य नाम, तं कथं न जानामि ]।

सूत्र०—( सहर्षम् ) अयि विदुषि, तेषामेव, महापुरुषाणामधस्तनैकादशपुरुषेण तद्ग्रामाभिजनेन कवित्वकीर्तिमण्डित-नन्दलालविद्यारत्न-भट्टाचार्यतनूजन्मना श्रीपञ्चाननतर्करत्नभट्टाचार्येण विरचितं कलङ्कमोचनं नाम नाटकं प्रयुयुक्ष्यतेऽस्माभिः। किमत्र वा भवती मन्यते ?

नटी—( सहर्षम् ) सुट्ठु णिरूविदं अज्जेण, जदो इमिणा पश्रोएण अह्माणं वि कलङ्कमोश्रणं हुविस्सदि [ सुष्ठु निरूपितमार्येण, यतः अनेन प्रयोगेण अस्माकमपि कलङ्कमोचनं भविष्यति ]।

सूत्र०—( सवितर्कम् ) भिन्नार्थमिदमुच्यताम्।

नटी—( संस्कृतमाश्रित्य )

यन्नाम स्मरतां पदानुसरणादन्त्याः पुलिन्दादयो
मुक्ता जात्यपकर्षहेतुकलुषाद् दीव्यन्ति देवैर्दिवि।
शौरेस्तस्य पदानुकारकलया तद्भावसम्भाविताः
किं शैलूष्यकलङ्कपङ्करहिता न प्राप्नुमः सद्गतिम् ? ॥ ४ ॥

---

बर्हेति। मेघागमे मयूरा नृत्यन्ति, तेन बर्हश्रीर्भवति। प्रोड्डीनेति प्रोड्डीना आलयः श्रेण्यो येषां ते वयः पक्षिणः बलाका इति यावत्, तेषां लोलाः चपलाः मालाः यत्र एकैकश्रेणी बद्धा बलाका उड्डीना मालायमाना अभवन्, ताश्च माला बह्वयः, चञ्चलतया विसंष्ठुलाश्चेति स्वभाववर्णनम्। चपलाभिः विद्युद्भिः पीतः अम्बरस्य आडम्बरो दर्पो यया। आकाशस्य सर्वव्यापित्वदर्पविषं विद्युद्द्वारा पीतवतीत्यर्थः, विद्युतामाकाशापेक्षया व्यापकत्वोक्तिः। अथवा विद्युद्भिः पीते पीतवर्णे अम्बरे आकाशे आडम्बरः तूर्यरवो गजेन्द्रगर्जनं वा यस्याः सा। कालिन्दीति। छाया कान्तिः। समा तुल्या। आलम्बिनी दूरविलम्बिनी। तापं निदाघक्लेशम् ॥ १ ॥

( ४ ) किरातहूणान्ध्रपुलिन्दपुक्कसाः × × × यदुपाश्रयाश्रयाः शुध्यन्तीति श्रीमद्भागवतवचनार्थं स्मरन्ती नटी वदति—यन्नाम स्मरतामिति। जात्यपकर्षहेतुभूतानि कलुषाणि बहुजन्मा-

( नेपथ्ये )

यन्नामप्रतिरूपकेण तनुजं स्वीयं मुमूर्षुः स्मरन्
पापः प्रापदजामिलः परपदं मुक्तः समस्तैरघैः ।
साक्षात् तस्य हरेः कथामनुवदत्यन्त्येऽपि शान्तांहसि
श्रीनाथस्य कृपाश्रये वसतयेऽलं कः कलङ्कक्रमः ? ॥ ५ ॥

सूत्र०—( विलोक्य ) आर्ये पश्य, एष मुनिवरो गर्गः समर्थयमान इव भवत्या वचनं श्रीराधापवादश्रवणविमूढं शिष्यमुपदिशन्नित एवाभिवर्तते, तदावामित एव प्रणम्यैनमचिरनिर्वर्त्यस्वकृत्यसम्पादनाय साधयावः । (इति सप्रणामं निष्क्रान्तौ ।)

( इति प्रस्तावना )

विष्कम्भकः ।

( तत्र प्रविशति सशिष्यो गर्गः )

गर्गः—

( तदेव पद्यं पुनः पठति )

यन्नामप्रतिरूपकेण तनुजं स्वीयं मुमूर्षुः स्मरन्
पापः प्रापदजामिलः परपदं मुक्तः समस्तैरघैः ।
साक्षात्तस्य हरेः कथामनुवदत्यन्त्येऽपि शान्तांहसि
श्रीनाथस्य कृपाश्रये वसतयेऽलं कः कलङ्कक्रमः ॥ ६ ॥

---

न्यनुवर्तन्ते, तत्र प्रथमे हीनजन्मन्यपि यदि श्रीकृष्णनामस्मरणपराणां स्थानानुसरणं चरणसेवा वा घटते तदा तज्जन्मन्येव तत्पापमुक्ताः स्वर्गं भुञ्जते । तस्य शौरेः श्रीकृष्णस्य पदानुकारकलया व्यवसितानुकरणस्य कयाचिन्मात्रया तद्भावेन सम्भाविताः आत्मनि तद्भावमारोप्य सम्भाविताः अन्येभ्यः सम्भावनां सम्माननां प्राप्ताः, शैलूष्यकलङ्कमुक्ताः नटजाति-लाभ-हेतु-भूत-पापरहिताः । न प्राप्नुमः वर्तमानसामीप्ये लट्, एतद्देहपातानन्तरमेव न तु जन्मव्यवधानापेक्षेति सूचनाय ।

( ५ ) अतः परं प्रथमाङ्कविष्कम्भकस्य पात्रप्रवेशसूचकं नेपथ्यवचनं यन्नामेति । अस्यायमाशयः, गर्गशिष्यो बौधायनः श्रीराधाया जारसङ्गकलङ्कं कर्णाकर्णिकया श्रुत्वा तत्त्वनिर्णयार्थं स्वगुरुं पृष्टवान्, तत्र गुरुरुत्तरं वक्तुमुपक्रममाणो यत् पद्यमुक्तवान् तदेवेदम् । कलुषकर्मकृत् अजामिलो मुमूर्षादशायां नारायणनामकं स्वसुतमाहूतवान्, अत एव तादृशो नारायणशब्दो न भगवन्नारायणार्थक इति नारायणप्रतिरूपकत्वकथनम् । श्रीकृष्णस्य कृपालवपात्रेऽपि कस्यापि कलङ्कोदयस्यावसरो नास्ति, अस्य पद्यस्यायं भावः । तदुत्तरस्य अस्य तु प्रवेशानन्तरं वचनमस्ति । तयोरुभयोस्तात्पर्यन्तु—यदा श्रीकृष्ण-कथानुवादपरस्यान्त्यस्यापि जनस्य कोऽपि कलङ्कोदयो न भवेत्, तदा श्रीकृष्णस्यापरमूर्त्तौ श्रीराधायां कलङ्क इति तु कल्पनामात्रं न तु वास्तवमिति ।

अत एव वत्स बौधायन !

कलङ्कः कल्पनामात्रं श्रीराधायां तदात्मनि ।
नित्यतेजसि मार्तण्डे यथा दर्पणकालिमा ॥ ७ ॥

बौधायनः—( साञ्जलिबन्धम् ) भगवन्, युज्यत एवेदं यदि श्रीराधा तदात्मा स्यात्, स्याच्च तत्पदार्थो नन्दनन्दनः, न चैतत् प्रतिपद्यते तर्कपरो लोकः ।

गर्गः—वत्स ! ततः किम् ?

नालीको नलिनीनाथो यदन्धो नैनमीक्षते ।
विमूढानामबोधेन तत्त्वं न परिलुप्यते ॥ ८ ॥

अपि चाम्नायते नैषा तर्केण मतिरापनेयेति ।

बौधा०—( साञ्जलिबन्धम् ) अस्तु लोकतर्कः, यदेव तत्त्वं तदुपदिश्य कृतार्थी क्रियतामयं दासः ।

गर्गः—साधु वत्स ! यस्त्वं श्रीराधाकृष्णतत्त्वश्रवणे पर्युत्सुकोऽसि । तदवधेहि—

बौधा०—भगवन् ! अवहितोऽस्मि ।

गर्गः—श्रीमद्गोलोकधाम्नि क्वचन लीलाव्यतिकरे कुपितया श्रीराधया श्रीकृष्णं प्रति भूतलावतरणायाभिशप्तम्, ततश्चामर्षवशेन तत्प्रियानुचरेण श्रीदाम्नाऽधिक्षिप्ता श्रीराधा श्रीदाम्ने, श्रीदामा च तस्यै परस्परं शापमुत्ससर्ज । येन श्रीदाम्नो नर-जन्म श्रीराधायाश्च भूतलावतरणं छायया रायाणजायाभावः पौंश्चल्यपरिवादः शत-वार्षिकः श्रीकृष्णविच्छेदश्च नियतः ।

( बौधायनो विस्मयं नाटयति )

अथ भक्तवत्सलस्य भगवतः श्रीकृष्णस्य श्रीराधापरिरक्षणाय प्रतिपन्न-भूभारहर-णाय च नन्दनन्दनतया प्रादुर्भावो रहसि वास्तवश्रीराधापरिणयनञ्चेति तदेतत् सङ्ग्रहपद्यम्—

श्रीदामोद्दामशापं सफलयितुमना राधिकाऽत्रावतीर्णा
माया रायाणजायाऽजनि जनविदिता छाययाच्छन्नकाया ।
तस्या गोलोकनाथस्त्वभिलषितकरो नन्दपुत्रायमाणः
पाणिं जग्राह गूढं पृथुकतनुरनुध्यायमानो मुनीन्द्रैः ॥ ९ ॥

बौधा०—भगवन् ! भागधेयं मे, श्रवणपुटेन यदेतदमृतरसास्वादो जायते ।

गर्गः—( सपरितोषम् ) वत्स ! यद्येवम्, मननानुकूलं तर्कमुपदिशामि ।

( ६ ) अत्र ब्रह्मवैवर्तपुराणकथा अनुसन्धेया ।

तथाहि—

स्तनन्धयेन येनातिदारुणा पूतना हता।
सप्ताब्देनोद्धृते चाद्रिः सप्ताहानि शिलीन्ध्रवत्॥ १०॥

तं नन्दनन्दनमशेषजगन्निदानं भूमानमर्भकतया कलयन्ति मूढाः।
भूमण्डलादतिबृहन्त्यपि तारकाणि खद्योतवल्लघुतराणि विदन्ति बालाः॥११॥

बौधा०—भगवन्! दृष्टान्तेऽस्ति दूरत्वं दोषः।

गर्गः—अत्राप्यस्ति तावत्, आसुरभाव एव दोषः, येन हि समाक्रान्तचेताः पुरुषः—

अखिलपतिरुपात्तमर्त्यलीलस्तदुचितमाचरतीह सर्वशक्तिः।
नट इव धृतभूमिकानुवर्त्ती क्वचिदितरन्निजमायया तु गूढः॥ १२॥

इति नावबुध्यते।

बौधा०—भगवन्! अनेन श्रीराधाकृष्णतत्त्वाधिगमेन कृतार्थोऽस्मि।

भगवन्मुखपद्मोत्थराधाकृष्णवचोमधु।
पायं पायं पुनः पातुं मनोऽलिस्त्वरते मम॥ १३॥

गर्गः—( सहर्षम् ) वत्स! तदारूढोऽसि कल्याणनिःश्रेणिम्।

अद्याध्यापनमर्थवन्मम यतो जाता रतिस्तेऽच्युते
सिद्धं ते तपसः फलं हरिकथा शुश्रूषिता यत्त्वया।
मन्दानां कुमतिप्रपञ्चरचितस्तर्कोऽप्यभून्मे सखा
राधाकृष्णरहस्यवर्णनशुभं जातं यदामर्शनात्॥ १४॥

वत्स! तदेहि निवर्त्तित-सायन्तन-यमुनाभिषेकास्तावदाश्रमपदं प्रविश्य तत्र हूयमानाग्नौ—

वन्दामहे क्रन्दितदन्दशूकं मन्दाकिनीस्यन्दनसुन्दरान्तम्।
आनन्दकन्दं जगदेकवन्द्यं श्रीमन्मुकुन्दस्य पदारविन्दम्॥ १५॥

( इति निष्क्रान्तौ )।

( इति विष्कम्भकः )

## प्रथमोऽङ्कः।



( ततः प्रविशति कुञ्जवनस्थः सुबलेन सहितः सोत्कण्ठः श्रीकृष्णः )

सुबलः—सखे! परमरमणीयोऽयं माधवीप्रदोषः। पश्य—

अनु मलयसमीरं कम्पते वल्लिरेषा
हिमकरकरमृष्टाः कैरविण्यो हसन्ति।
मधुकरपरिरम्भारम्भणानम्रवक्त्रे-
क्षणरुचिकुसुमाली मल्लिका मोदमेति॥ १॥

श्रीकृष्णः—( सनिःश्वासम् ) सखे ! अचेतना अपि कान्तसङ्गमेनैव प्रीतिमावहन्तीति पश्यामि ।

सुबलः—( स्वगतम् ) अस्त्वेतद्विरहोद्दीपकम् । ( प्रकाशम् ) इदमपरमुत्प्रेक्षणीयम्—

वहति मलयवाते भाति ते श्वासगन्धः
कुसुमकुलविकाशे भासते ते स्मितश्रीः ।
अलिरयमसिताभस्त्वच्छ्रिया स्पर्धमानो
मधुमथनविनोदी रौति वेणुं जिगीषुः । २ ॥

श्रीकृष्णः—अनुचितमिदमभिहितम्, यतः—

अभिमतकुसुमावलीरसैस्तैर्मुदितमनाः सुभगो द्विरेफराजः ।
कथमिव दयितोत्सुकं सखेदं जितमपि जेतुमनाः सुदुर्भगं माम् ॥ ३ ॥

सुबलः—(स्वगतम्) इदमपि तादृशमेव । तत् कथान्तरं पातयामि । (प्रकाशम्) सखे, इतो दृश्यतां यमुना—

आलम्बचञ्चलशशिप्रतिबिम्बदीप्रमध्या नवीनघनकान्तिरियं स्रवन्ती ।
आमुक्तनिर्मलसुवर्णसवर्णवासा नृत्यानुगा तव तनूरपरेव भाति ।

श्रीकृष्णः—सखे, युक्तमिदं मदेकबद्धहृदयस्य भवतः । मया तु—

दृष्ट्वा सान्द्रघनोपमानयमुनापूरोदरे सुन्दरे
पूर्णेन्दुप्रतिबिम्बमस्थिरमिदं स्रोतोभिरामर्शनात् ।
आलोलालकराजिराजितमहो नीलाम्बराया मुखं
राधायाः प्रतिषिद्धचुम्बनचलद्वृत्तं मुहुः स्मर्यते ॥ ५ ॥

( इति दीर्घं निःश्वसिति )

सुबलः—( सहास्यम् ) सखे, केवलमेकत्रैव मनस्ते भ्रमति ।

श्रीकृष्णः—सखे, महाभागधेयो भवान्, यत्र पतितोऽसि विषमशरशरसम्पातगोचरे ( इति दीर्घं निःश्वसिति ) ।

सुबलः—तथापि पृच्छामि, चिरलब्धया तत्र भवत्या राधया कथमद्यैतावदौत्सुक्यम् ?

श्रीकृष्णः—श्रूयताम्, अद्य पुष्पदोलयात्रा श्रीराधायाः प्रियकाम्यया सखीभिरनुष्ठीयते ।

सुबलः—अत एव कुञ्जमण्डपद्वयं दीपिकाभिरलङ्कृतमिति युक्तम् ।

श्रीकृष्णः—( सोद्वेगम् ) सत्यमेवमवसितप्रायसंविधानकेऽस्मिन्नभिलषितोत्सवे नोपयाति श्रीमतीति विपदाशङ्कया पर्याकुलोऽस्मि । तत् कथमिदानीमात्मानं विनोदयामि ?

सुबलः—सखे !

यस्याः स्वरस्वदनलोभविसृष्टशष्प-
ग्रासाः समेत्य परितः किल कृष्णसाराः।
निष्पन्दकर्णभवदाननमात्रबद्ध-
नेत्राः स्वनामसदृशाचरणा भवन्ति ॥ ६ ॥

तयैवानया वंश्या विनोदयात्मानम्।

श्रीकृष्णः—[ सोत्कण्ठम् ] नैतया साम्प्रतमात्मविनोदनं मे भविष्यति। यतः—

एषा वैशाखराकापतिपतितसुधासारहारोपहारा
यस्यां गोपीभिरिष्टः प्रणयरसमयः पुष्पदोलोत्सवो नः।
सा पूर्णामोदभारैः शिथिलगतिरतीताद्य यामा त्रियामा
राधासञ्चारचिह्नं किमपि न विपिने लक्ष्यते तत्सखी वा ॥ ७ ॥

सुबलः—सखे! किं तावदार्यायाः श्रीराधायाः सञ्चारचिन्हम्?

श्रीकृष्णः—[ दीर्घं निःश्वस्य ] सखे! श्रूयताम्—

विशति यदि वनेऽस्मिन् सा कुरङ्गायताक्षी
तदभिमुखमुपैति त्यक्तपुष्पालिमाला।
युगपदपि पिकाली काकलीमुद्गिरन्ती
प्रथयति निजहर्षं माधवश्रीप्रतीत्या ॥ ८ ॥

सुबलः—( सस्मितम् ) युज्यत इदम्। अपि च सुष्टूक्तम् माधवश्रीप्रतीत्येति।

श्रीकृष्णः—( सविमर्शम् ) कथमिव?

सुबलः—यतस्त्वमेव तस्याः श्रीः।

श्रीकृष्णः—सखे! मा मैवम्।

वसन्तलक्ष्मीरिति बुध्यमाना पिकावली गायति हर्षपूर्णा।
वंशाख्यया यद्यपि माधवोऽहं ममैव सा श्रीः न तु साऽस्मि तस्याः ॥ ९ ॥

प्रत्यक्षमेवैतत्ते यत् तया विनाऽस्मिन्नवसरे लुप्तश्रीरस्मि।

सुबलः—सखे! साऽपि त्वया विनैवं भवतीति मन्ये।

श्रीकृष्णः—अवितथमेवेदम्, तथापि तदीयोऽयं महिमा। तथाहि—

राधा प्रेममयी तदीयमिलनात् प्रेम्णाऽस्ति मे संस्तवो
दिष्ट्या तावदुपैति यस्य विषयो हेयोऽप्युपादेयताम्।
एवं सा गुणहीनमप्यभिमतं मां वेत्ति पूर्णं गुणैः
स्पर्शात् स्पर्शमणेरयोऽपि कनकीभावेन युज्येत वा ॥ १० ॥

सुबलः—सखे! वयं तु जानीमहे—

प्लवन्ते तिर्यञ्चः शिखिहरिणसारीशुकमुखाः
सखायः सख्यो वा जनकजननीभ्रातृसुहृदः।
गवां वृन्दं वृन्दावनधनमपीदं यदनृते
स ते प्रेमा सिन्धुर्भुवनविवरे माति न लघौ ॥ ११ ॥

श्रीकृष्णः—मत्प्रणयबद्धहृदयानां भवतामियं स्नेहपक्षपातिनी दृष्टिः तस्याः प्रेमाणमालक्ष्य विस्मितं तु मे हृदयम् । यतः—

नो भूषणानि, वसनं नहि, नापि लीला
नेपथ्यमण्डनविधि र्न च, नापि कान्तिः ।
तस्याः शरीरमपि नैव तदर्थसिद्ध्यै
कृष्णस्य सर्वमिति सा मनुते मृगाक्षी ॥ १२ ॥

( इति अश्रु मुञ्चति )

सुबलः—( त्वरितम् अश्रु प्रमार्ज्य ) सखे ! किमेतत् ?

श्रीकृष्णः—सखे ! श्रूयताम्—

अस्तं यातु दिवाकरो हिमकरः प्राप्नोतु मे दृक्पथम्
राधा सायमुपैष्यतीति सुखदामाशामपुष्यं दिने ।
आसन्ध्यं पुलकाञ्चितः प्रतिपलं तत्सङ्गमेनोत्सुकः
पश्चादुत्कलिकाकुलोऽथ विकलो जातोऽस्मि धैर्यच्युतः ॥ १३ ॥

यतः—

सखीजनापेक्षितया विलम्बते विलम्बते वा पतिसुप्तिकाम्यया ।
उपैत्युपैतीति मया मुहुः कृता, हृता वताशा मम लुप्यते धृतिः ॥ १४ ॥

सुबलः—सखे ! कथमेवमुत्ताम्यसि ?

अनतिपतिताभिसारसमया हीयं रजनी ।

यतः—

ज्योत्स्नाया रजताचलद्रवमयीं धारां धरा बिभ्रती
व्यक्तिं नक्तमपि प्रयाति दिनवच्छुभ्राम्बरालम्बिनी ।
तां मन्दानिलयोजनेन शनकैः सुप्त्या समाच्छादय-
न्निष्प्रत्यूहकुलाङ्गनाभिसरणे योग्यो निशीथागमः ॥ १५ ॥

श्रीकृष्णः—( अशृण्वन्निव )

हा ! ज्योत्स्ने ! कवलीकृताऽसि गरलैः हं ! वंशकृचन्द्रम-
स्त्वं वातेरितगोत्रभेदिदहनासक्त्यैवमुष्मायसे ।
रक्षोदन्तविभीषिकां वितनुते व्याकोशपुष्पावली
हा ! वंशि, त्वमपि स्थिताऽसि भुजगीभूता, क मे निर्वृत्तिः ॥ १६ ॥

( इति वंशीमुत्सृजति )

सुबलः—( स्वगतम् ) नितरामुत्कण्ठितो मे सखा । तदस्याभिमतकर्मणः प्रतीपाचरणं नेदानीं युक्तम् । तिष्ठतु तावदत्रैव वंशी । ( प्रकाशम् ) सखे ! अकाण्ड एवातिभूमिं गता तवेयमुत्कण्ठा ।

श्रीकृष्णः—नन्वकाण्ड इत्ययुक्तम् । किं न पश्यति भवान्—

शशाङ्को निःशङ्कः पदमकृत मध्येसुरपथम्
न तन्मन्ये राधा बहुविहितबाधा यदणिति ।

# सूर्योदयः।

त्रयोदशे वर्षे | मार्गशीर्ष-पौष-माघ-फाल्गुन-पूर्णिमाः १९९४ | ६-७-८-९ संख्याः

## सम्पादकीया अभिप्रायाः।

### स्वाधीनता।

—:०:—

शीर्षदेश-निहितशब्दोऽयं, भाषान्तरप्रचलितशब्दविशेषप्रतिपाद्यार्थप्रतिपादकतया गृह्यते व्यवह्रियते च तादृरूप्येण बहुभिरित्येवं तल्लिप्सया रत्नाजिहीर्षया सागरगर्भप्रवेशमिव दुरत्ययमपि कर्म्म कुर्वन्ति केचित्, प्रशंसन्ति चापरे व्यवसायमेषाम्, प्रोत्साहयन्ति चान्ये, प्रवर्त्तयन्ति च प्रच्छन्नं वा प्रकाशं वा भूयांसः। तदेवमवस्थायां तस्य खलु स्वाधीनताशब्दस्यार्थविचारः प्रस्तूयते। तथा हि समासनिष्पन्नोऽयं शब्दः, यस्मिन् विगृहीते पदद्वयं गम्यते स्वस्याधीनतेतिविभक्तेः पदत्वमनङ्गीकृत्यैव द्विपद्यभिधानमेतत्। तत्र स्वपदमधीनतापदं चेति पदद्वयस्याद्यमात्मवाचकमात्मीयवाचकं वा ? न प्रथमः, अधीनतापदस्य नियम्यतार्थकतया तदसम्भवात्, सिद्धसाधनाय प्रवृत्त्यनुपपत्तेश्च,—यदि नाम स्वमात्रनियम्यत्वं तन्न कथमपि घटते समाजनियतस्थितिकानां मानवानाम्, यदि तु स्वपरसाधारणीनियन्तृता स्वस्मिन्नपि वर्त्तत इति समाज नियम्यानामपि भवत्येव स्वनियम्यत्वमित्युच्यते तदा कस्य तावदद्य नास्ति स्वाधीनता यदर्थं महान् प्रयत्नः क्रियते, शयनासनादिषु चिन्तनविशेषे च सर्वेषामेव स्वनियम्यताभिमानात् नहि लब्धलाभो वा पिष्टपेषणं वा प्रेक्षावद्भिरिष्यते, दूरमास्तां तदर्थः प्रयत्नः।

द्वितीयस्तु कथंचिद्भवितुमर्हति यद्यात्मीयत्वं भारतीयत्वेन गण्येत, प्रकारान्तरञ्च विकल्पभेदभिन्नस्वरूपं सिद्धसाधनासम्भवादिदोषैः कवलितमिति तज्जल्पनं वृथैव।

अथ भारतीयाधीनत्वं भारतीयराजविशेषाधीनत्वं भारतीयगणाधीनत्वं वेति- जिज्ञासायामन्त्यपक्षमेव बहुमन्यन्ते राजनीतिनिष्णाततया प्रख्याताः पुरुषधौरेयाः;

व्याचक्षते च जनताप्रतिनिधि-परिकल्पिता सभैव नियन्त्री भवतु सर्वथा भारतीय-प्रजानां, सैव स्वाधीनता लिप्स्यते, तादृगेवार्थः स्वाधीनताशब्दस्येति चेदायातं नामार्थसंग्रहादेव भारतीयेतरनियम्यत्वं, नहि भारतीयव्याकरणकोषादिभ्यः स्वाधीनताशब्दस्य तादृगर्थः स्वरसतः पर्य्यवस्यति, लक्षणाश्रयस्तु भारतीयेतरव्यवहृतशब्दार्थानुकारः; अनुकारश्च नियम्यत्वविशेष एव। यथा हि नियम्यो नियन्तुः स्वापेक्षया प्राधान्यं सर्वथाभ्युपैति तथैवानु कर्त्तानुकार्य्यस्य; विशेषस्त्वेतावान् नियम्यो नियन्तुः प्राधान्यं वाचा प्रकाशयन् सत्यामपैति, अनुकर्त्ता पुनरनुकार्य्यस्य प्राधान्य मन्तर्निगूढमभ्युपगच्छनपि वचसा साम्यमुद्घोषयति मनसा द्वेष्टिच विशेषेण। इदञ्च बाह्याभ्यन्तर भावमूलं जैह्म्यं सोऽपि वैदेशिकानुकार एव, यच्चगण-संघटनं तन्नेतृत्वं च तदुभयं परानुकारं परशासनानुगामिताञ्च स्पष्टी करोति। यया पद्धत्या परेषां गणसंघटनं नेतृत्वं च भवति, कपट प्रधाना सा पद्धतिरविचारितमेवोपादीयते, क्वचिद्धनमात्रया क्वचिच्चवागविशेषेण क्वचित् प्रियाश्वासनया प्रायेणचाशा प्रशस्तितत् पूरणसमयेन च गणाः सन्तोष्यन्ते चावर्ज्यन्ते च, भारतेतरदेशप्रचलितेयं पद्धतिः सात्रापि गृह्यते, परं तत्र यावान्, कपटः, ततः-शतगुणोऽत्र प्रजादशानुबन्धी समालम्ब्यते, तत्र कपटोऽपि कियतांशेन सत्यः, अत्र तु मिथ्यामात्रप्रतिष्ठः। तत्र कपटस्यासति सत्यप्रच्छादने नेतृणां पतनम्, अत्र तु ते जनतायाः प्रमादालस्यापघातेनाज्ञतया च तन्मतविरुद्ध स्वाभीप्सितमबाधमाचरन्ति। अत्रोदाहरणं बाल्यविवाहनिरोध विधिर्जाज्वल्यते। नच तेन गणनेतृत्वं हीयते। येषां प्रयत्नेन तादृशराजविधिः संघटितो दृढ़तरीक्रियते च, त एव जनतायामाप्तपुरुषैः प्रचारयन्ति, "मया-बहुधा कृतेऽपि प्रातिकूल्ये तदनुकूलमताधिक्येन प्रवर्त्तितोऽयं विधिरिति"। विश्वसिति च निरक्षरा जनता मिथ्यारचनामिमां सत्यत्वेन। वार्त्तापत्रपाठनिपुणजनप्रायायां वैदेशिकजनतायामेवं प्रतारणं न सम्भवति। तस्मादुच्यते सैव पद्धतिरिह हि भारते ततः शतगुणकपटप्रधानतयाश्रीयते। ततश्चानुकारो वा नियम्यत्वं वा परेषामनभ्युपगम्यमानमप्यञ्जसा वरीवर्ति। तदेवं स्वाधीनताशब्दः पराधीनानां पराधीनतातिरेकार्थपरत्वेन पर्य्यवस्यतीति विमृशन्तु धीमन्तः।

——:*:——

## संस्कृतज्ञानां संघटनाभावः।

सम्प्रति काशीस्थ-संस्कृत-परीक्षासमयः समुपस्थितो विद्यते। अत्र परीक्षायामागन्तॄणां पञ्चदशसहस्रतोऽपि अधिकैव संख्या भवति छात्राणाम्।

परन्तु संस्कृत-च्छात्राणां संघटनं सुदृढ़न्तु दूरे तिष्ठतु, विद्यते एव नहि, येन ते स्वीयं परीक्षापाठ्यपद्धतिदोषं दूरीकृत्य तत्रोन्नतिप्रकारं चिन्तयेयुः। श्रूयते काशीस्थ-गवर्नमेंट-संस्कृतकालेज-परीक्षाध्यक्षस्य निरीक्षकमहोदयस्य च कार्यालयतः संस्कृत-विद्यालयाध्यक्षैः तदध्यापकैर्वा सह यः पत्रव्यवहारो भवति, स संस्कृत-भाषायां न भवति, किन्तु इंग्लिशभाषायां भाषान्तरे वा भवति। येन संस्कृतज्ञानां विदुषां छात्राणां तदध्यक्षाणां वा महदसौकर्य्यं भवति। संस्कृत-परीक्षाया उत्तीर्णताज्ञापकं पत्रं (गजेट) पूर्वं इंग्लिशभाषायां निःसरतिस्म। परन्तु तत्र वर्तमान-रजिष्ट्रार-महोदयानां कृपया परिवर्तनं जातं विद्यते। इदानीं तु हिन्दीभाषायां तत् पत्रं प्रकाश्यते। तत्रापि संस्कृतभाषा स्यात्तर्हि संस्कृतविदुषां छात्राणाञ्चाधिकं सौकर्य्यं स्यात्। यतो हि गुर्जरप्रान्तीया अपि विद्यालयास्तत्र परीक्षायां सम्मिलिता भवन्ति। तेषां कृते हिन्दीभाषापेक्षया संस्कृत-भाषायामधिकं सौकर्य्यं स्यात्। परन्तु संस्कृतविद्यालय-निरीक्षकमहोदयानां कार्य्यालयतः गवर्नमेंट-संस्कृतकालेज-परीक्षाबोर्ड-कार्य्यालयतो वा संस्कृतविद्यालयाध्यक्षै विद्यालयाध्यापकैर्वा सह पत्रव्यवहारादि कृत्यन्तु सुतरां संस्कृत-भाषायां समुचितं प्रतिभाति। संस्कृतज्ञैः सह संस्कृतभाषायां पत्रव्यवहारो न भवेत्, किन्तु इंग्लिशभाषायां भाषान्तरे वा भवेदिति महद् दुःखास्पदम्। येन संस्कृतज्ञा विद्वांसः छात्रा तद्विद्यालयाध्यक्षा वा तत्पत्रपाठनार्थमितस्तत आहिण्डमाना इंग्लिशभाषाभिज्ञं जनं सम्मार्गयेयुः। यदि संस्कृतभाषायां पत्रव्यवहारो भवेत्तदा संस्कृतज्ञानां महत् सौकर्य्यं स्यात्। तेषां संस्कृतभाषायां पत्रव्यवहाराभ्यासोऽपि वर्द्धितः स्यात्। संस्कृतविद्यालय-निरीक्षकमहोदय-कार्य्यालयस्य संस्कृत-परीक्षाबोर्डकार्यालयस्य च गौरवं स्यात्। यतश्च संस्कृतज्ञानां परीक्षा-सम्बन्धि सर्वमेव कार्य्यजातं संस्कृतभाषायामेव जायमानं समुचितं भवति। अन्यच्चेह काशीस्थ-राजकीय-संस्कृतपरीक्षाऽवेदनपत्राणि तत्प्रमाणपत्राणि सर्वाण्यपि संस्कृतभाषायामेव भवेयुश्चेत् संस्कृतज्ञानामधिकं सौकर्य्यं स्यात्। यतो हि संस्कृतभाषामधीत्यापि तत्र भाषायां व्यवहाराभावो यद् दृश्यते स दोषस्तु सर्वथा दूरीकृतः स्यात्। तस्य कर्मणः सम्पादनाय राजकीयकार्य्यालये संस्कृतज्ञानां विदुषां सन्निवेशोऽपि स्यादतश्च सम्प्रति सर्वथा संस्कृतज्ञानां संघटनमावश्यकं विद्यते। विना संघटनं किमपि कार्य्यं सम्पादितं न भवतीति विदन्तोऽपि संस्कृतज्ञा विद्वांसो वा छात्रा वा न चेतयन्त इति संस्कृत-भारत्या महद दौर्भाग्यमेतत। "संघे शक्तिः कलौ युगे" इति संस्कृतोक्तिमासाद्य

सम्प्रति सर्वेऽपि कृषका; यन्त्रकर्मचारिणः, वस्त्रव्यवसायिभृत्याः, पाचकाः, भूमिपतयः, घृतापणिकाः, धान्यापणिकाः, ताम्बुलिकाः, शौचिकाः सर्वेऽपि संघटनं कर्तुं सन्नह्यन्ति । परन्तु सर्वतोऽपि पृष्ठगा इमेऽस्माकं संस्कृतज्ञा विद्वांसश्छात्राश्च कर्णे तैलं दत्वा घोरनिद्रायां पतिताः सन्ति । न जाने कदैषां निद्राभङ्गो भविष्यतीति कालात्मा भगवानेव वेत्ति । वयन्तु ब्रूमो यत् साम्प्रतं संस्कृतविद्यालयाध्यक्षैरध्यापकै विद्यार्थिवर्गैश्च गवर्नमेंट-संस्कृतकालेजाध्यक्षमहोदयस्य सन्निधाने पत्रद्वारा स्वमतं प्रकाशनीयम्, येन तेषां ध्यानं विषयेऽस्मिन् समापतितम् भवेत् । ( स० सं० )

---

## शोकप्रकाशः ।

श्रीमन्तः स्वर्गीयाः पं० काशीनाथशास्त्रिणो हि प्राचीनसंस्कृतशिक्षापद्धत्याऽधीतसर्वसंस्कृतवाङ्मया महामहाध्यापका आसन् । एतेषां व्याकरणे वेदान्तशास्त्रे चास्खलितप्रतिभानमासीत् । शिष्याणामध्यापनावसरे इमे पुस्तकमदृष्ट्वैवाखिलानपि विषयान् अध्यापयन्तिस्म । एते हि पूर्वं हरद्वारकांगड़ी गुरुकुलेऽध्यापका आसन् पश्चाच्च गृहीतावकाशा इह काश्यामागत्य स्वीये ब्रह्मविद्याविद्यालये आजीवनमध्यापनमेव कुर्वन्तः श्रीविश्वनाथसन्निधौ स्वीयमन्तिमं समयं यापयन्तोऽग्रहायनेऽसितपक्षे नश्वरं शरीरं विहाय कैलासवासमधिगताः ।

एतेषां विद्वांस आत्मजाः सन्ति । तत्र सर्वज्येष्ठाः श्रीमन्तो हरिनाथ शास्त्रिणः काश्यामेव गोयनका महाविद्यालये धर्मशास्त्रस्य प्रधानाध्यापकाः सन्ति । रघुनाथशास्त्रिणश्च ब्रह्मविद्यापाठशालायां वेदान्ताध्यापकाः सन्ति । अपरे च गृहकार्य्ये व्यापृताः सन्ति ।

एतेषां विचारोऽतीव परिष्कृत आसीत् । ऐहिकाभ्युदयसम्पन्नानामेषां शिष्या अपि भूयांसः सन्ति । इत्थं सर्वथैहलौकिकमभ्युदयमासादितवताम् अवसाने च काश्यामिह श्रीविश्वानाथ-सन्निधौ स्वीयं नश्वरं कलेवरं विजहतामममृतं पदमासाद्य कैवल्यमश्नुवानानां तेषां विषये किं वक्तव्यं विद्यते, केवलं वयमेव काशीस्था विद्वांस एवम्भूतैर्दीव्यतेजोभिर्विरहिताः शोच्या जाताः । साम्प्रतम् उदयनाचार्यं पद्यमेवास्माकं दृष्टिपथं सर्वथा समायाति—

"ह्रासदर्शननो ह्रासः सम्प्रदायस्य मीयताम्" [ यतो हि सम्प्रति विकृतेऽस्मिन् काले न कोऽपि एवम्भूतानां विदुषां स्थानपूरको दृश्यते । सर्वथामरभारती

भारतरत्नैरीदृशैर्विद्वद्भिर्विरहिता विकलान्तःकरणा विलपति । वयमपि कियद्भिरेभिरक्षरैस्तेषां स्मृतिश्रद्धाञ्जलिं समर्पयन्तो विरमामो विस्तरादिति ।

—— :※: ——

## व्याख्यानवाचस्पतयः पण्डित दीनदयालुशर्माणः ।

महानुभावा इमे रोहतकमण्डले झज्झरग्रामाभिजना आसन् । एषां सनातनधर्मसेवा भारत प्रसिद्धा विद्यते । स्वजीवनमेभिः सनातनधर्मसेवायामेवातिवाहितम् । यदा हि भारतेऽस्मिन् आर्य्यसमाजमतप्रवर्तकानां स्वामिदयानन्द सरस्वतीमहोदयानामान्दोलनम् महता समारम्भेण प्रचलितमासीत्तदानीमेभिरेव महोदयैःसर्वतोऽस्मिन् भारते ग्रामं ग्रामं सनातनधर्म-संरक्षणाय महदान्दोलनं सञ्चालितमासीत् । श्रीभारतधर्म महामण्डलप्रतिष्ठापने एषामपि साहाय्यं स्तुत्यमासीत् । श्रीमताम् स्वामिपादानां श्रीज्ञानानन्दजीमहाराजानां दक्षिणहस्तस्थानीया इमेऽपि तदासन् । द्वारवङ्गाधिपतीनां महाराजानां श्रीरमेश्वरसिंहमहोदयानां साहाय्यमासाद्यामीभिः सर्वत्र भारते प्रधावंप्रधावं सनातनधर्मस्य शङ्कराचार्य्यादिभिः प्रतिष्ठापिताः प्राक्तनाः स्तम्भा ये आर्य्यसमाज प्रवर्तकानुयायिभिः व्याख्यानवात्यया पात्यमाना इवासन् ते पुनः स्थिरीकृताः ।

भारतस्य प्रधानतमेषु,-कलिकाता-मुम्बापुरी-कराची-लवपुर-काशी प्रयाग-पुष्पपुरादि-नगरेषु सनातनधर्म महासम्मेलनादि कृत्यं विधायं विधायं स्वव्याख्यानमहावायवास्त्रेण तदानीन्तनाधार्मिकमेघमण्डलमेभिरेव महामहोपदेशकैर्निरस्तमासीत् ।

किम्बहुना एतेषां व्याख्यानामृतं पायं पायं तृप्तैस्तदानीन्तनै र्धार्मिकप्रवरैर्नरपतिभिः श्रीमहामण्डलपदाधिकारिभिश्च समेत्य श्रीमहामण्डलतो व्याख्यान वाचस्पतिरिति पदवी एभ्यः प्रदत्ता आसीत् । एषां सर्वत्रैव धार्मिकराजवर्गेषु महानादर आसीत् । श्रीयुतमदनमोहनमालवीयमहोदयानां महती श्रद्धामीष्वासीदिति । इत्थं शरीरेण वाचा मनसा च सनातनधर्मसेवामेवाजन्म कुर्वतां सर्वथा प्रशस्यानां पवित्रचरितानां तेषां वाचस्पतिमहोदयानाम् अतिवृद्धावस्थायाम् अन्तिमे वयसि योग्यतमयोः स्वात्मजयोः समक्षे सुखेन संसारलीलाऽवसानं जातमिति । एतेषां वियोगेन सनातनधर्मस्य हिन्दुजातेश्च महती हानिः संवृत्ता । वयं श्रीकाशीविश्वेश्वरात्तेभ्यः शान्तिप्रदानं तत्परिवारेभ्यश्च तद्वियोगसहनधैर्य्यप्रदानञ्चाभ्यर्थयामहे । (स० सं०)

# एकस्यविदेशीयसंस्कृतविदुषः–

## संस्कृतस्य व्यवहारिकता–सम्पादनसम्बन्धे महत्त्वपूर्णं भाषणम्।

ट्रावन्कोरस्य राजधान्यां त्रिवेन्द्रमनगरे अखिलभारतीय ओरियन्टल-कान्फ्रेन्सस्य सभापतिपदमलङ्कुर्वाणा आक्सफोर्डयूनिवर्सीटीस्थाः महाध्यापकाः प्रोफेसर श्री डा० एफ० डब्ल्यू० टामस सी० आई० ई० महोदयाः स्वकीय-वक्तृतायां संस्कृत–सम्बन्धे निम्नाशयं व्याख्यानं चक्रुः।

"संस्कृतस्य साधारणसाहित्यिक-भाषात्व-सम्पादनस्योद्देश्यं सर्वथा निराशाजनकमेवास्तीति नाङ्गीक्रियतेऽस्माभिः। संस्कृतभाषयाऽन्वेषणकार्ये सुमहत्साहाय्यं मिलति। विशेषतो भाषाविज्ञानसम्बन्धिनि ऐतिहासिके च अन्वेषणे तु संस्कृतं नितरां साहाय्यं वितरति। एष सिद्धान्तः सम्प्रति सम्भवतोऽवश्यमङ्गीकरिष्यते यत् मानवकल्याणसम्पादिकाया उच्चशिक्षायाः प्राप्तये भारते संस्कृतभाषाया ज्ञानमनिवार्यं भविष्यति। ये भारतीयाः सामाजिके, साहित्यिके, ऐतिहासिके च विषये प्रवृत्ताः सन्ति तेषां कृते इदमनुचितं भविष्यति यदि ते संस्कृतं न जानीयुः। यतः संस्कृतभाषयैव तस्याः परिस्थितेः सम्यक् ज्ञानं भविष्यति! अस्मिन् देशे प्रान्तभेदात् बह्व्यो भाषाः सन्ति। परन्तु यदि देशोऽयमेको वर्तते तदाऽधिकं सरलत्वं सम्पाद्य संस्कृतमेव साधारणभाषा-स्थानमलङ्कुर्याच्चेदनुचितं न भविष्यति। एकशताब्दीतः पूर्वमेव डा० वेलन्टाइ-नेन एवं तस्य सहयोगिभिश्च प्रमाणितमेतत्काश्यां यत् आधुनिकावश्यकताः समस्ता अपि संस्कृतभाषया पूरयितुं शक्यन्ते। अग्रे तैरुक्तं यत् संस्कृतस्य सर्व-साधारणभाषात्वसम्पादने किमपि काठिन्यं नास्ति। लाभाश्च बहवः सन्ति। एतेनैकस्तु अयं महान् लाभो भविष्यति यत् मध्यैशियादेशेन पूर्वैशिया-देशेन च सह भारतीयानां मेलनं भविष्यति। यतस्तेषां देशानां धार्मिकसाहित्य-स्याधारः संस्कृतमेवास्ति"।



# ❋ अभिनन्दन-पत्रम् ❋



श्रीमत्या अग्रसेनकुलकैरवकलाधरकलायाः 'सरस्वती' 'अभिनवभारती'
'विद्यानिधि' सनातनधर्मकेशरिणीत्यादिविविधविरुदावलिविराजमानाया
निखिलशास्त्राम्भोनिधिपारङ्गमायाः समासादितानेकस्वर्णपदकाया विदुष्याः

**कुमार्याः श्रीनिर्मलादेव्याः**

करकमलयोः सादरं समर्प्यते]

वादव्यूहविधानमान-महित-प्रत्यर्थिसार्थेभराड्-
गर्वोत्काषिसुतर्ककर्कशनखा या सिंहिनीव (?) ध्रुवम् ।
या नानागमतीर्थप्रीतिरचितस्नानावलीनिर्मला,
सेयं कम्रकलाकलापकुशला बालामला 'निर्मला' ॥१॥

मीमांसामननेन मांसलमतिः सांख्येषु संख्यावती ।
व्याकृत्यामतितीव्रबोधविततिः काव्ये सुप्रज्ञावती ॥

प्रत्यग्रप्रतिभाप्रभावविहितप्रत्यर्थिशङ्काहतिः ।
जीयाद्वैश्यवरस्य कीर्तिमहती धन्या वरा सन्ततिः ॥२॥

दुर्गम (?) दर्शनशास्त्रपूर्णपटुता या स्त्रीषु संदुर्लभा,
सापि प्रापि यया नयाहितहृदा प्राचीनचर्याभृता ।
सेयं "सङ्घवि" वंशजातयमुनादासस्य लक्ष्मीवतः
पुत्री वैदिकधर्ममर्मविवृतौ प्राप्तप्रतिष्ठा भृशम् ॥३॥
यस्या धर्मपरायणत्वमतुलं गीर्वाणवाण्यां परा,
व्युत्पत्तिश्च चमत्करोति विदुषां चेतः प्रसह्याधिकम् ।
तस्या वैश्यकुलाब्धिकौस्तुभमणेर्नास्तिक्यदण्डे गुणैः
कुर्मः स्वागतमत्युदारमनसः श्रीनिर्मलाया वयम् ॥४॥

श्रीनिर्मले विद्व (?) त्कञ्जपुञ्ज-विकासभानो धृतधर्मभक्ते ।
त्वमित्थमेवाद्धती प्रसारं निलिम्पवाण्याश्चिरजीविनी स्याः ॥५॥

अयि वैश्यकुलकन्या कुमुदकलाकरसुकले निर्मले ! भवत्या हि सुकुमारयापि त्वया प्राचीनमादर्शमालम्ब्य यो नाम व्यधीयत प्रयासः सुरभारतीसमध्ययने, स हि नितान्तं प्रशंसनमतिशेते धर्मप्रसनव्याले करालेऽस्मिन् विशेषतः कलिकाले । ईदृश्यामल्पीयस्यामव्यवस्थायां नैकविधवाङ्मयज्ञानसम्पादनं यद्भवत्याबलयापि महता बलेन समन्वष्ठीयत, प्रबलेन रयेण प्रवहमान (?) मधार्मिकता प्रभञ्जनं सहुङ्कारं तिरस्कृत्य च यत्समाचर्यते भगवती जीवमात्रहितैषिणः सनातनधर्मस्य सपर्या, ताभ्यां बलादावर्जितस्वान्तैरेवास्माभिः शुभाशंसनमिदं सादरं सप्रेम सप्रश्रयं साशीराशि च यथायथं भवत्यै सम्प्रदीयते ।

माघे मासे सिते पक्षे दशम्यां गुरुवासरे ।
वेदाङ्कनवचन्द्राब्दे पत्रमेतत्समर्पितम् ॥

भवत्याः शुभाभिलाषिभिः

| | |
|---|---|
| म० म० अनन्तकृष्ण शास्त्री | हाराणचन्द्र भट्टाचार्यः |
| म० म० दुर्गाचरण सां० वे० तीर्थः | नारायण प्रसाद आ० आचार्य |
| म० म० योगेन्द्रनाथ तर्क वे० तीर्थः | तारानाथ तर्कतीर्थः |
| म० म० सीताराम शेंडे शास्त्री | कालीपद तर्काचार्यः |
| आ० म० म० भागीरथ स्वामी आ० आचार्यः | सीतारामभिश्र पंचतीर्थः |
| भि० ए० नन्दलाल हकीम कानोडिया— | नारायणचन्द्र स्मृतितीर्थः |
| वै० रा० सोमदत्तशर्मा आ० आचार्यः | रामचन्द्र मिश्र आ० आचार्यः |
| वै० रा० श्रीराममिश्र ( एम० डी० बायो ) | रामकुमार झुन्झुनूवाला |
| रा० वै० यशवन्तराय जैनरत्न | रामरक्षपाल झुन्झुनूवाला |
| वै० रा० कृष्णदत्तशर्म आ० आचार्यः | श्री स० ध० अग्रवालसदस्याः |
| कलकत्ता पण्डित सम्मेलन सदस्याः । | श्रीसनातनधर्म मण्डल सदस्याः । |
| [कलिकातायाम् ता० १०-२ ३८ ई०] | इत्येतैः । |

—:*:—

# वेदपुराणयोरेकवाक्यता।

निबन्धा—परिडत दीनानाथ शर्मा शास्त्री सारस्वतः
मुलतानस्थ-सनातन धर्म कालेजोपाध्यक्षः।

( क्रमागता )

अधुना परमात्मन आह्वान-नैवेद्यादिके वेदमन्त्रा उपस्थाप्यन्ते—श्रुधी न इ! ह्वयामसि त्वा' ऋ० ६।२६।१ इतीन्द्रस्याऽऽह्वानम्। ये (दयानन्दादयः) कथयन्ति यस्मिन् पुस्तके सर्व्वव्यापकस्य परमात्मन आह्वानं विसर्ज्जनं वा वर्त्तते, तत्पुस्तकमवैदिकम् इति, ते इममाह्वानमन्त्रम् 'ब्रह्मवर्च्चसं मह्यं दत्त्वा प्रजत ब्रह्मलोकम्' अ० १९।७१।१ एतदादिकमन्त्रश्चाऽवैदिकमुपोद्बलयन्तु। मरुत्वन्तं सख्याय हवामहे' ऋ० १।१०१।५ अस्मिन् मन्त्रे 'आर्य्योऽभिविनये, स्वामिनाऽपीश्वर आहूतो मैत्रीकरणाय; किं स तस्माद् दूरेऽविद्यत-यत्स आहूतः—इति स्वामिन एव प्रश्नः स्वामिन एवाऽत्र गलवन्धं करिष्यति, अत्रोष्ट्रलगुड न्यायः सार्थक्यमभजत्, उष्ट्रेणैवोह्यमानेन लगुडेन तत्प्रहारः, यतः स्वामिना परमात्माऽत्राहूतो मैत्रीकरणाय। 'यत्र वा अदो देवता आवाहयति' शत० १।७।३।१३। 'मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम्' ऋ० १०।४८।१ ये ब्रुवते-किं परमात्मनः पार्श्वे भोजनादिकमपि नाऽस्ति, यद्वयं तस्मै भोजनादिकं समर्प्पयाम। ते एतदादिकमन्त्रान् पश्यन्तु। अस्याऽर्थः—अहं दत्तवते पुरुषाय भोजनं ददामि, अस्य मन्त्रस्य ऋषिरपि इन्द्रो वैकुण्ठः, देवतापि च स एव। 'इममिन्द्र! प्रति हव्यं गृभाय, सत्याः सन्तु यजमानस्य कामाः' अथर्व्व० १९।४२।३ गृभाय-गृहाणेत्यर्थः, इतीन्द्राय हव्यदानम् 'सत्याः सन्तु यजमानस्य कामाः' ईदृशीं वैदिकाऽऽशिषं ब्राह्मणा यजमानाय ददति। सोममिन्द्राबृहस्पती! पिबतं दाशुषो गृहे' ऋ० ४।४९।६ इति देवाऽग्रे सोमपानाय प्रार्थना, या मूर्तिपूजाया एकमङ्गम्। 'एन्दुमिन्द्राय सिञ्चत, पिबाति सोम्यं मधु' साम० ऐन्द्र० ४।४।६ इति सोमदाने इन्द्रकर्तृकपानमपि निर्दिष्टम्, एतेन मूर्त्तिपूजायां नैवेद्यदानं वैदिकमिति ध्वनितम्। एषाऽन्या वार्त्ता, यद्-दत्तवस्तुनः परिमाणन्यूनता न भवेत्, परं परमात्मा तत्सूक्ष्मांशममृतमवश्यमुपादत्ते, अतएव छान्दोग्ये—'एतदेवाऽमृतं दृष्ट्वा तृप्यन्ति' छा० ३।६।१ तदुदाहरणे मधुमक्षिका-पीतकुसुमं द्रष्टव्यम्, मधुमक्षिकया कुसुमपरिमाणन्यूनता नजायते अत एव वेदे—सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः। पवित्रवन्तो अक्षरन्

देवान् गच्छन्तु वो मदाः' अथर्व २०।१३७।४ अत्र हरितानां सोमाक्तं मदो देवान् गच्छतीति विशदितम्। 'य एक इद् विदयते वसु मर्ताय दाशुषे' साम० ऐन्द्र० ४।४।६ इति दातुर्मनुष्यस्य अधिसन्निधि सन्निधि-(वसु-) सन्निधिर्भवति परमात्म कर्तृकः—इति वेदोऽभिधत्ते। 'ततो ददाति दाशुषे वसूनि' साम० आरण्यक० अत्रेन्द्रो देवता, प्राग्वदेवाऽभिसन्धिः। नमः सिकत्याय प्रवाह्याय च नमः किं शिलाय' यजुः १६।४३। 'नमस्तेऽस्त्वश्मने' अ० १।१३।१ इत्यश्मनो नमस्कारः। 'शर्कराः सिकता अश्मानः......उच्छिष्टे संश्रिता श्रिता' अ० ११।७।२१ इत्यश्मनोऽपि परमात्मनि स्थितिं प्रतिपादिता, तेनाऽसावपि वन्द्यः। स्वा० दयानन्देन 'पीठ के मध्य हाड़ में मनको स्थिर कर अपने आत्मा और परमात्मा का विवेचन करके परमात्मा में मग्न हो के संयमी होवे' इति द्वि० सत्यार्थ प्र० पृ० १८८ इति प्रकारान्तरेण मूर्तिपूजा स्वीकृतैव। 'रीढ की हड्डी' इत्यपेक्षया तु पवित्रत्वाद् ग्राव (प्रस्तर) मूर्त्तावेव ध्यान सम्यगिति तेन पक्षपातकलुषितधिया विचारयितुन्नाऽपारि, तथा च वेदे—'अयं ग्रावा पृथुबुध्नो वयोधाः पूतः पवित्रैरपहन्तु रक्षः' अ० १२।३।१४ इति ग्राव्णः पूतत्वं राक्षसहन्तृत्वञ्च, स्वा० दयानन्दोऽपि वेदे ग्रावशब्दं प्रस्तरार्थे मनुते यजुः १।१५ मन्त्रे, यथैव तत्र ग्रावशब्दः, तथैवाऽत्रापि। 'आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु, साम० उत्त० २०।४।३।३ अत्र ग्राव्णः प्रस्तरस्य द्वारा इन्द्राय सोमप्रापणं निर्दिष्टम्, मूर्त्तिपूजनेऽप्येवम्।

संस्कारविधौ (स्वा० दयानन्दीये) ७४ पृष्ठे मुण्डने-'विष्णोर्दंष्ट्रोऽसि, 'शिवो नामाऽसि स्वधितिस्ते पिता, नमस्ते मा मा हिंसीः' यजुः ३।६३, 'स्वधिते! मैनं हिंसीः' यजुः ४।१।११६ पृष्ठे—समावर्त्तनसंस्कारे 'ॐ प्रतिष्ठे स्थे विश्वतो मा पातम्' इत्युपानहौ प्रति ब्रह्मचारिकर्तृका रक्षाप्रार्थना, 'बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि' इति आतपत्रं प्रति प्रार्थना, निष्क्रमणसंस्कारे ६६ पृष्ठे—'यददश्चन्द्रमसि कृष्णं' इत्यादिमन्त्रं पठित्वा चन्द्राऽग्रेऽर्घ्यप्रदानम्, १६६ पृष्ठे—उलूखलमुसलाग्रे ग्रासस्थापनम्, १५२ पृष्ठे १३६ पृष्ठे—'यज्ञकुण्ड की परिक्रमा, प्रदक्षिणा करके, इत्यादौ सम्यङ् मूर्त्तिपूजा दृश्यते' उपानदपेक्षया तु प्रस्तरमूर्त्तावेव प्रार्थना श्रेयसी। क्षुरपूजामभिप्रेत्य केनचिदुक्तम्—'देवमूर्त्ति कभी न पूजें, पूजें छुरा जो नाइयों का। यही हाल संस्कारविधि में आर्य्यसमाजी भाइयों का'। अस्तु—

× ऋत्विजो यजमानायाऽऽशिषमाशासते, साऽस्मै सर्व्वा समृद्ध्यते' शत० १।५।३।१।

मूर्तिपूजनखण्डकसम्प्रदायो विशिष्टदिशि पूर्व्वस्यां पश्चिमायां वा परिमितस्थाने सन्ध्योपासनायै तिष्ठति। किं परमात्मा तस्यामेव दिशि, भवदध्युषितस्थानसीम्न्येव विद्यते, नान्यत्र? यदि स सर्व्वव्यापकस्तर्हि भवन्तस्सन्ध्यावन्दनसमये इतस्ततो बम्भ्रम्यमाणाः सर्व्वतो वा स्वमुखं यौगपद्येन कुर्व्वाणा॒ कथं न भवन्ति? कथं भवद्भिः सीमितस्थान एव परमात्मोपासनायै स्थित्वा परमात्मा सीमित॒ कृतः? अत्र यदेवोत्तरं वादिभि॒ प्रदीयेत, तदेवोत्तरं मूर्तिसम्मुखे परमात्मोपासनाया अध्यवसेयम्। शिष्ट प्रश्नोऽयं भवति, यद्-वादिनो मूर्त्तौ षोडशोपचारपूजनं न कुर्व्वन्ति, अयन्तु प्रकारभेद एव। सन्ध्यां समापय्योत्तिष्ठन्तोऽन्ते विशिष्टदिशं पूर्व्वां पश्चिमां वा प्रणमन्ति; विशिष्टदिशाया॒ प्रणामोऽपि मूर्त्तिपूजैव, यदि ते वस्तुतस्तस्या विशिष्टदिश॒ प्रणामं न कुर्व्वन्ति, किन्तु परमात्मानमेव प्रणमन्ति, दिशायाः साम्मुख्यन्त्वनिर्व्वाहात्; तर्हि तदेवोत्तरं मूर्त्तावपि ज्ञेयम्।

आर्य्याभिविनये 'वायवा याहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम्' ऋ० १।२।१ अत्र स्वा० दयानन्देन परमात्मा सोमरसं पायितः, 'पाहि' इत्यस्य 'पानकरो' इत्यर्थस्तेन कृतः; अयमपि मूर्त्तिपूजायां नैवेद्यदान-प्रकार इव। केचिदाग्रहग्रहिला दायानन्दाः 'पानकरो' अत्र मुद्राऽशुद्धिं मत्वा 'पालनकरो' इत्यर्थं कर्तुमुद्युञ्जते, येन मूर्त्तिपूजा न सिद्ध्येत्; अत्र च 'पा रक्षणे' धातु समामनन्ति; परं ते व्याकरणानभिज्ञा वेदे विकरणव्यत्ययं नो जानते; निरुक्तेऽपि एतन्मन्त्रस्थ 'पाहि' पदस्य 'पिब' इत्यर्थः स्वीकृतः; तेन दायानन्दा॒ प्रत्युक्ता एव व्याजभाजः। कथञ्चित्तेषामाग्रहेणाऽत्र मन्त्रे 'पाहि' इत्यस्य 'पिब' इत्यर्थो नाऽपि स्वीक्रियेत; परं 'पिब' पदवन्तस्तु परश्शता मन्त्रा दृश्यन्ते; तर्हि तेषां व्याजस्य कियन्मूल्यम्?' तत्र कतिचित् प्रदर्श्यन्ते—

'इन्द्र! सोममिमं पिब' ऋ० १०।२४।१ 'आयाहि सुषुमाहित इन्द्र! सोमं पिबा इमम्' ऋ० ८।१७।१ सुत! इन्द्राय, विष्णवे सोम!' ऋ० ६।६३।३। 'पिब स्वधनवानाम्' ऋ० ८।३२।२०। 'इन्द्र! पिब सुतानाम्' ऋ० ८।३२।१६। 'इमं रातं सुतं पिब' ऋ० ८।३२।२१। 'एन्द्र! याहि पीतये' ऋ० ८।३३।१३। 'अग्निनेन्द्रेण वरुणेन विष्णुनाऽऽदित्यै रुद्रैर्वसुभिः सचाभुवा। सजोषसा उषसा सूर्य्येण च सोमं पिबत मश्विना' भिन्नभिन्नदेवानां सोमपानमाचष्टे। 'इन्द्रा-विष्णू! पिबतं मध्वो अस्य सोमस्य दस्रा! जठरं पृणेथाम्' ऋ० ६।६६।७। 'हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योपयातम्। पिबाथ इन्मधुनः सोम्यस्य

दधथो रत्नं विधते जनाय' अ० २०।१४३।४ अत्राऽश्विनौ देवते। 'एन्द्रस्य जठरं विश' साम० उत्त० ६।४।५ इति सोमस्य इन्द्रजठरे प्रवेशः प्रार्थितः, स विशेषो वा, परं तेन इन्द्रतृप्ते र्वैदिकत्वं सिद्धम्, तथा च – 'इदं वसो ! सुतमन्धः पिबा, सुपूर्णमुदरम्' साम० उत्त० २।२।४।१ इतीन्द्राय सोमाऽर्पणेन तदुदरस्य सुपूर्णता प्रदर्शिता।

'सोमकामं हि ते मनः, अ० २०।११३।२ ये आचक्षते किं परमात्मपार्श्वे किञ्चिन्नाऽस्ति, यत् तस्मै दद्याम, ते इमं मन्त्रं, सोमे इन्द्रस्य कामञ्च पश्यन्तु। 'इन्द्र ! सोमाः सुता इमे, तान् दधिष्व शतक्रतो ! जठरे वाजिनीवसो !' अ० २०।२४।५ अत्र सोमस्य इन्द्रोदरे निधानमुक्तम्। 'इन्द्रं सोमस्य पीतये स्तोमैरिह हवामहे। उक्थेभिः कुविदागमत्' २०।२४।४ अत्रेन्द्रस्य सोमपानाय आह्वानम्, तदागमनञ्च प्रदर्शितम्। आर्य्यसमाजमते इन्द्रस्याऽर्थः—केवलपरमात्मा, सनातनधर्म्मिमते देवविशेषः परमात्मा चेत्यर्थः, तेन मूर्तिपूजा, परमात्मन आवाहनं, तत्कर्तृकसोमपानं तदागमनञ्च वैदिकं सिद्धम्। ये प्रलपन्ति यत् किं मूर्त्तौ प्राङ् नाऽविद्यत परमात्मा, यत्—तदाह्वानं कुर्व्वते तत्र भवन्तः ? ते उक्तमन्त्रमननं कुर्व्वन्तु। यद्येवं न भवति, तर्हि वेदोऽप्यसत्यो मन्तव्यः। 'इन्द्र ! जठरं नव्यं न पृणस्व' साम० उत्तरा० ५।७।२ तृतीयतृचे—सोमपानेन इन्द्रजठरपूर्त्तिर्दर्शिता, नव्यं न—इत्यस्य नव्यतरमित्यर्थः। एवम्—'आते सिञ्चामि कुक्ष्योरनुगात्रा विधावतु। गृभाय जिह्वया मधु' अ० २०।४।२, ऋ० ८।१७।५ अत्र सोमरसेनेन्द्रस्योभयपार्श्वयोस्तृप्तिस्सर्व्वाङ्गीणप्राप्तिर्जिह्वया मधुग्रहणञ्च निर्दिष्टम्। 'मधुमान् तन्वे तव' अ० २०।४।३ तन्वे-शरीराय सोम इति शेषः। 'सर्व्वे देवा अत्यायन्ति ये अश्नन्ति वषट्कृतम्। इमां जुषध्वमाहुतिमितो जयत माऽमुतः' अ० ११।१०।१४ इति देवानामागमनम्, वषट्कृतहविरशनञ्च स्पष्टं निर्दिष्टं वेदेन। एवं मूर्तिपूजासमये परमात्मा स्वनिवेदितं बलिं भक्षयेच्चेन्न वा भक्षयेत् तदुदरं तृप्येन्न वा तृप्येत्—इति त्वन्यत्, परं वेदस्तृप्तिं वक्ति, तेन वैदिकता सिद्धा देवेभ्यो बलिप्रदानस्य। अत एव तु हवनसमये 'इन्द्राय स्वाहेत्यादि मन्त्रानधीत्य हव्यं क्षिपन्त्यार्य्यसामाजिका अग्नौ। इन्द्रादिक नामानि तन्मते परमात्मन एव, तर्हि तेऽप्यग्निमूर्ति द्वारा परमात्मने हव्यं समर्प्पयन्ति, अन्यथा को हेतुः 'इन्द्राय स्वाहा' इत्यादिमन्त्रपठनस्य ?

मूर्तिपूजाखण्डकाः प्रष्टव्या यद्–भवन्तो यत्र तत्र चलन्त एव सन्ध्योपासनां कुतो न कुर्व्वते, कथमेकस्मिन् विशिष्टस्थले, विशिष्टदिशि च मुखं कृत्वा,

उपविश्य चोपासनां कुर्वते, किं यत्र तत्र भवन्तश्चलन्तो भवन्ति तत्र तत्र परमात्मा न व्याप्तो भवति ? किं परमात्मा तस्मिन् स्थल एव व्याप्नोति यत्र भवन्त उपविश्य सन्ध्यायन्ति ? अत्र यदुत्तरीष्यन्ति वादिनस्तदेवोत्तरं मन्दिरे मूर्त्तिसम्मुखमुपविश्योपासनाया भविष्यतीति निष्पक्षपातधिया विचार्य्यम् । एतावान् विशेषः—वादिनः सन्ध्यां कृत्वोत्तिष्ठन्त एव स्वोपविष्टस्थलाऽग्रे हस्तौ संयोजयन्ति परमात्मानमुद्दिश्य, सनातनधर्म्मारास्तु मूर्त्तिसम्मुखे नमस्कुर्व्वन्ति परमात्मानमुद्दिश्य—इति स्वयं सघटनीयम् । वेदे प्रस्तरद्वाराऽपि परमात्मनोऽनुकूलता मता यथा—'अर्वाचीनं सु ते मनो ग्रावा करोतु' साम० उत्त० ६।७।२ तृतीयतृचे, अस्याऽर्थः—अयं ग्रावा प्रस्तरः ते—इन्द्रस्य परमात्मनो मनः—चित्तम् अर्व्वाचीनं—मय्यनुकूलं कृणोतु-करोतु, वेदे 'ग्रावा' इत्यस्य 'पत्थर' इत्यर्थोऽपि भवति, तथा च स्वा० दयानन्देन 'बृहद् ग्रावाऽसि' यजुः १।१५ इत्यस्याऽर्थः--'बड़े पत्थर हैं' इति कृतः ।

'यामिन्द्रेण सन्धां समधत्था ब्रह्मणा च बृहस्पते ! तयाऽहमिन्द्रसन्धया सर्व्वान् देवानिह हुवे इतो जयत माऽमुतः, अ० ११।१०।६ इति देवानामाह्वानं प्रतिज्ञा च वर्णिता । 'यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ! अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्' गी० ४।७—८ इति प्रतिज्ञा श्रीकृष्णस्य, तथैव इन्द्रस्याऽपि देवसध्रीचीनस्य तादृशा सन्धा—प्रतिज्ञा प्रतीयते, अन्यथा कथं वेदे तदाह्वानम् ॥ 'नार्य्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ऋ० १०।११७।६ अर्य्यमणमित्युपलक्षणमिदं--सर्व्वान् देवान् अर्य्यमादीन् न पुष्यतीति सायणः, एतेन पूर्व्वं देवेभ्योऽन्नादिकं समर्प्य तत एव स्वयम्भोक्तव्य मित्याशयः । एतदेव मनुरनुवदति—'देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग् भवेत्' मनु० ३।११७ 'अघं स केवलं भुङ्क्ते यः पचेदात्मकारणात्, म० ३।११८ एतदेवाऽभिप्रेत्य संस्कारविधौ १६८ पृष्ठे स्वा० दयानन्द पूर्व्वे 'इन्द्र' नाम्ना दक्षिणे 'यम' नाम्ना पश्चिमे 'वरुण' नाम्ना, उत्तरे 'सोम' नाम्ना च ग्रासान् स्थापयितुमादिदेश स्वाऽनुयायिनः; यद्यपि ते स्वाऽऽचार्य्यस्येमां कृतिमपि 'पोपलीला' मभिमत्य नोऽनुकुर्व्वन्ति ; इयं तेषां स्वकीयाचार्य्ये भक्तिर्नाम ।

'प्रवोऽर्चोप, साम० उ० ७।७।३।१ उप-समीपेऽर्च्चनं पूजनमिन्द्रस्य निर्दिष्टम्, समीपता च मूर्त्तिपूजायाम्भवितुमर्हति । 'काममस्माकं पूरय प्रतिगृह्णाहि नो हविः, अ० ३।१०।१३ इति नैवेद्यदानेन कामनापूर्त्तिः । 'अप्सु धूतस्य हरिवः ! पिबेह नृभिः सुतस्य जठरं पृणस्व, अ० २०।३३।१ हे इन्द्र !

मनुष्यैरभिषुतं सोमं पीत्वा स्वोदरं पूरय । 'इन्द्रपीताँ, साम० उत्त० ६।१।२।८ इति सोमस्येन्द्रद्वारा पानं निर्दिष्टम्, एवं मूर्त्तिपूजायामपि दत्तनैवेद्यस्य परमात्मभुक्तत्वं ज्ञेयं वेदाऽनुमोदितत्वञ्च । 'विश्वमायुर्व्यश्नवत् । अहरहर्बलिमित् ते हरन्तु, अ० १६।५५।६ अत्रेन्द्राय बलिप्रदात्रे इन्द्रप्रदातृकदीर्घायु प्रतिपादितम् । 'ततो ददाति दाशुषे वसूनि, अ० १६।५।१ अनेन सिद्ध्यति, यत्-परमात्मने दत्तवते परमात्मा धनमर्पयति । येऽभिदधते-परमात्मन पार्श्वे सर्वञ्चिद् वर्त्तते; वयं तस्मै दत्वा तमपमन्येमहि ? ते एतदादिकमन्त्रान् पश्यन्तु; एवम्-'अहं दाशुषे विभजामि भोजनम्, ऋ० १०।४८।१। यद्यत्र दानमन्यस्मै मन्येत, तर्हि तु दानमन्यस्मै प्रत्तम्, धनानि च परमात्माऽस्मभ्यमर्पयति इति तु वादिनां स्वमन्तव्यविरोधः स्यात् ।

'सदा ते नाम स्वयशो विवक्मि, साम० २०।३।४।२ इति परमात्मानो नामकीर्त्तनमप्याज्ञापयति वेदः । एवम् 'अग्नेयः क्षत्रियो विद्वान् नाम गृह्णात्यायुषे, अथर्व० ६।७६।४ 'यस्य नाम महद्यशः, यजुः ३२।३ 'मनामहे चारु देवस्य नाम, ऋ० १।२४।१ 'नामोपास्स्व' छान्दो० ७।१।४ मर्ता अमर्त्यस्य ते भूरि नाम मनामहे, ऋ० ८।११।५ यत्ते अनाधृष्टं नाम यज्ञियम्' 'भूरि नाम वन्दमानो दधाति, ऋ० ५।३।१०। 'विश्वा हि वो नमस्यानि वन्द्या नामानि देवा ! उत यज्ञियानि वः, ऋ० १०।६३।२ 'देवो देवानां गुह्यानि नामान्याविष्कृणोति बर्हिषि प्रवाचे, ऋ० ६।६५।२ 'चार्विन्द्रस्य नाम, ऋ० ६।१०६।१४ अत्र नामोपासना, नाम्नश्चारुत्वं पूज्यत्वात् । एतदादिकप्रमाणानि-'अज्ञानादथवा ज्ञानादुत्तम श्लोकनाम यत् । संकीर्त्तितमघं पुंसो दहेदेधो यथाऽनलः । भागवतः ६।२।१८ म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् । अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन्, भाग० ६।२।४६ इत्यादिक-पौराणिक-वचनानां मूलानि ।

'इमं यम ! प्रस्तरमा हि सीद, ऋ० १०।१४।४ यम इति परमात्मनोऽपि नाम । 'प्रसद्मति प्रतिमानं पृथिव्याः, अ० ५।२।७, 'चक्रुषे भूमिं प्रतिमानम्' ऋ० १।५२।१२ इति पार्थिवमूर्त्तित्वम् । 'वयं तुभ्यं बलिहृतः स्याम, अ० १२।१।६२ इति पृथिव्या अग्रे बलिप्रदानम्, मूर्त्तयोऽपि पृथिव्या भवन्ति । 'माता भूमिः, पुत्रो अहं पृथिव्याः, अ० १२।१।१२ इति भूम्या अस्मदीयमातृत्वम्, यद्यस्माभिस्तस्या एकांशस्याऽपि पूजा क्रियते, तर्हि मातुरेकाङ्गस्येव तस्या पूजा, यद्येवं तर्हि वैदिकम्मन्यानां कथं विषमज्वरो भवति मूर्त्तिपूजनाय । यदि व्यपदिश्येत वयं सर्वस्या भूम्या पूजनं कुर्म्मो भवन्तस्तु तदेकदेशस्य, इदमप्य-

किञ्चित्करम् । भवन्तोऽपि भूमेरेकांशस्यैव पूजां कुर्व्वते, किम्भवन्तः सर्व्व-भूम्यां व्याप्ताः ? अथवा भवन्तो भारतभूम्या एव कथं नमस्यां कुर्व्वन्ति, विलायत, भूम्या कथं न कुर्व्वते ?, तर्हि सिद्धम् भवन्तोऽपि तदेकदेशस्यैव पूजनं विदधति; तर्हि भवन्तः सनातनधर्मिभ्य कुत कुप्यन्ति ? एतदर्थमेव सनातन-धर्माण प्रातर्भूम्यां पादस्थापने सति 'पादस्पर्शं क्षमस्व मे, इति पादस्थापन-मपि क्षमयन्ति, तन्मूलं वेदेऽपि दृश्यते—'उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम्, अ० १२।१।२८ अत्र पादादिभिर्भूमिव्यथनाऽभावप्रार्थना । हंहो ! वेदस्तु स्पष्टमेव मूर्त्तिपूजकः ।'विमृग्वरीं पृथिवीमावदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् । ऊर्ज्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाऽभिनिषीदेम भूमे !, अ० १२।१।२६ अत्र अचेतनभूम्या सहाऽऽलापः, तस्या घृतादिप्रार्थना, एवं मूर्त्तिपूजायामपि मूर्त्यग्रे प्रार्थना भवति । यच्छयानः पर्यावर्त्ते दक्षिणं सव्यमभि भूमे ! पार्श्वम् । उत्तानास्त्वां प्रतीचीं यत् पृष्ठीभिरधिशेमहे मा हिंसीस्तत्र नो भूमे !' अ० १२।१।३४ । हन्त ! कीदृशी श्रद्धाऽचेतनभूम्यामपि वेदस्य । 'मा ते मर्म्म विमृग्वरि ! मा ते हृदयमर्प्पिपम्' अ० १२।१।३५ हन्त ! कीदृशी श्रद्धाऽचेतनायामपि पृथिव्यां वेदस्य ? तर्हि मूर्त्तौ सनातनधर्म्मणामन्धश्रद्धा कथमाख्यायतेऽवैदिकता च । 'सा नो भूमिरादिशतु यद्धनं कामयामहे' अ० १२।१।४० अत्र पृथिव्या अग्रे धनप्रार्थना, एवं पार्थिवमूर्त्यग्रेऽपि । 'सा नो भूमिः प्रणुदतां सपत्नानसपत्नं मा पृथिवी कृणोतु' अ० १२।१।४१ अत्र पृथिवीतः शत्रुविनाशनप्रार्थना; किं नषा मूर्त्तिपूजा ? 'ये ते पन्थानो बहवो जनायनाः........यैः सञ्चरन्त्युभये भद्रपापास्तं पन्थानं जयेम' अ० १२।१।४७ इति मार्गाणां पूजा ।

ये राष्ट्रियपताकाया अभ्युत्थानपूर्व्वकमभिवादनं कुर्व्वन्ति, तस्यां पुष्प-माल्यञ्च परिधापयन्ति, किं नैषा स्पष्टं मूर्त्तिपूजा ? यशःपालनामा कश्चनाऽऽर्य्यसामाजिको 'वैदिकसिद्धान्तदर्पणे' आचष्टे-'उनकेचित्रादि देखकर परमात्मासे यह प्रार्थना की जाती है कि—भगवन् ! हमारे देश में ऐसे ही महान् पुरुष उत्पन्न हों। झण्डाभिवादन में भी झण्डे को पूजा नहीं की जाती परन्तु परमात्मा से प्रार्थना की जाती है कि—हमारे देश पर जाति की स्वतन्त्रता सदा कायम रहे' परन्त्वनेन महात्मना मूर्त्तिपूजाविषये विचारयितुन्नाऽपारि, यत्—सनातनधर्म्मणोऽपि प्रस्तरं न किन्तु तदभिमानिनं देवं परमात्मानमेव, प्रार्थयन्ते । यथा राष्ट्रियपताकायां पुष्पमालाऽर्प्यते; तथैव मूर्त्तावपि । एतदेव स्वा० दयानन्दोऽपि मोहम्मदानुसरन् सत्यार्थप्रकाशे वक्ति—'तुम जिन

हिन्दुओं को बुतपरस्त समझते हो—वे भी उन बुतों के आगे परमात्मा की प्रार्थना करते हैं' । प्रत्युत आर्यसामाजिकास्तु दयानन्दचित्रमपि पूजयन्ति, गतदिवसेषु बुद्धदेवस्नातकेन स्वमूर्त्यपूजकत्वदर्शनाय दयानन्दचित्रे उपानत्प्रहारः कृतः ×; तेन आर्य्यसमाजसंसारः क्षुब्धो जातः, तेन स्वामिनोऽयमपमानो बुद्धः, अत एव बुद्धदेवः प्रायश्चित्तकरणाय क्षमाप्रार्थनायै च बाध्यः कृतः बुद्धदेवेनाऽप्यत्र* पश्चात्तापः कृतः; तेन प्रतीयते आर्य्यसमाजोऽपि पूर्त्तिपूजातो न मुक्तः, चित्रसम्मानोऽपि मूर्त्तिपूजाऽन्तर्गत एव, मूर्त्तिपूजाया अपि बहवः प्रकारा भवन्ति । मन्दिरप्रतिष्ठापित-वेदमन्त्रसंस्कृताया मूर्तेः पूजनमपि मूर्त्तिपूजा, पर्व्वतभूमिनदीनामपि पूजा तन्नामवाच्या, चित्रादीनां वेदपुस्तकादीनां सम्मानोऽपि मूर्त्तिपूजा, मातापितृ-गुरुप्रभृतीनां पूजाऽपि मूर्तिपूजाशब्दवाच्या तेन समस्त एव संसारो मूर्तिपूजातो न मुक्तः, 'कब्र' 'मसजिद' प्रभृतिकं प्रणमन्तो मोहम्मदाः, 'मरियम' मूर्त्यग्रे प्रणमन्त ईशवीयाश्चाऽपि ततो न मुक्ताः ।

'शंनो भवन्तु प्रदिशश्चतस्तः, अ० १६।१०।८ इति दिक्-पूजा । 'शं नः पर्व्वता ध्रुवयो भवन्तु' अ० १६।१०।८ इति पर्व्वत प्रार्थना, प्रार्थनाऽपि पूजाया एवाऽङ्गं भवति, किं नैषा मूर्त्तिपूजा ? 'तस्मै बलिं राष्ट्रभृतो भरन्ति' अ० १०।८।१५ इति परमात्मने बलिप्रदानम् । 'एते वै प्रियाश्चाऽप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः, अ० ६।७।६ [ ६।६ ( २ ) । ६ ] इत्यतिथि-पूजा । एवम् 'अशितवत्यतिथौ अश्नीयाद् यज्ञस्य सात्मत्वाय' अ० ६।८।८।६।६।२।८। 'यथाऽश्वत्थ ! वानस्पत्यानारोहन् कृणुषेऽधरान् । एवा मे शत्रोर्मूर्द्धानं विष्वग् भिन्द्धि । ' अ० ३।६।६ इत्यश्वत्थ ( पिप्पल ) वृक्षपूजा ॥ 'नमस्ते जायमानायै

× इतः प्राग् लवपुरीय महाशय कृष्णेन 'प्रकाश' पत्रस्य दीपावल्यङ्के मुखपृष्ठे दयानन्दचित्रं मुद्रितम्; ततश्च 'भल्लाबूट' चित्रं मुद्रितम्, यत् स्वा० दयानन्दस्य मुखे पततिस्म । एतेनाऽपि आर्यसमाजिक संसारेण स्वामिनोऽपमानो मतः, महाशयकृष्णश्च क्षमायै बाध्यः कृतः । अधुना कोऽभिधातु समर्थो यदार्य्यसमाजो मूर्त्तिपूजक सम्प्रदायान्नेति । व्यतिरेकेणेयमपि मूर्त्तिपूजा ।

* यदि तेनाऽत्र पश्चात्तापो न कृतः; अयञ्च ( दयानन्द चित्रे उपानत्प्रहारः ) उत्तम मार्गो मतस्तर्हि तस्य तत्सहवर्गिणाञ्चोचितमेतद्, यत्त प्रत्येकाऽऽर्य्यसमाजोत्सवे जनतासमक्षमिदमुत्तमकर्म सततं कुर्व्वन्तु । यदि ते करिष्यन्ति; तर्हि वयं ज्ञास्यामो यद्वस्तुत एते मूर्तिपूजका न । यदि पुनः कदाऽप्येवं न करिष्यन्ति; तर्हि ज्ञास्यते यदि मे मूर्तिपूजकसम्प्रदायका, अधुना पूर्व्वकृतं कर्माऽनुचितं जानतेऽतएव नाचरन्ति तद् ।

आताया उत ते नमः। वालेभ्यः शफेभ्यो रूपायाऽघ्न्ये ! ते नमः, अ० १०।१०। अत्र गो-पूजा। 'नमोऽस्तु सर्प्पेभ्यः, यजुः १३।६ 'ये वाऽवरेषु शेरते तेभ्यः सर्पेभ्यो नमः, यजुः १३।७ 'य एवैषु त्रिषु लोकेषु सर्प्पास्तेभ्य एतन्नमस्करोति, शत० ७।४।१।२८ इति सर्प्पपूजा। एवमन्यमूर्त्तीनामपि पूजनं वेदे बाहुल्येन वर्त्तते।

मूर्त्तिपूजायाश्शङ्कासमाधानं 'पूर्व्वोत्तरपक्षिणोस्संव्वादः, क्वचन संस्कृतपत्रे प्रकाशयिष्यमाणे रोचके मत्प्रणीतनिबन्धे द्रष्टव्यम्। इति

—( क्रमशः )

## अखिलभारतीयं संस्कृतसाहित्यसम्मेलनम्।

### ( अमृतसर )

महता समारोहेण नानाप्रान्तेभ्यः समागतानां पण्डितप्रवराणां छात्राणां विदुषीणां च समुपस्थितौ सर्वथा सफलमभूतपूर्वं च सम्मेलनमिदममृतसरनगरे पौष कृष्णाष्टमीतः, १४ पर्यन्तं सुसम्पन्नमभूत्। महामहोपदेशकप्रवराः पञ्चाम्बुभूषण महोदयाः श्रीबुलाकिरामशर्म्माणः स्वागताध्यक्षा आसन् श्री पं० अर्जुननाथशर्म्मा M.A. ( वाइसप्रिंसिपल हिन्दू महासभा कालेज—अमृतसर ) च स्वागतस्थः मन्त्री। श्री पं० मिहिरचन्द्रशास्त्री, श्री पं० दौलतरामशास्त्री, श्री पं० त्रिदिवेन्द्रजी B. A. श्रीकर्मचन्द्र गुगलानी B. A. L. L. B. श्री पं० गुरुमुखरायजी श्री पं० देवीदत्तशास्त्री साहित्याचार्यः श्री स्वामी रामनारायण शास्त्री श्री पं० शिवदत्त शास्त्री श्री पं० राधारमण शास्त्री, श्री पं० लोकमणिशास्त्री, श्रीमती सत्यवती देवी श्रीकुमारी कमलावती श्री शाहनत्थूरामजी प्रभृतयः स्वागतसदस्याः सर्वथा सम्मेलनसफलतायै बद्धपरिकरा आसन्।

म० म० श्री पं० गिरिधरशर्म्माणः सम्मेलनप्राणाः सभापतिपदमलंकृतवन्तः। संस्कृत-भाषासमुद्धाराय प्रतिक्षणं प्रयतमानानामेतेषां महानुभावानां साभापत्ये सम्मेलनस्य साफल्यं सुनिश्चितमेवासीत्।

सम्मेलनेऽस्मिन् विविधानि उपसम्मेलनान्यप्यभूवन्। तत्र शिक्षा-सम्मेलने महामहोपाध्याय श्री पं० माधव शास्त्री,भण्डारी आचार्यः (ओरियन्टलकालिजलाहोर ) सभापतिपदमलमकरोत। व्याकरणाचार्याः श्री पं० सूर्यनारायणशास्त्रिणः ( जयपुर ) विद्यावाचस्पतयः श्री प्रभुदत्तशास्त्रिणः ( दिल्ली ) पुराणवाचस्पति प्रवराः श्री पं० चन्द्रभानुशास्त्रिणः ( हरद्वार ) प्रो० विद्याधर शास्त्री एम्० ए० प्रभृतय स्तत्र प्रमुखा वक्तार आसन्।

नव साहित्यसम्मेलने च श्री पं० परमेश्वरानन्द शास्त्रिणः विद्याभास्करा अध्यक्षा आसन्। प्रदर्शन्यामपि नवसाहित्यस्य ग्रथाः सुशोभमाना आसन् यत्र प्रख्यातानां पण्डितप्रवराणां श्री नारायण शास्त्रि खिस्ते महोदयानां (बनारस) प्रो० महालिंगशास्त्री M. A. (अन्नमलययुनिवर्सिटी) श्री प्रो० रामचन्द्रएय्यर (मद्रासयुनिवर्सिटी) श्री विद्यावाचस्पति पं० देवीप्रसादशास्त्रिणः (चूरू) प्रभृतीनां, विद्वच्चरित पंचकम्, दरिद्राणां हृदयम्, स्वप्नवासवदत्ता किंकिणीमाला, शतचण्डी यज्ञविधानम्—इत्यादयो नाना नवीना ग्रंथाः सर्वैरेव प्रशंसिताः। नवस्य संस्कृतसाहित्यस्य विषये श्री पं० लीलाधरशास्त्रिणां (ऋषिकुलहरद्वार) आचार्याणां व्याख्यानं परमं गभीरं विचारणीयं चासीत्।

अखिलभारतीयं संस्कृतच्छात्रसम्मेलनं च सर्वथैव भारतीये इतिहासे संस्कृतभाषायाः पुनरपि निश्चितोन्नतिसूचकमद्वितीयं सम्मेलनमासीत्। नानाविद्यालयेभ्यो नगरेभ्यश्च समागतैः संस्कृताध्येतृभिश्छात्रैर्यादृशः समुत्साहो यादृशी च कार्यशैली सम्मेलनेऽस्मिन् प्रदर्शिता तया संस्कृतभाषायाः समुन्नतिः शीघ्रमेव भाविनीति सर्वैः स्वीकृतम्। सम्मेलनेऽस्मिन् काशी-छात्रसंघस्य प्रतिनिधिभूताः सांख्यतीर्थ श्री गौरीशंकरशास्त्रिणः, श्री मुरारीलालशास्त्रिणः—श्रीराजारामभट्टमहोदयाश्च सम्मेलनकार्यं परमां-सहायतामयच्छन्। साहित्याचार्या देवीदत्तशास्त्रिणः—श्रीलोकमणिशास्त्रिण-श्च संयोजका आसन्। गढ़वालच्छात्रमण्डल—मालवाप्रान्तीयच्छात्र मण्डल—प्रभृतीनां मण्डलानां सदस्याः प्रतिक्षणं कार्ये तत्परा अभूवन्! अखिल भा० संस्कृतच्छात्रसंघस्य स्थापना जाता। रघुनाथमन्दिरपाठशाला—(जम्बू) स्थानां छात्राणां संगीतन्तु अद्यापि सर्वैर्गीयते। छात्रैर्लेखाः श्राविताः। निर्णयसमितिनिर्णयानन्तरं पदकादि दास्यते।

अखिलभारतीय महिलासंस्कृत सम्मेलने च श्रीमती शान्तादेवी राजवैद्या अध्यक्षा श्रीमती सत्यवतीदेवी (महेन्द्रा) च स्वागताध्यक्षा। कुमारी कमलावती गुगलानी च मन्त्रिणी। श्रीमत्या प्रमिलादेव्या लेखश्चातिमनोहरः। प्रो० श्री सूर्यनारायण शास्त्रिभि र्व्याकरणाचार्यैरपि सम्मेलने प्रदत्तं भाषणम्।

कविसम्मेलने च प्रो० रामचन्द्रशास्त्री B. A. सभापतिः, श्री कविरत्न मायादत्तशास्त्रि पाण्डेय चन्दौसी, सा० आ० श्री प० परमानन्दशास्त्रि हरद्वार सा० आ० श्री अमीरचन्द्रशास्त्रि ऋषिकुल सा० आ० विष्णुदत्तशास्त्रि विद्या-वाचस्पतिः श्री प० प्रभुदत्त शास्त्रि—श्री प० मिहिरचन्द्रशास्त्रि, श्री सुरेन्द्र-मोहनदत्तः, श्री पं० शिवदत्तशास्त्रि—प्रभृतीनां काव्यं परमं मधुरमासीत्।

श्री पण्डित नारायण शास्त्रि खिस्ते, श्री बटुकप्रसाद खिस्ते, महोदयायां काश्याः प्रेषिताः समस्यापूर्तयोऽतीवमनोहारिण्य आसन् श्री पं० सूर्यनारायण व्याकरणाचार्याणां काव्यमपि सर्वैरास्वादितम्। श्री पं० दौलतरामशास्त्रिणः अस्य संयोजकाः।

प्रस्तावाश्च वहवः स्वीकृताः। तत्र साहित्याचार्याणां श्रीमथुरानाथ भट्ट महोदयानां, श्री न्यायाचार्य प० कन्हैयालाल शास्त्रिणां, पञ्चाम्बुभूषण श्री प० बुलाकीरामशास्त्रिवराणां, श्री प० परमानन्दशास्त्री M. A. M. O. L. श्री प० देवराजशास्त्री ( मुलतान ) श्री प० चूड़ामणिशास्त्री ( मुलतान ) श्री प० वशिष्ठ शर्मा M. A. M. O. L. श्री प० पूर्णानन्दशास्त्री ( चुरू ) ( लायलपुर ) श्री पं० लीलाधरशास्त्रिणां श्री म० म० श्री माधवशास्त्रि भण्डारी महोदयानां च तेषु तेषु विषयेषु व्याख्यनानि परमाकर्षकाण्यासन्।

सभापति महोदयैः सर्वप्रथम—श्री म० म० अन्नदाचरणतर्क चूड़ामणिः ( काशी ) श्री म० म० प० हरनारायणशास्त्री ( दिल्ली ) श्री म० म० प० गणेशदत्तजी शास्त्री ( लाहोर ) श्री प० दीनदयालुजी व्याख्यानवाचस्पतिः—श्री विद्यामार्तण्ड प० सीतारामजी शास्त्री ( मिवानी ) श्री प० हेमराजशास्त्री ( अमृतसर ) विदुषां स्वर्गगमनशोकप्रस्तावः प्रस्तुतः सर्वैरुत्थाय स्वीकृतश्च।

द्वितीये च प्रस्तावे प्रो० विद्याधर शास्त्री M. A. सम्मेलन मन्त्री सम्मेलन-पुनरुद्धाराय धन्यवादादिभिः पुरस्कृतः।

पश्चाच्च सर्वे शिक्षामन्त्रिणः शिक्षाक्रमे संस्कृताध्ययनाध्यापनप्रबन्धाय, विश्वविद्यालयीय-शास्त्रिभ्योऽपि मतप्रदानाधिकारप्रदानाय, सर्वत्र संस्कृत-परीक्षाप्रचालनाय, संस्कृताध्यापनप्रबन्धाय च प्रार्थिताः।

२१ विदुषामेका समितिः शिक्षाक्रमे संशोधनाय स्थापिता। श्रीकपूर्थलानरेश्वराणां सेवायां मद्रमण्डले प्रेषयितुं च निर्धारिताया च तत्रत्य संस्कृत-विद्यालय प्रबन्ध विषये निवेदयेत्। संस्कृतभाषा प्राचीना राष्ट्रभाषा तस्याः प्रचाराय प्रयत्नः परमावश्यक इति च निश्चितम्।

अन्ते सभापतिमहोदयानां श्री म० म० श्री गिरिधर शास्त्रिणां व्याख्यानं जातम् श्री प० बुलाकिरामशास्त्रिभिः स्वागताध्यक्षैर्व्याख्याने सर्वे साधुवादैः समलंकृताः। प्रधानकार्यालयो देहल्यां ( दिल्ली ) श्री प० प्रभुदत्तशास्त्रिणां मन्त्रित्वे, संयुक्तकार्यालयश्च विद्याधरशास्त्रिणो मन्त्रित्वे वीकानेरे। समागतानां नवीनानां काव्यनाटकग्रन्थानां निर्धारणाय च श्री म० म० प० मथुराप्रसादशास्त्रि

दीक्षित, श्री प० सूर्यनारायणशास्त्रि—श्री सभापति महोदयानां निर्णयसमिति निर्वाचिता । कार्यकारिण्याश्चापि निर्वाचनं जातम् ।

सम्मेलनेऽस्मिन् श्रीश्री कृष्णमाचार्य्येभ्यः M. A. ph. D. शारदाविलास, कविविनोद प्रभृत्युपाधि विभूषितेभ्यः—History clossicol sonskrit literoture, लेखकेभ्यः—सरस्वती हृदयालङ्कार—पदवी सर्वैर्विद्वद्भिः प्रदत्ता ।





## अभिभाषणम् ।

( अखिलभारतवर्षीयवर्णाश्रमस्वराज्यसंघस्य मद्रासे दशमेऽधिवेशने ध्वजारोपणमुपलक्ष्य श्री १००८ श्रीगोस्वामि गोकुलनाथमहाराजानामभिभाषणम् )

"न जातु कामान्न भयान्न लोभाद्‌ धर्मं जह्याज्जीवितस्यापि हेतोः" इति हि जीवितस्यापि कृते धर्मस्योपेक्षणं न श्रेयसे इति स्मृतिः प्रतिपादयति । धर्माचार्याः सर्वे द्वैत-विशिष्टाद्वैत-केवलाद्वैत-द्वैताद्वैत-शुद्धाद्वैतमतावलम्बिनः धर्ममेकमवलम्ब्याथवा धर्मभक्ती उभे अवलम्ब्यैवैककण्ठ्येन भारतीयानां संघटनं कर्तुमभिलषन्ति । "धर्मो रक्षति रक्षितः" इति हि धर्मरक्षैवात्मरक्षेति बोधयन्ती । धर्मग्लानिरेवैव भगवतोऽवतारस्यापि निमित्तमिति हि भगवद्गीताऽपि मन्यते । स च धर्मः "धर्मस्य तत्वं निहितं गुहायाः" मिति विदुषामपि दुरूहः इति यद् बोध्यते, ततो ज्ञायते न पुरुषबुद्धिः स्वतन्त्रा धर्मे प्रमाणमिति ।

भारतवर्षेऽपि सांप्रतं बहूनि नास्तिकान्यास्तिकानि च मतानि यानि प्रचलितानि वर्तन्ते, तेषां सर्वेषां तत्तन्मतप्रमणानि वेदा एव मूलम्, भारतीया हिंदुपद वाच्या आर्यपदवाच्या वा शिक्षाव्याकरणादयो यस्याङ्गम्,

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥"

इति यस्य नाम-मात्रेण विपरिवर्तनमनर्थायेति बोध्यते, स एव नाम वेद इति मन्यन्ते । सर्वेषामास्तिकानां धर्माचार्याणां पूर्वोदाहृतानामत्रैकमत्यमेव । तत्तत्संप्रदायभेदेन वैदिकवाक्यानां व्याख्यानसरणयो भिन्नभिन्ना अपि मोक्षतत्साधनादिविषय एव, न तु प्रथमसोपाने धर्ममार्गेऽपि ।

धर्ममार्गो हि सर्वः वर्णाश्रमानेवावष्टभ्यात्मानं लभते, इति वर्णाश्रमधर्मनाम्नापि धर्ममार्गस्य व्यवहारः। पुरा हि धर्ममार्गस्य रक्षणं कौटिल्याद्यर्थशास्त्रदृष्ट्याऽभिषिक्तमुख्यक्षत्रियाधीनमासीत्, यदा तु धर्मस्य यथा न ग्लानिः स्यात्, तथाकरणार्थं राज्ञामपि दृष्टिरासीत्। सांप्रतं तु मतान्तरानुयायिनां भारतवर्षशासनाद् धर्मरक्षणभारः तत्तद्ग्रामपञ्चायताद्यधीनः कियत्कालं यावदासीत्, अनन्तरं तु समाजानां शैथिल्यात् तत्तद्व्यक्त्यधीनं समपद्यत।

अस्यां चावस्थायामर्थशास्त्रप्राधान्यावलम्बिनां तत्तत्समाजानां बलाद् अर्थशास्त्रप्राधान्यवादो वृद्धिं प्राप्तः. इत्यतो वयं जानीमः, यत् तत्तद्ग्रामपञ्चायतनादिसंघटनं विना न प्रत्याशाऽपि वर्णाश्रमधर्मरक्षणस्येति। ग्रामपञ्चायतनं हि न केवलं धर्मशास्त्रम्, किन्तु अर्थशास्त्रमपि सुदृढं पोषयिष्यतीति परमो विश्वासः; इति सर्वेषामपि प्रथमकर्तव्यं कृत्यं ग्रामसंघटनमेव; येन हि क्रमात् जानपदसंघटनम्, च नगरसंघटनम्, तत्तत्प्रान्तसंघटनम्, तत्तद्देशसंघटनम्, अन्ततः सर्वलोकसंघटनम्, च विनैवाऽऽयासमनुपतन्ति। सांप्रतं हि अर्थशास्त्रप्राधान्यपक्षस्य सर्वत्र ग्रामेषु व्यक्तिविशेषेषु क्रमशो वृद्ध्या अर्थशास्त्रप्रचारस्यापि साहाय्यं विना न ग्रामसंघटनादिकं संभाव्यते, इति संघशक्तिरेका वर्णाश्रमधर्मानुसारिणामपि नियतमपेक्ष्यते—यतः "संघे शक्तिः कलौ युगे"। इदमेवाभिप्रेत्य दशभ्यो वत्सरेभ्यः पूर्वं प्रथमतो ब्राह्मणमहासम्मेलनेन काश्यां धर्मतत्त्वानि व्यवस्थाप्य संस्थापितोऽयं वर्णाश्रमस्वराज्यसंघः सुगृहीतनामभिस्त्यागमूर्तिभिर्धर्मप्राणैस्तत्त्वज्ञैश्च पण्डितप्रवरैः।

वर्णाश्रमस्वराज्यसंघो ह्ययमर्थशास्त्रप्रचारमेव स्वीयमपि लक्ष्यं मन्यते धर्माविरोधेन, इति सङ्घकार्यदर्शनेन सर्व एव भवन्तो जानन्ति। अनेन हि सङ्घेनादित आरभ्य धर्माविरोधमात्रमर्थशास्त्रे प्रधानतया गृह्यमाणमासीत्, यतोऽर्थशास्त्रविषये यथासंभवं संस्थान्तरैः साकमपि न विरुद्धा संभावना रक्षिता। अत एव वर्णाश्रमस्वराज्यपदमपि प्रयुक्तम्। अत एव स्वराज्याख्ये स्वलक्ष्ये "परैस्तु कलहे प्राप्ते वयं पञ्चोत्तरं शतम्" मिति नीतिरेव वर्णाश्रमस्वराज्य संघेऽपि अद्य यावत् परिपाल्यमानाऽऽसीत्। सांप्रतं त्वर्थशास्त्रेऽपि संस्थान्तरैः साकं महान् विरोधस्तत्र तत्र विषयेषु समापतति, येन देवब्रह्मस्वानां दायभागादेर्ऋणप्रत्यर्पणादेरन्यान्यस्य चार्थशास्त्रसंबन्धिनामपि विषयाणामाक्रमणं क्रियते। अत एव वर्णाश्रमस्वराज्यसंघस्याद्ययावदर्थशास्त्रविषय औदासीन्यमिवावलम्बमानस्यापि तत्रापि कर्तव्यानि क्रमेण वर्धन्ते। ग्रामसंघटनं तु वत्सरद्वयात् प्रागुपक्रान्तम्, इतः परं क्रमेण यथा सदलबन्धं परि-

पुष्येत्, तथाऽवश्यमेवायं संघः प्रयतेतेति विश्वसिमः। इदं तु सदुःखं सूच्यते-यद् गोरक्षाख्यं कर्म, यत् खलु सर्वे एव भारतीयाः परमो धर्म इति मन्यन्ते, तदिदं प्रत्यधिवेशनं प्रस्तूयमानमपि नानुष्ठानपर्यवसायि व्यवस्थापयति समुचित-प्रयत्नावलम्बेन वर्णाश्रमस्वराज्यसंघोऽयमिति। अन्याश्च नीतयस्तदा तदा सूत्र-रूपेण संगृहीता अपि तत्तद्वैयक्तिककामक्रोधादिपरित्यागेन व्यावहारिकीमवस्थां प्रापयितुमयमेवावसरः।

धर्मविषये विद्वत्परिषदेव वर्णाश्रमस्वराज्यसंघेन मूलस्तम्भतया मन्यते, इति मूलस्तम्भात्मनो विद्वत्परिषदोऽधिवेशनद्वयमस्मिन्नवसरे संघटितमित्येकेन मूलस्तम्भेन प्राणान् वर्णाश्रमस्वराज्यसंघ इदानीं दृढतरस्तम्भान्तरेणपि दत्त-हस्तावलम्बः—"द्विर्बद्धः सुबद्धं भवती" ति यान्येन दृढमूलः समपद्यतेति महदिदमानन्दनिदानम्, इतोऽपि महदानन्दस्थानं तु स्वतन्त्रा विद्वत्परिषदपि धर्म-वीर-श्रीहनुमद्ध्वजेनारोपितेनोपक्रान्ता संघस्य धर्मरक्षणप्रसङ्गेऽपि स्वीयधर्म-वीरभावावलम्बनस्यापि समयः प्रत्यासन्न इति सूचयति। आशास्यते शेषशायी भगवान् नारायणोऽपि धर्मवीरेण हनुमता ध्वजेन कार्यक्षेत्रे प्रवृत्तः

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥"

इति नीत्या संघकार्यं चालयिष्यति, इति ससंन्तोषं ससाष्टाङ्गनमस्कारं च भगवतः श्रीशेषशायिनो नारायणस्य ध्वजमिममारोपयामि वर्णाश्रमस्वराज्य-संघमूर्धनि—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥"

इति स्वीयां प्रतिज्ञामपि भगवान् नारायणो यथाऽवसरं स्मरेदिति। विश्वसिमः सर्वेऽपि वर्णाश्रमस्वराज्यसंघसदस्याः स्वलक्ष्येषु ग्रामपञ्चा-यतनादिसंघटनेषु विशेषतः सोत्साहा भविष्यन्तीति; अन्यथा हि वर्णाश्रमधर्म-पक्षपातिनां व्यवस्थापकसभादिषु बहूनि स्थानानि न स्वाधीनानि स्युरिति बिभिमः। ग्रामीणा हि सर्वे ब्राह्मणक्षत्रियवैश्यशूद्रानुलोमप्रतिलोमा न सांप्रतमपि धर्मविमुखा इति सर्वे एव भवन्तो जानन्ति। सांप्रतं तु नेतोऽप्यधिकं भवतां विदितवेदितव्यानां वक्तव्यं पश्यामः। अन्ते केवलमिदमेवोद्घाष्यते, यत्—

"क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप।"
"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत॥"

इति भगवत आम्नायस्य च सदुपदेशः सर्वदाऽनुसन्धीयतामिति।

[ स्वर्गतानां कोविद-कुल-कमल-दिवाकराणां सर्वतन्त्राणां सर्वतन्त्र-स्वतन्त्राणां
म० म० पण्डित मुकुन्द झा वक्सी शर्मणां वियोगे ]

# शोकाश्रु विन्दुः ।

ले०—श्रीकपिलदेव झाः व्या० आचार्य्यः साहि० शास्त्री, मुजफ्फरपुरम् ।

( १ )

हा ! हन्त हन्त मिथिला शिथिलाऽद्य जाता
विद्यावता-महह गौरवमद्य नष्टम् ॥
हा ! शारदाऽद्य विरह-व्यथया विपन्ना
वक्सी विचक्षण-बुधे दिवि सम्प्रयाते ॥

( २ )

हा ! हन्त धीधन-समाज-मुखाम्बुजस्य
श्रीरद्य गच्छति विगच्छति धीधनार्के ॥
शोकाश्रुविन्दु-तमसा जगदद्य दृष्टेः
पन्थान-माश्रयति नैव निमेष-मात्रम् ॥

( ३ )

श्री-जानकी-जनन-भूमि-विभूति मद्य
निक्षिप्य शोक-सदने तमसाऽकुले हा !
विद्वन्मणे ! निजयशश्चिर मत्र चित्वा
हा ! हन्त हन्त सहसा क गतोऽसि दूरम् ॥

( ४ )

यावद्गुणानुपगतान् बुधमण्डलीशान्
वक्सी विचित्रविबुधानपहृत्य रत्नम् ॥
हा ! हन्त हन्त सुधियां हृदयं विदीर्णं
शोकाश्रुपूर्णनयनं विधिना वितीर्णम् ॥

( ५ )

आः ! किं विधिः सुरपुरं, निजदर्शनीयं
मत्वा तमद्य सुधियं सहसा निनाय ॥
आत्मेच्छया किमुत ? देव-गुरुं स जेतुं
गत्वाऽद्य नो नयन-गोचरतां न याति ॥

( ६ )

दूनां विधाय मिथिलां दिशमद्य शून्यां
नूनं विधाय विधिना कुटिलेन नीतः ॥
किं वा पिपाठयिषुराश्रममद्य शैवं
काशीपुराधिपतिना स्वयं मेव नीतः ॥

( ७ )

सन्तप्त-मानसाश्छात्राः सन्तप्ता बुधमण्डली ।
मिथिला विह्वला शोकान् मुकुन्दे त्रिदिवं गते ॥

## श्रीपञ्चमीस्वागतम् ।

ले०—श्रीकपिलदेव भाः व्या आचार्यः, तीर्थः, साहि०शास्त्री ।

श्री शारदा नवल मञ्जुल मन्त्रपूतानन्दप्रबोधबुधबोधित-बोधपूताः ।
वीणाशयार्चनपरां सुधिया-मुपास्यां श्रीपंचमीतिथि मिमा मभिनन्दयामः ॥१॥

शान्ताममोघफलदां जननी-मिदानी मानन्द मूर्त्ति मचिरेण कृतानुकम्पाम् ।
आचन्तु मात्मवलसात् सुरभारतीं तां श्रीपञ्चमी तिथीमिमामभि० ॥२॥

रम्यामनूनयशसं शरणागतेभ्यो लोकोत्तरं समुचितं फल मर्पयन्तीम् ।
दिव्यां गिरं समधिगन्तु-मनन्यभाजः श्रीपञ्चमीतिथिमिमाम० ॥३॥

दासा वयं वय-मितीव सभक्तिलोका आराधयन्ति विधिना सुरभारतीं याम् ।
तत्स्वागतोचितविधौ समुदीयमानां श्रीपञ्चमीतिथि मिमा म० ॥४॥

भक्तिप्रियां भगवती मनुनेतु कामाः प्रेमोपहार-ममलं हृदये दधानाः ।
वाणी समागममुदा सहसा हसन्तीं श्रीपञ्चमी तिथि मिमा मभि० ॥५॥

वर्ये वसन्तसमयागम-लक्ष्य-भूते श्रीशारदाऽर्चनविधा-वनुरूप-मोदे ।
वाग् देवता-मभिमता-मभिवन्दमानाः श्रीपञ्चमीतिथि-मिमा मभि० ॥६॥

नक्तं दिनं समुपलक्ष्य जगद्धिताया मातुः समर्चनतिथिं नवशारदायाः ।
हे साधवः ! सहृदयाः ! जयकार-शब्दैः श्रीपञ्चमीतिथि मिमा मभि० ॥७॥



# मामकीन-निबन्धानां सिंहावलोकनम् ।

निबन्धा—पं० दीनानाथशर्माशास्त्री सारस्वतः मुलतानस्थ संस्कृतकालेजोपाध्यक्षः ।

## ( क्रमागतम् )

'आगरा' प्रकाशित 'कालिन्दी' पत्रिकायाः प्रथमे ।

( सं० १९९३ वर्षे )

१०२ संस्कृतपत्राणां साधारण इतिहासः—२ सं०, पृ० ३ । अग्रे इयं न दृष्टा ।

अयोध्या प्रकाशितस्य 'संस्कृत'स्य षष्ठवर्षे ।

( सं० १९९२—९३ )

१०३ सातवलेकरमहाशयस्य साहसिक्य —४ सं०, ७ स्तम्भेषु । १०४ वेदमन्त्रार्थहत्या—८-९-१० सङ्ख्यासु समाप्ता २१ । स्तम्भेषु । १०५ साम्य-वादविषयकसंवादः—१८ सं०, १५ स्तम्भेषु । १०६ कोऽभवान् सप्पोऽहम्—२२ सं०, ६ स्तम्भेषु । १०७ अस्पृश्योद्धार प्रकारविचारः—अन्तर्यामिनाम्ना, २६ सं०, ९ स्तम्भेषु । १०८ नमस्ते विवेचना—२७-२८-२९ संख्यासु समाप्ता, १७।। स्तम्भेषु । १०९ स्पृश्याऽस्पृश्ययोः संवादः—अन्तर्यामिनाम्ना, ३०-३१ सङ्ख्ययोः, १०।। स्तम्भेषु । ११० साम्यवादमन्दिरप्रवेशयोः प्रत्यालोचना—षष्ठवर्षस्य ३८ संख्यायाम्, सप्तमवर्षस्य ६, १४ संख्ययोः, १९ स्तम्भेषु; अद्याऽप्य-पूर्णोऽयं प्रबन्धः; अवशिष्टोऽग्रे प्रकाशयिष्यते । १११ भट्टमहाशयानां संस्कृते कृपादृष्टिः—तटस्थनाम्ना ३९ सं०, ५ स्तम्भेषु । ११२ साहसस्य पराकाष्ठा—अन्तर्यामिनाम्ना, ३९ सं०, ३।। स्तम्भेषु ।

'संस्कृतम्' सप्तमवर्षे ।

( सं० १९९३—९४ )

११३ गैर्वाणवा वाण्या विषये विविधविचारधारा—प्रथमे राष्ट्रभाषाङ्के ( विशिष्टाङ्के ) ४५। स्तम्भेषु । अयं मम निबन्धः 'आनन्द लखनऊ' 'श्रीः' श्रीनगर 'मीमांसा प्रकाश' पूना प्रभृतिसमाचारपत्रैः प्रशंसितः । ११४ लौकिक्यो गद्य-पद्यमयसूक्तयः—९-१० संख्ययोः, ८। स्तम्भेषु । ११५ भङ्गाभङ्गस्य गृध्रदृष्टिः—१० सं०, २ स्तम्भयोः । ११६—पौराणिकतावैदिकतयो रहस्यम्—११ सं०, ३।

स्तम्भेषु तटस्थनाम्ना । ११७ हिन्दुशब्दस्य प्राचीनता वैदिकता च—१६-१७ सङ्ख्ययोः, ११॥ स्तम्भेषु । अग्रेऽप्यत्र मम लेखाः प्रकाशयिष्यमाणाः—गीर्व्वाण-वाणीविषयकविचारधारा ५६ पृष्ठात्मकः परिशिष्टाङ्काय लेखः, आयुर्वेदे सनातनधर्म्म इत्यादयः ।

## बेलग्रामप्रकाशिता 'मधुरवाणी' द्वितीयवर्षम् ।

( सं० १९९३—९४ )

११८ अगस्त्यस्य समुद्रपानम्—२ संख्यायाम्, ५ पृष्ठेषु । ११९ मायिभिः सह मायाकरणे वैदिकता—४ सं०, ३॥ पृष्ठेषु । १२० पौराणिकदीर्घायुष्कता; परीक्षणम्—५-६ संख्ययोः, १० पृष्ठेषु । १२१ किं महिदासकवषकक्षीवज्जानश्रुतयः शूद्रा आसन्० ?—७-८ अङ्कयोः, १२ । पृष्ठेषु । १२२ तर्कप्रमाणयोः कतरस्य मान्यत्वम् ?—९ सं०, ५ पृष्ठेषु । अग्रे 'ब्राह्मणानामपि वेदत्वम्' इति लेखोऽत्र प्रकाशयिष्यमाणः । तृतीयवर्षस्य प्रथमाङ्को विशिष्टाङ्कः; तत्र प्रकाशनाय 'ब्रह्मचर्यं जीवनस्य पर्य्यायः' इति निबन्धः प्रहितः ।

## अमरौधा प्रकाशिते 'हिन्दु' नामकहिन्दीपत्त्रे ११ वर्षे ।

( सन् १९३६ )

१२३ देवता और मनुष्योंकी भिन्नता ६-८ सं०, पृ० ६ । १२४ ब्राह्मणभाग भी वेद है । १०-११ सं०, पृ० ३॥ अपूर्णोऽयं निबन्धोऽग्रे सम्पूर्य्येत ।

## हिन्दुः—द्वादशवर्षे ।

( सन् १९३७ )

१२५ नमस्ते अथवा हठवाद—२ सं०, पृ० ३॥ अयं ३५ पृष्ठात्मको लेखः क्रमशोऽत्र प्रकाश्येत ।

अमी लेखा मामकीना निर्दिष्टचरेषु तत्तत्पत्त्रेषु अद्यावधि मुद्रितास्सन्तः प्रकाशिताः । अधोऽङ्किता निबन्धाः सज्जीभूतास्तु वर्त्तन्ते; तेषु केचिद्यन्त्रस्था वर्त्तन्ते; अपरे च प्रकाशयिष्यमाणाः ।—

१—वेदपुराणयोरेकवाक्यता ( अवैदिकता निरासः ) । [ सूर्य्योदये ] २—वेद-पुराणयोरेकवाक्यता ( असम्भवता निरासः ) । ३—कतिपयन्यायास्तद्विवरणञ्च ( सुप्र० ) । ४—ब्रह्मचर्य्यं जीवनस्य पर्य्यायः ( मधुरवाणी ) । ५—विवाहवयो-विवेकः ( श्रीः ) । ६—विवाहवयोविवेचना ( श्रीः ) । ७—विवाहवयोनिर्णये प्रमाण-

संग्रहः। ८–मामकीननिबन्धानां सिंहावलोकनम् ( सूर्य्योदये )। ९–परिडत* प्रष्टान् प्रति प्रार्थना ( संस्कृतरत्नाकर० )। १०–विधवेव देवरम् ( सं० र० )। ११–रक्तबीजस्य रक्तादसुरोत्पत्तिः ( सं० र० )। १२–प्रकृतिनियमानां सामान्यशास्त्रता ( अमर भा० )। १३–बहुसन्ततिसम्भवमीमांसा ( वल्लरी )। १४–ब्राह्मणानामपि वेदत्वम् ( मधुर० )। १५–ब्राह्मणभाग भी वेद है ( हिन्दुः )। १६–नमस्ते अथवा हठवाद ( हिन्दु )। १७–न्यायालये मुद्रकाणामुपर्य्यभियोगः। १८–भगवान्नन्दनन्दनः। १९–साम्यवादमन्दिरप्रवेशयोः प्रत्यालोचना ( संस्कृतम् )। २०–कर्म्मण्यकर्म्म यः पश्येदकर्मणि च कर्मयः। २१–संस्कारविधौ पौराणिक मुद्रा। २२–दयानन्दपुराणम्। २३–आयुर्वेदे सनातनधर्मः। २४–महाभाष्यस्य सूक्तयः।

बहवो निबन्धा अस्माकं हृद्-देशे तिष्ठन्ति। तत्र वेदपुराणयोरेकवाक्यतेति ५०० पृष्ठबद्धो ग्रन्थः। अयं सूर्य्योदये क्रमशः प्रकाश्यते। ये महोदयाः प्रकाशितान्मामकीनलेखानमून् दिदृक्षवः स्युस्ते तत्तद्वर्षीय-तत्तत्संख्यानाम निर्दिश्य तत्तत्पत्रसम्पादकमहोदयेभ्य आनाययन्तु। यदि तेषां पार्श्वे ताः संख्याः स्युस्तर्हि ते ताः प्रेषयितुं शक्नुयुः, प्रतिसंख्यं तत्तत्पत्रमूल्यं सम्पादका एव निश्चित्य कथयेयुः। मम संकल्पोऽयमास्ते यदमी लेखा यत्र तत्र परिवर्त्य परिवर्ध्य सुपरिष्कृत्य च पुस्तकरूपे भागद्वये प्रकाश्येरन्। तत्र सनातनधर्म्मविषयका निबन्धा एकभागे संगृह्येरन्; साहित्यविषयका मिश्रिताश्चाऽपरभागे। कठिनशब्दानां कोष्ठकेषु सुगमपर्य्यायोल्लेख इतरेषाञ्च पदानां यथायथं टिप्पण्यां व्याक्रियाप्रक्रिया चेत्थमङ्क्येत, येन संस्कृतसाहित्येऽल्पप्रवेशा अपि एतत्पुस्तकबलादेव संस्कृतसाहितीप्रवेशं लभेरन्। अथ च सनातनधर्म्मप्रचारेप्सवोऽप्यस्मदीयलेखैर्बहूपकृता भवेयुः। येषां यस्मिन् कार्य्ये मया सह सहानुभूतिर्भवेत्; ते कृपया मां पत्रद्वारा स्वसम्मतिं पिशुनयेयुर्येनाऽहं सोत्साहः सम्नुक्तकर्म्मणि व्याप्रियेयं†। अथ च ये पुस्तक-प्रकाशकमहाभागा ईदृग्विधं पुस्तकं प्रचिकाशयिषन्तु; ते स्वाऽभिप्रेतं पिशुनयन्तु। प्रकाशितानां मामकीनानाममीषां निबन्धानां पृष्ठसंख्या प्रायः १२०० द्वादशशती, ५०० पृष्ठानि च 'वेदपुराणयोरेकवाक्यता' इति ग्रन्थस्य, ३०० मिता पृष्ठसंख्या मत्पार्श्वे विद्यमानानां निबन्धानाम्; एवं 'सूर्य्योदयाकारस्य २००० द्विसहस्रपृष्ठमितं मदीयलेखानां परिमाणं ज्ञेयम्।

मामकीन–प्रकाशित-निबन्धान् वीक्ष्य बहवो दूरदूरस्था बम्बई, सूरत, कलकत्ता, काशी, जयपुर ( बवाई, डूण्डलोद ) काश्मीर ( श्रीनगर ) मुजफ्फरपुर, सारन, बीकानेर, लवपुर, अमृतसर, हरद्वार, अयोध्या, मथुरा, मद्रासप्रभृतिमण्डलस्थाः

* अयं निबन्धः 'संस्कृतरत्नाकर' ४।७ प्रकाशितः ११। पृष्ठेषु।

† व्याप्रियेय—इति लिङि०।

विद्वांसः कतिचन पत्रद्वाराऽपरे साक्षात्कारद्वारा, एवं नेदिष्ठि स्थिताश्च विद्वांसो महतीं प्रसक्त्यासक्तिमुपेयिवांसः, मामुदसाहयँश्च। विशेषतो भारतधर्म्ममहामण्डलस्थाः स्व० स्वामिदयानन्दाः, सूरतवास्तव्या गोस्वामिव्रजरत्नलालमहाराजाः, म० म० पण्डित श्रीगिरिधरशर्म्माणः, पण्डितश्रीबूटरझा, श्रीद्रव्येशझाप्रभृतयश्च दर्शन-प्रदानपूर्व्वकं मल्लेखैः स्वसन्तुष्टिं प्राकाशयन्। केचिच्च मल्लेखैः स्वयोग्यतावृद्धि-मपि जातामसन्यन्त, पत्रद्वारा चाऽसुसूचन्। अन्ये च मल्लेखैः पर्य्याप्तसहायतां प्राप्य तद्-दिशा स्वलेखान् पर्य्यष्कार्षुः। तथाऽस्मल्लेखादनुप्रासयमकादि पदानि चोद्धृत्य स्वलेखं समसण्डयन्। अपरे च मल्लेखचौर्य्यमपि कृत्वा स्वनामप्रसिद्धि-मीप्सवोऽभवन्। एके च मम क्रियाविषयक प्रभृति लेखानां प्रेषणार्थं मामसकृदन्व-रुन्धन्। एके च मत्प्रकाशितसंस्कृतलेखानां हिन्दीभाषानुवादाय मां प्रैरिरन्। मन्ये, अन्येऽपि विद्वांस एवं सत्कार्येऽस्मिन् मामुत्साहयन्तः सन्तः, सुरसरस्वतीसेवने मह्यमव-सरान्तराण्यपि दापयिष्यन्ति।

अवसाने 'सुप्रभातसूर्य्योदयोद्योतसंस्कृतरत्नाकराऽमरभारतीवल्लरी-श्री-संस्कृत-मधुरवाणीप्रभृतिसंस्कृतपत्त्राणां सम्पादकोपसम्पादकव्यवस्थापकप्रकाशकमहाभागेभ्यो-येषामकम्पयाऽनुकम्पया गीर्व्वाणवाण्याः *शुश्रूषणस्याऽहमवसरमलमलप्सि †लब्धाहे चाऽग्रे—पुनरपि धन्यवादराशीनर्प्पयन् स्वकीयनिबन्धमहमिहैव विरमयामि। शमस्तु।

---

## गङ्गाशतकम्।



रचयिता—पण्डित नारायणपति त्रिपाठि महोदयः, काशीस्थः।

(क्रमागतम्)

न यात लोका! स्सुरसिन्धुतीरं,
नग्नं वृषस्थं भुजगावनद्धम्।
पञ्चाननं भूतपतिं विधाय,
स्वयं शिरस्था भवति क्षणेन॥ ८८॥

शिवा शिवशिरस्सरोवर(रस)समुद्भवा शाम्भवी,
स्वशैवकुलनाशिनी शिवमयी शिवालिङ्गिता।
शिवा-शिव-शिवङ्करी शिवकरी शिवत्वप्रदा,
शिवाय भज तां सतां शिवकरास्तु सा शङ्करा॥ ८९॥

---

* अलप्सि—लुङि इटि। † लब्धाहे—लुटि इटि।

सम्प्रार्थये पाणियुगं निबद्ध्य,
विश्वेश्वरं स्वर्गधुनीधरन्तम् ।
प्रभो ! भवेन्मद्वसतिस्सदैव
भागीरथीतीरकुटीरकोणे ॥ ९० ॥

यावत्कश्चिज्जननि ! यवनश्चर्मकुम्भं प्रवाहे-
ष्वादातुं ते सलिलममलं मज्जयत्यम्ब ! दैवात् ।
तावद्गावो विमलतनवः कामधेनुं हसन्त्यः,
क्रीडन्त्यस्ताः सुरपुरगता नन्दनारण्यचाराः ॥ ९१ ॥

रे रे दूता ! मदीया श्शृणुत मम वचो यर्हि यायास्त लोके
गङ्गातीरप्रदेशस्थनगखगमृगान्नॄन् पिशाचाँश्च पापान् ।
अस्पृष्ट्वैव स्वकार्ये लगत न हि भवेन्मेऽधिकारो विनष्ट
इत्याज्ञाभिस्स्वकीयान्प्रभुवरशमनोऽनुक्षणं शास्ति दूतान् ॥ ९२ ॥

एकेनैव मुखेन तेऽमृतमयं क्षीरं भवानीसुतस्
सेनानीरपिबद्ध्रुवं शिशुरसौ स्वास्यैस्तु षड्भिर्युतः ।
दैत्यान्सोऽप्यजयत्कथं तव पयो नित्यं पिबञ्जाह्नवि !
कामादीन् स्वरिपूनहन्न जितवाञ्जाने मनोदुष्टताम् ॥ ९३ ॥

किं माला यूथिकायाः शशधरकलया बिम्बितं वोत्तमाङ्गे,
किं वा सर्पोऽतिशुभ्रः प्रविशति कवरीं श्वेतसूत्रावलिर्वा ।
जातं शम्भोः पवित्रे शिरसि पलितमाहोस्विदेवं विविच्य
ज्ञाता सिद्धैर्भ्रमन्ती जयति सितजला देवकल्लोलिनीयम् ॥ ९४ ॥

कृत्वा गण्डूषमध्ये जलनिधिमपिबत् कुम्भयोनिर्यदैव,
तद्दुःखार्द्रा सबाष्पा भगवति ! भवती वीक्ष्य शुष्कं समुद्रम् ।
धावन्ती स्नेहवेगान्निजसलिलभरैः पूरयित्वा प्रियं स्वं
लोकानानन्दयन्ती भुवनमुपगता पातु गङ्गा सभङ्गा ॥ ९५ ॥

यादृग् यशोऽम्ब ! प्रथितं सहस्रमुखैरगण्यं गणनापरं ते ।
तादृङ् मदीयं खलु घोरपापमीक्षे द्वयोरद्य बलं युयुत्स्वोः ॥ ९६ ॥
अयमेव महाव्यतिक्रमः, क्रियते देव्यविचारतस्त्वया ।
यदपापिसुरापितापिनो, विहिता मोक्षपथाधिरोहिणः ॥ ९७ ॥
शशकैर्मशकैश्शुकैर्बकैः सुरसिन्धौ यदवाप्यते पदम् ।
ऋषिभिर्बहुयोगसाधनै र्जितगोभिर्न हि लभ्यते क्वचित् ॥ ९८ ॥
बहुभिर्दिवसैर्मया श्रुतं युगसन्ध्यन्तरमेव यास्यसि ।
स तु सन्निहितस्स्वयं जगज् जननि ! त्वं परिपासि पापिनः ॥९९॥

( पद्मबन्धः )

राजीव-संशोभितशुद्धवारा, रामायणादिस्तुतदिव्यधारा ।
राज्यं विमुक्तेर्निजभक्ततारा, रातु त्रिनेत्रा त्रिपथप्रचारा ॥ १०० ॥

जलयन्त्रपथेन काशिका—हृदयं या प्रविवेश जान्हवी
कथमेष्यति सा विहाय तां, सह विश्वेश्वरशोभितामिमाम् ॥१०१॥

या मालिङ्गितुकामा, श्रीकाशी मुक्तिधामासौ
तिष्ठत्युत्थितपाणि, "माधव—धरहरा"व्याजेन ॥ १०२ ॥

उक्तं केनचिदेव विष्णुरयुतं वर्षाणि संस्थास्यते,
तस्यार्द्धं जननि ! त्वदीयमुदकं भूमण्डलं पास्यति ।
किन्त्वेको भ्रमविभ्रमोऽत्र भवति स्पष्टः कथं वैष्णवं,
पादं विष्णुपदी प्रयास्यति नदीस्त्यक्त्वाम्बु पूर्वं ततः ॥१०३॥

माहं वच्मि वचः क्वचिज्जनचये जाने भवन्तीं खल,
सञ्जातां प्रकृतिं पुराणपुरुषाद् ब्रह्मद्रवां निर्मलाम् ।
शम्भोर्मस्तकमालती-सुममयीं मालां जगन्मातरं,
नित्यां नित्यतरङ्गिणीं त्रिपथगां भागीरथीं जाह्नवीम् ॥ १०४ ॥

रे रे कालान्तदूताः किमिति ममकरो गृह्यते पापमूर्ते !
नेतुं त्वां धर्मराजं प्रति कृतवृजिनव्रातसंशोधनार्थम् ।
मूढा ! दूरं प्रयात प्रभुरपि नहि वस्प्रष्टुमङ्गी क्षमो मे,
को हेतुः स्पृष्टगङ्गोऽहमिति शुभवचस्ते समाकर्ण्य याताः ॥१०५॥

विधीयतां पालकपुञ्जमत्र,
निधीयतां पद्ममराजशीर्षे ।
विगर्ह्यतां स्वर्गविलाससौख्यं,
विलोक्यताञ्चेदमरापगेयम् ॥ १०६ ॥

श्रीगौतमप्रार्थनया प्रसन्ना,
सिंहस्थिते देवगुरौ स्वयं या ।
स्वभक्तवृन्देप्सितकर्मसिद्ध्यै,
गोदावरीं गच्छति पञ्चवट्याम् ॥ १०७ ॥

यस्यास्तटे विन्ध्यगिरेश्शिरस्तथा,
श्रीयोगमायाष्टभुजादिशक्तिः ।
सदा वसन्ती कलिकल्मषौघान्,
विनाश(दार)यन्तीष्टफलं ददाति ॥ १०८ ॥

आसन्सत्ययुगे बहूनि भुवने तीर्थानि पुण्यानि वै,
त्रेतायां विहितं समस्तसुखदं श्रीपुष्करं दुष्करम् ।

जातं द्वापरसंज्ञके गुरु कुरुक्षेत्रं पवित्रं भुवि,
तिष्ये तीर्थकुलाभिवन्दितजला श्रीजाह्नवी केवलम् ॥ १०९ ॥
यस्याः प्रतीरे चरणाद्रिदुर्गे,
राजर्षिराड् "भर्तृहरि"र्यतीन्द्रः।
समाधिनिष्ठोऽप्यवगाहमान
आयाति काशीमिति सुप्रसिद्धिः ॥ ११० ॥
मज्ज्येष्ठसोदर्यवरस्य गंगे,
"लक्ष्मीपते"र्मृत्युगतं शरीरम्।
काश्या परित्यक्तमपि त्वयैव
तूरीकृतं भारतराजधान्याम् ॥ १११ ॥
मत्पूर्वजास्सारवपारतोऽम्ब !
समेत्य काशीं तत्र सेवनार्थम्।
विधाय वासं त्वयि मुक्तिभाजो,
जातास्तथा मां कुरु भाग्यवन्तम् ॥ ११२ ॥
अवाप्य यस्यामुदकं तिलेन,
संयोजितं स्वीयकुलोद्भवेन।
अक्षय्यतृप्तिं समुपेत्य दृप्ताः
भवन्ति तृप्ताः पितरः कृतार्थाः ॥ ११३ ॥
अशेषपापहारिणी गिरीन्द्रशृङ्गदारिणी,
गिरीशशीर्षचारिणी पयोधिपूर्तिकारिणी।
स्वसेविवृन्दतारिणी भवाब्धिभीतिवारिणी,
मदीयमुक्तिधारिणी भवेत्स्वभक्तिभारिणी ॥ ११४ ॥
ज्येष्ठे मासि सिते दले बुधदिने हस्तर्क्षसंशोभिते,
या स्नानेन हरत्यघं दशविधं चेतोवचोदेहजम्।
तस्यामेव तिथौ मया दशहरायां जाह्नवीप्रीतये,
तत्स्तोत्रं शतकाह्वयं शिवपुरे प्रारभ्य संलिख्यते ॥११५॥
न भूतो न भावी न चास्ति त्रिलोक्यां,
त्वयाऽप्यम्ब ! नो दृष्टपूर्वः कचित्स्यात्।
महाघोरपापी कुपात्रप्रवीरो
विरञ्चिप्रपञ्चे द्वितीयो मदन्यः ॥११६॥
अयोध्यादिका या श्रुता सप्तपुर्यः,
सदा मोक्षदा स्तासु या त्वद्विहीनाः।

ततोऽष्टादश त्वत्तटीस्था नगर्य्यः
कथन्नाधिकास्स्युर्महीमोत्तदाने ॥११७॥
सार्धसप्तशतक्रोशाधिका भारतभूर्यया।
प्लाविता "राजमहलाद्"द्विधारे ! नोऽव जाह्नवि ! ॥११८॥
भूयो भूयोऽपि भवता द्रवतां भूरिभूतिभूः।
भूतेशभालभृङ्गारो भ्रमद्भागीरथीभ्रमः ॥११९॥
जन्यो जंनुर्जन्यजघन्यजाल्म—
जुगुप्स्यजीर्णज्वरजैत्रजायुः।
जरज्जगज्जालजिघत्सुजिह्वा—
ऽजा जह्नुजाता जयताज्जगत्याम् ॥१२०॥
त्वदाश्रयत्वाज्जगदम्ब ! नित्यशो,
जरद्गवस्थो जटिलो महेश्वरः। ( ऽपि धूर्जटिः )
द्विजिह्वसंवेष्टितसर्वमूर्तिकः
सुखी भ्रमत्येष महाविषादनः ॥१२१॥

( क्रमशः )

---

## 'कुन्त-कौटिल्यम्'।

प्रणेता—साहित्यरत्नं, कविरत्नं, श्रीमदीशदत्त पाण्डेयः 'श्रीशः' शास्त्री, काव्यतीर्थः काशीस्थः।

[—एष 'श्रीश' महाशयोऽधिसंस्कृत कवि-मण्डलमेकल एवानुपमाशुकवियुगधर्मानुकूलोऽपि नवयुवकेषु युगान्तरकारी काव्य-प्रणेता। कविनानेनानवद्यपद्यब-धेनाखण्डवीररसरञ्जितं खण्ड-काव्यमेकमनेकैर्नैकशः सुप्रशंसितं 'प्रताप विजयम्' प्रणीतम्। 'प्रतापसिंह' स्य कुन्त-पराक्रम-क्रम-वर्णनपरोऽयमंशस्तत एव प्रकाश्यते ] ( प्रकाशकः )।

( १ )

मनस्विमानोन्नतमौलिखण्डकः
स्वदीप्तिसंभासितसर्वदिङ्मुखः।
प्रताप-हस्ते प्रतपन् प्रतापवान्
न कस्य कुन्तः कृतवान् प्रकम्पनम् ॥

( २ )

रणाङ्गणे कः खलु वीक्ष्य तं भया—
ज्जहावसून्नैव भटोद्भटोऽपि सन्।
न तेजसा तत्प्रभवेण केऽभवन्
स्थिता सुदूरेऽपि विदीर्ण-वक्षसः ॥

( ३ )

तूणीकृतास्त्रः स तडित्ततिप्रभ-
स्तुरुष्कजान् तुच्छतमान् प्रताड़यन्
त्विषामधीशस्तरसाऽथ ताण्डवे
त्रिलोचनस्यानुचराभ आबभौ ॥

( ४ )

निमेषमात्रेऽगणितान् विनाशयन्
निशाचरांस्तान् यवनाञ्निरन्तरम् ।
निभालयन् नाकनिकेतनातिथीन्
ननर्त नासीरगतो नटेन्द्रवत् ॥

( ५ )

सुधाम धाम्नां रणधीरधर्षणो
धुतारिपक्षो द्विजधर्मपक्षपाः ।
ध्रुवं धराधेनुक-धीमतां कृते
कृतेश एष श्रितवेषपेशलः ॥

( ६ )

सुरक्तसत्केशररङ्गरञ्जितः
सुचामरश्चञ्चलचन्द्रहासभः ।
सुधीरहस्तव्यजितः सहस्रधा
जहार हंहो हृदयं न कस्य सः ॥

( ७ )

प्रभंजनस्यापि जवं विभञ्जयन्
प्रादर्शयन् भीममसीयसाहसम् ।
प्रतापकुन्तः कुटिलान् प्रकर्तयन्
न कं समातङ्कितवानशङ्कितः ॥

( ८ )

अलक्षि विद्युत्फलकोपमः परै-
रतर्कि तर्कैकधनैर्यमोऽपरैः ।
अमानि कैश्चिच्च पलायने परैः
सुदर्शनो दर्शनमात्रकातरैः ॥

( ९ )

समुज्ज्वलोऽप्यप्रियरक्तरञ्जनो
विलम्बिदेहोऽप्यविलम्बघातकः ।
अथैकलः सन्नपि पञ्चतामय-
न्नयं जयं कस्य न चेतसोऽकरोत् ॥

( १० )

व्यलोकि सीमातिग एष यैरलं
पुनर्न तैरेतददर्शि भूतलम् ।
नयं प्रतापोऽपि चमच्चकार तां
विलोक्य कुन्तार्जितसिद्धवीरताम् ॥

---

## अन्योक्तयः ।

( ले० —लक्ष्मीनारायण द्विवेदी 'श्रीरामः' साहित्यशास्त्री ( फर्रुखाबाद )

तरुवरं प्रति—

पिक-शुक-शिखिनां सुकृतैस्तरुवर! पुष्पैः फलैः समृद्धोऽसि ।
अपि खल-काककुलानां कटुरटितानां कुलायतां यातः ॥ १ ॥

त्वत्फलभोगापीनस्त्वदङ्कलीनो मनांसि पथिकानाम् ।
उत्कण्ठयति वनीरुह! कूजन्नेकोऽपि कलकण्ठः ॥ २ ॥

त्वत्कोपलदलसदृशाच्छवयः स्वच्छं ध्वनन्तीभिः ।
गीर्भिस्त्वाञ्च परांश्च, त्वाम्पश्यान्कि प्रणन्ति नो कीराः ॥ ३ ॥

त्वामारुह्य विपञ्चीकरणासक्तानिमानघिनः ।
अमी गिलन्तो भुजगान्मधुरनिनादा जयन्ति शितिकण्ठाः ॥ ४ ॥

त्वच्छ्रित-सन्ततिभक्षाः, फलसम्पत्तिं च दूषयन्तस्ते ।
मलं दलेषु सृजन्तः, कटु कायन्तः, श्रुतिं वधिरयन्तः ॥ ५ ॥

काणाः कालाकाराः, पान्थस्वान्तं विकलयन्तः ।
श्रियमपि तव च हरन्तः, कथमथ धार्या अमी त्वया काकाः ॥ ६ ॥

शनिवाहनान्यमी यं, स्पृशन्ति शिरसि व्रजन्ति दृङ्मार्गम् ।
यस्याप्यथ रतरक्ता, जीवनसायश्च तस्य तस्य स्यात् ॥ ७ ॥

---

## अन्योक्तयः।

भ्रमरं प्रति—

हे हे द्विरेफ ! भवता भ्रमताब्जकोशाद्
उड्डीयते न सततं किमहोऽधुनापि ।
श्रीकृष्णवर्णमिव वर्णमवाप्य सद्यः,
किं मन्यसे त्वमधुना जलदेन तुल्यम् ॥

घटी यन्त्रं प्रति—

किं त्वं प्राणप्रियस्य दुःखविरहे क्रन्दायमाना सदा ।
किं वा नाम सदा हिमाचलसुतानाथस्य श्रोद्गीयते ॥
किं वाऽप्यालसिने जनाय नियतं प्रोत्साहनं दीयते ।
किं हेतोरनिशं ध्वनिं प्रकुरुषे हे हे घटीयन्त्रिके ॥

कलिकां प्रति—

आगन्तुं यदि नेष्यते सुकलिके ! मागच्छ मे हस्तयोः ।
ग्राह्यं मे वचनं सदा परमहो प्राप्ते नवे यौवने ॥
स्वार्थान्धाः करुणा-विवेकरहिता दुःसाहसाः षट्पदाः ।
पास्यन्ति प्रसृतं सुसञ्चितरसं हा हन्त ! न ज्ञायते ॥

—श्री नरसिंह पाण्डेयस्य 'पथिकस्य'।

---

## पण्डितेभ्योऽभ्यर्थना।

( ले०—श्री कुसुमाकर पाण्डेयः साहित्याचार्य्यः ग० आयुर्वेदिक कालेज ( पटना )

( १ )

"विद्वांसो वसुधातलेऽत्र वितता भाषाश्च नानाविधा
स्तास्वेका सुलभाऽव्यया शिवकरी गीर्वाणभाषा न वा ?
यच्छायामनुसृत्य रङ्कनिवहोऽप्याधारयञ्जीवनम्-
अन्येभ्योऽपि ददाति जीवनमहो ! पुण्यप्रदा सा न किम् ?

( २ )

"मर्त्यानामपकारिणी कुमतिदा धर्मध्वजोद्ध्वंसिनी ।
वेला, चास्ति कलेरतो हि जनता नास्तिक्यभावं श्रिता ॥
इत्थं सा प्रणिगद्यतेऽज्ञनिबहैर्गीर्वाणवाणी सुधा ।
नव्यं जीवनमादधाति सततं गीर्वाणवाणी सुधा" ॥

( ३ )

"या विश्वाऽब्धिनिमग्नलोककलुषोद्धारप्रशस्ता स्मृतिः
कृत्याकृत्यनिदर्शिका कविकृतिः श्रीरामलङ्केशयोः ॥
वर्णानां जननादि-यज्ञविधयो भूताः प्रभूता यतः
सा भाषा भुवनेऽधुना व्रजति हा ! शून्यं पदं दृश्यताम् ॥

( ४ )

"घोरा ज्ञान-निशाभिभूतमनसो यूयं समे साम्प्रतं
हित्वालस्यतमः प्रवित्त कुशलाः ! संसारवृत्तं मनाक् ॥
या भाषाऽमृतवल्लरीव गदिता देवासुरैर्मञ्जुला
"स्कूले" सा श्रयतेऽधुनैच्छिकपदं तुच्छं समालोच्यताम् ॥

( ५ )

कालेऽस्मिन् भवतामभीप्सितमिदं जीयाद्वरं संस्कृतम्
त्यक्त्वा द्वेषचयं मिथोऽत्र कुशलाः ! कार्य्यं महान्दोलनम् ॥
काचिद्वाऽप्यपरा ह्युपायसरणि र्गीर्वाणवाण्युन्नतौ
लोकानामनिशं यथाऽत्र शिवदा भूयाद्वरा भारती ॥

—:०:—

## स्वजातीयो विश्वविद्यालयः धर्मशिक्षा च ।

सम्प्रति सर्वत्रैव पृथिव्यामशान्तेरनलः कथं प्रज्वलितोऽस्ति । कथञ्च विश्वस्मिन्नेव मनुष्यसमाजे कलहाग्निः सन्धुक्षितो दरीदृश्यते । किमपरं सर्वाण्येव राष्ट्राणि समराग्निना मनुष्यसमाजं तदीयसभ्यताञ्च सर्वथा समुन्मूलयितुं लोकविनाशकानि नानाविधानि यन्त्रचक्राणि निर्मान्ति, समरक्षेत्रमवतरितुं बद्धपरिकराणि च सन्तिष्ठन्ते । इह हि यदि धैर्यमाधाय निष्पक्षपातबुद्ध्या विचार्य्येत चेद् भ्रान्तिपूर्णा ईश्वरभक्तिरहिता धर्मध्वंसकरी आधिभौतिक-वादैकपरायणा सांप्रतिकी शिक्षैव सर्वस्यास्य रोगजातस्य निदानतामासादयति ।

इह भारतेऽपि सांप्रतं सर्वत्रैव दारिद्र्यदावानलः सन्दीप्तो दृश्यते। सर्वेष्वेषु स्थानेषु सर्वस्मिन्नेव च प्रान्ते सामाजिक-पारिवारिकराजनीतिक्योऽशान्तयः प्रतिदिनमेधमाना एवावलोक्यन्ते, सर्वत्रैवेयमधार्मिकी अनीश्वरवादप्रधाना शिक्षैव निमित्तत्व-

मुपैति। अद्यत्वे परमपावने महर्षिसेवितेऽपीह भारते आलस्यं स्वार्थपरता भ्रातृद्वेषो-ऽन्यधर्मविद्वेषोऽनाचारोऽत्याचारो दैवे जगति चाविश्वासः स्वीयधर्मेऽनास्था अपवित्रता संयमनिरङ्कुशतोच्छृङ्खलताप्रभृतयः परस्परभक्ष्याभक्ष्यस्पर्शास्पर्शादिविवेकराहित्याद-यश्च दोषाः स्त्रीपुरुषेषु समान मुज्जृम्भमाणाः सर्वानेव भारतीयानामूलं श्रीहीनान् समृ-द्धिविरहितान् अल्पायुषः परस्परकलहप्रियान् विदधति। तत्रापि पिशाचीनीयमधर्म-बहुला नास्तिक्यकदर्थिता आधुनिकी शिक्षैव कारणतामेति।

अद्यत्वे भारतेऽस्मिन् घोरं मर्मभेदकमन्नकष्टं भारतीयानां प्रतिपदं परमुखापेक्षित्वं संसारयात्रानिर्वाहे संघर्षबाहुल्यं पितापुत्रयो राजप्रजयोः स्त्रीपुरुषयोः स्वजातिषु स्वसमाजे स्वबन्धुवर्गे दैनन्दिनमुत्तरोत्तरं यो हि कलहानलः सन्दीप्तो दृश्यते प्रजावर्गे चानुद्योगालस्यनिर्जीविकत्वादयो दोषाः समेधमाना दृश्यन्ते, तेषां सर्वेषामपि निदान मियमेव शिक्षा ईश्वरज्ञानविरहिता धर्मभावहीना विद्यते।

धर्मो विश्वस्य धारको धर्मेणैव सर्वं समेधते। धर्मप्रतिपालनेनैव मानवसमाजः स्वाभ्युदयमुपपादयितुं समर्थो भवति। महर्षिणा कणादेन च 'यतोऽभ्युदय-निःश्रेयस-सिद्धिः स धर्मः" इत्येव सूत्रितम्। मानवसमाजे अनायासतो धर्मेणैव सुखसमृद्धिः समेधते। धर्मबलेनैव भारतीयाः पुरा जगद्गुरुपदमधिगता आसन्। धर्ममहत्त्वप्रख्या पनार्थमेव महर्षिणा व्यासेन स्वदिव्यगिरा—

> ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति माम्।
> धर्मादर्थश्च कामश्च स धर्मः किं न सेव्यते॥

अतश्चेदन्निश्चितं विद्यते यद्धर्मबलेनैव मानवसमाजस्य शाश्वतिकोऽभ्युदयो भवितुमर्हति इति—

एतावता वाक्यप्रबन्धेनैतदेवावसीयते यत् धर्मशिक्षामन्तरा संसारार्णवीयमिदं दुःखजातं नान्तं गन्ता, नापि तस्येह सर्वथा समाप्तिर्भविता। यतश्चेह दुःखबहुलेऽपि जगति याथार्थ्येन शान्तिसुखसमृद्धिरभ्युदयोपलब्धिश्च स्यातामिति।

अतश्चेदं सर्ववादिसम्मतं विद्यते यत् बालकेषु बालिकासु च यथा प्रारम्भत एव धार्मिकशिक्षायाः सन्निवेशोऽपेक्ष्यते, तथैव राष्ट्रमात्रेऽपि सर्वत्रैव विद्यते धर्मशिक्षाया आवश्यकत्वम्। कुमारपाठशालासु महाविद्यालये बालिकापाठशालासु नारीविद्यालयेषु कन्यामहाविद्यालयेषु सर्वत्रैव धर्मशिक्षाया विद्यते नितान्तं प्रयोजनम्। मानवसमाजे च धर्मसंस्कारवृद्धौ सत्यां जगत्पालकस्य भगवतो विष्णोः परमेश्वरस्याऽप्युपलब्धो भविष्यति प्रसादः। धर्मवृद्ध्या हि प्रसीदति परमेश्वरो जगन्नियन्तेति सर्वेषामेव धर्म-सूत्रकाराणां प्रसिद्धः सिद्धान्तः। "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इति सर्वाभ्यर्हितस्य मनोर्धर्मप्रणेतुरादेशः। धर्मसंस्काराणां समृद्धिमासाद्य मानवाः स्त्रियो वा

मनसा कर्मणा वचसा पावनत्वं जुषाणाः सर्वथा सर्वतः स्वाभ्युदयमासादयन्तीति निश्चप्रचम्।

सम्प्रति जगति प्रतिस्त्रीपुरुष माबालवृद्धं धर्मभावो विवृद्धिं विन्देदिति धिया श्रीभारतधर्ममहामण्डलसञ्चालकैः अखिलभारतवर्षीय-धार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालयनाम्ना एका सर्वजनीना धर्मसंस्था प्रतिष्ठापिता ( All-India Sanskrit and Spiritual University ) यस्या संस्थायाः प्रधानं केन्द्रं धर्मकेन्द्रेषु सर्वोन्नतपदमधिगतवत्यां वाराणस्यामेव प्रतिष्ठापितं विद्यते। तस्य विश्वविद्यालयस्य चत्वारो विभागा विद्यन्ते। तथाहि—

(१) प्रथमः प्राचीनशास्त्रानुसन्धानविभागः। विभागेऽस्मिन् प्राचीनानां लुप्तप्रायाणामनर्घाणां हस्तलिखितपुस्तकानामनुसन्धानं भवति। द्वितीयः परीक्षाविभागः। अनेन विभागेन सर्वत्रैव देशविदेशेषु धर्मपरीक्षा-केन्द्राणि प्रतिष्ठाप्य तद्द्वारा धार्मिकशिक्षाप्रचारः कार्य्यते। तृतीयः शास्त्रप्रकाशनविभागः। विभागेऽस्मिन् धार्मिकाणां पाठ्यपुस्तकानां प्रणयनं विधाय प्रकाशनं क्रियते। गृहेषु धार्मिकशिक्षाप्रचारविभागश्चतुर्थः। अनेन विभागेन हिन्दुगृहेषु तदीयपरिवारसंघे धार्मिकशिक्षाप्रचारव्यवस्था क्रियते। भारतीयाः प्रतिष्ठिता विद्वांसो महामान्या राजानो महाराजा धार्मिका देशनेतारश्च सर्वथास्य विश्वविद्यालयस्य सूत्र-सञ्चालकाः सन्ति। तेषामेव हस्ते विश्वविद्यालयस्य प्रबन्धव्यवस्थितिर्विद्यते। विद्यालयस्यास्य जगद्धितकरेषु देशसमाजयोः सर्वाङ्गीणमङ्गलसाधकेषूद्देश्यसमूहेषु सत्स्वपि अधस्तना उद्देशाः अवश्यमवधानीया विद्यन्ते—

सर्वत्रैव भारते प्रतिप्रान्तं स्वतन्त्रनरपतिप्रान्तेषु च यत्र यत्र कन्यापाठशाला बालपाठशाला कुमारविद्यालयः प्रौढविद्यालयो नारीकलाशाला महाशाला वा विद्यन्ते, तत्र सर्वत्रैव तत्सञ्चालकैस्साक्षात् मिलित्वा पत्राचारादिना च निश्चित्य तेषां सम्मत्यनुसारं तत्-तत्-पाठशालासु धार्मिकशिक्षाप्रदानस्य व्यवस्थाकरणम्। प्रधाननगरेषु वा केन्द्रं प्रतिष्ठाप्य विद्यार्थिनां कृते धार्मिक-परीक्षाया व्यवस्था-करणम्। तत्र परीक्षायां समुत्तीर्णेभ्यो विद्यार्थिभ्यो मासिक्या वार्षिक्या वा वृत्तेः प्रदानम्। पुरस्काररूपेण च पुस्तकादीनां पदकादीनां वा प्रदानम्।

सर्वत्र स्वतन्त्र-नरपतिप्रदेशेषु च प्रधाननगर्य्यां धर्मसभासु विद्यामन्दिरेषु देवस्थानेषु वा तत्रत्य-धार्मिकसज्जनसाहाय्येन संस्कृतविश्वविद्यालयस्य विशेषपरीक्षयाः कृते केन्द्रसंस्थापनम्। तत्र च धार्मिकपौरोहित्यपरीक्षाया राष्ट्रभाषायाः संस्कृतभाषायाश्च परीक्षायां समुत्तीर्णेभ्यः विविधोपाधिप्रदानम् प्रमाणपत्रप्रदानञ्च। एतदर्थं विविधा उपाधयोऽपि निर्द्धारिताः सन्ति। अनेकधा छात्रवृत्तयोऽपि प्रकल्पिता विद्यन्ते।

स्त्रीणां कृतेऽपि धार्मिकशिक्षोपलब्धयेऽनेकधा व्यवस्था कृता विद्यन्ते। यतश्च नार्य्यः स्वगृहस्थिता एव इमाः सर्वा अपि परीक्षा दातुमर्हन्ति । धार्मिक-पुस्तकानामध्ययन-प्रबन्धोऽपि तासां कृते सुविहितो विद्यते ।

उच्चशिक्षाशालिनां पाश्चात्यपद्धत्या इङ्गलिशभाषाभिज्ञानां विदुषां धर्मगुरूणां धर्मोपदेशकानां धर्मप्रचारकाणां पुरोहितानां देवपूजकसमुदायस्य च कृते धार्मिक परीक्षाप्रदानार्थं सरलः प्रबन्धो विद्यते । ते यदि स्वगृहस्थिताः स्वीयं कार्य्यकलापं विदधत एव स्वस्वविषयकं कमपि निबन्धं लिखित्वा संस्कृतविश्वविद्यालयाधिकारिणां पार्श्वे सप्रमाणं प्रेषयेयुस्तथा अधिकारिणामेतद्विषये परितोषः स्यात्तदा यथायोग्यं महता मान्योपाधिना ते विभूषिता भवन्ति इति ।

प्रतिहिन्दुगृहं गृहपतिं विद्यालयस्य पोषकसदस्यं विधाय तद्द्वारा तदीयगृहस्थेभ्यो बालकेभ्यो बालिकाभ्यश्च धर्मशिक्षाया विशिष्टप्रबन्धार्थं धार्मिक-समाचार-पत्र-पुस्तकादि प्रेषण-व्यवस्था च क्रियते ।

एवं सर्वथा भारतव्यापिनोऽस्य धार्मिकशिक्षाप्रबन्धस्य कृते लोकबलविवृद्धये सर्वत्र प्रचारार्थं च श्रीकाशीनगर्य्यां 'श्रीदयानन्दोपदेशकमहाविद्यालय' 'आर्य्यमहिला-महाविद्यालय' इति नाम्ना द्वे धार्मिकसंस्थे श्रीभारतधर्ममहामण्डलसञ्चालकानां तत्त्वा-वधाने समुद्घाटिते विद्येते । यत्र योग्या विद्वांसो विदुष्यश्च धर्मशिक्षयाऽलङ्कृताः क्रियन्ते ।

विश्वविद्यालयस्य विशिष्टसमित्या सर्वदैवं प्रयत्नः क्रियते । येन सर्वेऽपि भारतीया धर्मोपदेशकाः पुराणवक्तारः पुरोहिताः कस्मिंश्चिदपि धार्मिककार्ये व्यापृता नरा नार्य्यो विश्वविद्यालयीयोद्देश्यजातमवगत्य तदीयोद्देश्यसाफल्यार्थं सयत्नाः स्युः । येन प्रतिनगरं प्रतिग्रामं प्रतिहिन्दुगृहं नियमतो धार्मिकशिक्षाया व्यवस्था समुचिता प्रचलिता स्यादिति ।

विश्वविद्यालयस्य पोषकसदस्यानां कृते १) एकं रूप्यकं प्रवेश-शुल्कं विद्यते यद्दानेन तेषां नाम सदस्य-पुस्तके लिख्यते तन्नाम्ना सर्वमपि धार्मिकशिक्षासंबन्धि-पत्रादिकं निःशुल्कं प्रदीयते । विश्वविद्यालयस्य वार्षिकं विवरणं नियमादिकञ्च निःशुल्कं प्रदीयते ।

अवसाने च सर्वानेव धार्मिकशिक्षासमेधनाभिलाषिणो विदुषो विद्यार्थिनो राजानो महाराजान् श्रेष्ठिनः धर्मोपदेशकान् संन्यासिनोऽन्यान् सज्जनान् संप्रार्थयमानोऽहमेत-देवाभिलषामि यदस्मिन् महायज्ञे ते सर्वेऽपि सर्वथा साहाय्यं विदध्युरिति ।

निवेदकः पण्डित बालकृष्णमिश्र ( बी० ए० एल-एल० बी०, काव्यतीर्थः ) ।

सेक्रेटरी श्रीभारतधर्ममहामण्डल, काशी ।

# शोकलहरी।

[ महामहोपाध्यायमिथिलाभूषण पण्डित मुकुन्दझा बक्शी महोदयानां महाप्रयाणे ]

रचयिता—पण्डित श्रीबालबोध मिश्रः, वेदान्त साहित्य-मीमांसाचार्यः।

अध्यापकः—गवर्नमेण्ट संस्कृतकालेज, काशी।

यदीयविद्यादिगुणप्रलुब्धा
मुग्धा न के वा जगतीतलेऽस्मिन्।
तस्मिन् परार्द्धादधिकप्रणामा
नामावशेषे विलसद्विशेषे॥ १॥

नामाकृतिभ्यामिह कृष्णरामौ
तथैव रामोऽपि च लक्ष्मणोऽपि।
एकोऽपि सन् भात्र्यवतारयुग्मः
कलिं स्वतः प्राच्ययुगञ्चकार॥ २॥

गुरुः स नः केवलयौगिको नो
रूढोऽपि नाकाद्धरणिम्प्रपन्नः।
कुर्व्वन्ननेकान् विपुलान्निबन्धान्
आसीत्स वाचस्पतिमिश्र एव॥ ३॥

देशे गुरुश्चित्रधरः प्रजातः
स्वयञ्च गङ्गाधर एव काश्याम्।
आचारमात्रं सकलं प्रजातं
धिया च नाम्ना स परेश एव॥ ४॥

स शिक्षयञ्छात्रमनेकशिष्या-
नाचारपूर्वं स्वयमाचचार।
इवाब्जजं सृष्टिविधौ परात्मा
गीताविधौ कृष्ण इवार्ज्जुनञ्च॥ ५॥

सम्मानितं सर्वत एव पश्यन्-
जानन् स्वयं सर्वगुणोपपन्नम्।
सम्मानयन् शब्दबलेन सम्राड्-
गुणज्ञतां स्वां प्रकटीचकार॥ ६॥

देशे निजे श्रीमिथिलेशमान्यः
सम्मानितोऽन्यत्र च राजवर्गैः ।
काश्यां महेशेन समादरेण
मन्ये समानीय कृतोऽतिथिस्त्वम् ॥ ७ ॥

यशस्त्रिलोकीं श्रयते यदीयं
तेजःप्रभावो हृदयान्धकारे ।
विद्वत्तया शीलितसर्व्वदेश-
स्तदीय आसीन्महिमातिरेकः ॥ ८ ॥

अपूर्व एवात्र स एष सृष्टः
सर्वोऽपि तस्यैव गुणेन कृष्टः ।
गूढातिगूढे विषयेऽपि पृष्टः
प्रत्युत्तरेणैव च को न हृष्टः ॥ ९ ॥

यस्मिञ्जनेन क्रियते प्रणामः
प्रतिक्षणं जप्यत एव नाम ।
गतः कथं हा ! सहसैव धाम
शोकार्ण्णवं नैव च पारयामः ॥ १० ॥

नाम्ना च वासेन स एष विष्णु-
र्बृहस्पतिर्वादिचये च जिष्णुः ।
कृतेऽपराधेऽपि परः सहिष्णुः
क चैव याति स्म स सञ्चरिष्णुः ॥ ११ ॥

विनैव विष्णुं किमु विष्णुलोको
विनैव शम्भुं किमु शम्भुलोकः ।
विना विरञ्चिं किमु वैधलोको-
विना भवन्तञ्च किमेप लोकः ॥ १२ ॥

शून्यां किमु प्रकथये मिथिलामिहैकां
भूमण्डलं किमु वदामि च शून्यमेकम् ।

लोकत्रयं यदिह शून्यमिदं न भूरि
ब्रह्माण्डमेव सकलं कलये हि शून्यम् ॥ १३ ॥

विद्यालयो विरचितस्त्रिदशालयोऽपि
ग्रन्थादिना विरचिता दिशि कीर्त्तयोऽपि।
सेवाः शिवस्य रचिता अपि लक्ष्मिवत्याः
शान्तिं गतः श्रमयुतः सुचिराय मत्या ॥ १४ ॥

सहजगूढविनिश्चयहेतवे
पदयुगं श्रयति स्म सुखं जनः।
त्वयि गते निजधाम विहाय नः
श्रयतु हा! बत सम्प्रति कं वद ॥ १५ ॥

क्षतिमिमां परिपूरयताम्भवा-
नवतरन्निति को हि वदेन्महान्।
अमृतनित्यमितिश्रुतिबोधितं
सकलवादिजनैरनुमोदितम् ॥ १६ ॥

सहजधैर्य्यमितीव समुत्सृज-
न्नहह! 'बाल' इतीव परं रुदन्।
विपुलशोकमहोदधिमाश्रयन्
श्रयति मौनमजस्रमचेतयन् ॥ १७ ॥

गजरसमितवर्षो वर्त्तमानश्च काश्यां
पदवरकृतभूषो मैथिलः श्रीमुकुन्दः।
शरजलनिधिरामग्लौमिते स्वे सनाब्दे
विशदसहसि विश्वे ज्ञानतो मुक्तिमाप ॥ १८ ॥

जनं दृष्ट्वा सर्वं गलित-निजगर्वञ्च विरहे
परां दृष्ट्वा खिन्नां ह! ह! ह! हृदि भिन्नां त्रिजगतीम्।
विपन्नेऽस्मिन्काले कथमपि च बालेन विहिता
शमायास्तां (प्रजातेयं) लोकप्रचुरतरशोकस्य लहरी ॥ १९ ॥

सर्वतन्त्रस्वतन्त्रमहामहोपाध्याय बख्शी मुकुन्दझा शर्म्मणां परलोकाधिगमे

# शोकोच्छ्वासः।

[ ले० श्रीबलभद्रठक्कुरः ग० सं० कालेज बनारस ]

अयि नाथ ! विद्यामनाथता-
मधिरूढा किल विज्ञमण्डली।
मिथिला शिथिलाऽखिलाधुना
मधुनाशस्य पदं गते त्वयि ॥ १ ॥
अमृतोपमया गिरा पुरा
परितः शिक्षयसे तु मादृशान्।
अधुना यदुनाथसंगतः
किमु नामाशु न माऽनुकम्पसे ॥ २ ॥
अयि नाथ ! किलाथ विज्ञता-
ऽनुगता सा त्वयि सर्वतः स्थिता ।
अधुना विधिना हता वयं
विरहे ते किमु नाऽनुकम्पसे ॥ ३ ॥
अयि विज्ञ ! सुविज्ञसंवृतं
यदि नानन्दवनं विनोदने ।
परितोऽमरभोगिनीवृतं
किमुतन्माघवनं वनन्तव ॥ ४ ॥
इह नाथ ! नवाऽवलोकयन्
निजतुल्यत्वमितो गतोऽधुना ।
गुरुवर्य्य ! विजित्य किं गुरुं
सुरसाचिव्यपदं विगाहितुम् ॥ ५ ॥
उत वा चतुराननादय-
श्चतुरा नो च तुरीयमागताः ।
चतुरत्वसुशिक्षणे पुन-
श्चतुरस्त्वं चतुराननं गतः ॥ ६ ॥

उत शेषविशेषतामहो !
श्रुतवानाशु जनार्दनेकशः ।
अविशेषयितुं गतोऽधुना
किमु नागस्य पुरं पुरोगमः ॥ ७ ॥

इति जल्पनकल्पनापराः
परितः शोकहुताशतापिताः ।
अधुना नयनाम्बुना जनाः
परिपिञ्चन्ति निजं कलेवरम् ॥ ८ ॥

मिथिला शिथिला न केवला
निखिला भारतभूरियं गुरो ! ।
विकला विरहे तवाऽधुना
किमु नाश्वासयसे समागतः ॥ ९ ॥

अनवद्यविद्य ! निरवद्यतामदं
नवगद्यपद्यरचना च नाधुना ।
दधते हतेति विरहे विमानसा
किल नम्यरम्यकविना विना त्वया ॥१०॥

मिथिले ! शिथिलासि किं पुन-
र्विकला भारतभूमि ! सांप्रतम् ।
प्रसवं कुरु तं तपोधने !
पुनरप्याशु सुतं गुणाकरम् ॥११॥

नयन नयनाम्बुनावृतं
हृदयं खेदकुलाकुलम्पुनः ।
गलमुच्छ्वसनं निरन्तरं
घृणुते मौनमतोऽवलम्बते ॥१२॥

श्रीमुकुन्दपदद्वन्द्वं मुकुन्दसुधिया धिया ।
आनन्दकन्दमानन्दवन त्यक्त्वा सुधारितम् ॥१३॥

नन्दितामरमन्दिरदरभंगा मण्डलान्तर्गत हरिपुर निवासि मिथिलामिहिर महामहोपाध्याय पण्डितप्रकाण्ड–बख्सी मुकुन्दझाजी शर्म्मणां कृते—

## शोकोत्तुङ्ग-तरङ्गः ।

लें०—पं० श्रीहरिनारायणमिश्रः ( नन्दनः ) व्या० आ० सी० संस्कृत वि० वराहीस्थः ।

मुकुन्दो हा ! हन्ताऽमरनिलयगन्ताऽभवदयम्
समाचारोऽसारो रहित-परिहारोऽर (ल) मधुना ।
चिरं चारं चारं विधुरित-विचारं प्रकटयन्
सतां स्वान्तं ध्वान्तं रचयति नितान्तं प्रतिपलम् ॥ १ ॥

सदाचाराऽऽधारस्त्वमिव क इहाऽऽचार-चतुरो
भवन्, भावी, भूतोऽमित-सुकृत-पूतोऽस्ति सुजनः ।
त्वदस्तिप्रत्यक्षं कथय ! किमु ? पक्षं कमपि वा
क्वचित्कृत्वा कश्चित् कथमपि विपश्चिद् व्यजयत ॥ २ ॥

यशो देशे देशे दिशि दिशि सुरेशेप्सिततमम्
चरन्नृत्यन् नृत्यन् ननु तव च कृत्यं यदजयत् ।
पुरा त्वत्कारुण्यं बुध ! यदतितारुण्यमतनोत्
तदेवैतन् मुञ्चन् कथमित इतस्त्वञ्च मतिमन् ! ॥ ३ ॥

त्वयि स्वः संयाते भवति जनजाते कलकलो-
जितं यत्, तत् सर्वं नटति च सगर्वं रिपुकुलम् ।
सुचिद् ! गाः साशङ्का अनुपलमहङ्कारकलितो
भृशं शोकोट्टङ्की दलयति कलङ्की कलिरयम् ॥ ४ ॥

गते धर्मध्वंसिन् ! अनुचित प्रशंसिन् ! बत !!! महा-
महोपाध्याये हा !!! त्वमपि निखिलेहावलयितः ।
अवद्यं यत् कृत्यं तनु तनु ! हि नित्यं सपदि तत्
कलङ्कात् त्वां नेता क इह जितचेता विजयते ॥ ५ ॥

सुरैः साकं रन्तुं, नरकगतजन्तुं, किमथवा
समुद्धर्तुं तूर्णं, शमनवलचूर्णं रचयितुम् ।

किमाहोस्विज् जेतुं गुरुपद मुदेतुं रविरिवो-
ऽमद् वान्यत् तेजः क नु परमजेयः स समवित् ॥ ६ ॥
सहस्रशुक्लं तञ्चन् विधुनिशमुदञ्चन् भवमितं
तिथिं बाणाऽध्यम्बा-शशिमितसमां *वाप्य मतिमान् ।
भवन् काशीवासी विषवषियहासी परमहः
शिवं ध्यायं ध्यायं समभवदिवाऽयं शिवमयः ॥ ७ ॥
यदन्यत् प्राग् जातं कुलिश-विनिपातं जगति तत्
कथञ्चित्सोढव्यं न तु परमनव्यं विरहजम् ।
विलोच्याऽतो दीनां भरविधुरलीनां तु मिथिलाम्
सदा वारां धारा पतति "हरिनारायण"दृशः ॥ ८ ॥

---

## नवीन-संस्कृतकोश-निर्माणस्य परमाऽवश्यकता ।



(ले० पण्डित श्रीवासुदेवद्विवेदी 'विनीतः' साहित्याचार्यः ।)

अस्माकं वर्तमान संस्कृत-शिक्षा-पद्धतौ यथाऽन्येऽन्ये दोषा वर्तन्ते तथैव परीक्षा-पाठ्य-पुस्तकानामाचार्यान्तमध्ययने सम्पन्नेऽपि व्यवहारोपयोगि-संस्कृत-शब्दानां ज्ञानाभावो मद्दृष्ट्या सुमहान् दोषः प्रतीयते । लब्ध-शास्त्र्याचार्यपदवीका अपि बहवः कतिपयसूत्रेषु विषयान्तरे वा कृताऽभ्यासतया संस्कृते शास्त्रार्थं कर्तुं कथञ्चित् समर्था अपि जीवनयात्रोपयोगिनि संस्कृत-भाषणे सर्वथाऽसमर्था भवन्ति इत्यस्माभिः सर्वदा विलोक्यते स्वयमनुभूयते च । एष दोषो न विद्यार्थिवर्ग एवास्ति प्रत्युत पण्डित-मण्डलेऽप्यस्ति । परन्तु, एतदर्थमपराधिनस्तु न विद्यार्थिनो न वा पण्डिता एव, अपितु शिक्षा-पद्धतिरेव । यतः शिक्षा-पद्धतेरेव समीचीनतयाऽऽङ्गलभाषाया अध्येतारोऽध्यापकाश्च सर्वविध-व्यावहारिक-भाषा-निपुणा वाक्पटवो लेखन-कला-कुशलाश्च भवन्ति । न तैराङ्गलभाषया दैनिके भाषणे मनागपि सङ्कोचो विधीयते प्रत्युत तद्विपरीतं मिथो मिलिताः सन्तो बाहुल्येन तस्या एव व्यवहारं कुर्वन्ति । कथं न ते कुर्वन्तु ? यतो न ते शब्द-दारिद्र्यं भजन्ते । तेषां प्रारम्भिक-पाठ्य-पुस्तकेष्वेव निखिल-व्यवहारोपयोगिनः

---

* वाप्येति अवाप्येत्यर्थः । "वष्टि भागुरिरल्लोप" इति नियमादकारलोपः ।

शब्दा धातवश्च मिलन्ति। तदुपरि तेषामध्यापकाः सततमेव शिक्षयन्ति यत्— "Eat in English, Drink in English, sleep in English and dream in English" अर्थात् भोजनं, पानं, शयनं, स्वप्नञ्चेति सर्वमाङ्गलभाषायामेव कुरुत। न केवलं शिक्षयन्त्येव, स्वयमप्याचरन्ति। तेषामध्ययनमध्यापनं विवादो ( Debate ) निवेदनञ्चेति सम्पूर्णोऽपि व्यवहार आङ्गलभाषयैव सम्पद्यते। एभिरेव समुदितैः कारणैस्ते पाटवमवाप्य समाजे लब्धप्रतिष्ठा भवन्ति।

अथाऽधुनाऽस्मनः संस्कृतसमाजेऽप्येका दृष्टिर्दीयताम्। इदानीन्तन-संस्कृतशिक्षा-संस्थया निर्धारितानां पुस्तकानामध्ययनेनाऽऽचार्यपरीक्षाया अन्तेऽपि व्यावहारिक-शब्दानामुपलब्धिर्न भवति। यतो न कालिदासेन, माघेन भारविणा वा रघुवंशादीनां परीक्षापाठ्यपुस्तकत्वेन निर्माणं कृतं येन तदनुकूला रचना विधीयेत। तान्येव च पुस्तकानि परीक्षायां सन्ति। यद्यपि काव्यदृष्ट्या सर्वमिदं प्रशंसनीयमेवास्ति तथापि तादृशानामपि पुस्तकानां परीक्षायामावश्यकता वर्तते येषु देशकालोपयोगिनो नवीना विषयाः शब्दाश्च लिखिताः स्युः। तथा च प्रथममेतादृशपुस्तकानामभाव एव कारणं संस्कृतभाषणासामर्थ्यस्य।

अतः परमेकस्य तथाविधस्य कोशस्याभावोऽपि विषयेऽस्मिन्कारणतां भजते, यस्मिन् सर्वेऽपि व्यवहारभाजः शब्दाः सङ्कलिताः स्युः। अस्मत्समाजे कोशघोषणस्यापि पद्धतिः प्राचीना वर्तते। कोशेष्वपि अमरकोशस्तावदाधिक्येन लब्धप्रचारोऽस्मत्-समाजे। बहवो बाल्यकाल एवाऽमरकोशस्य घोषणं कुर्वन्ति। बिहारोत्कलसंस्कृत-परीक्षायान्तु पाठ्यपुस्तकत्वेनापि निर्धारितो वर्ततेऽमरकोशस्याऽन्यतमः कश्चित्काण्डः। परमेतावताऽपि कोऽपि विशिष्टो लाभो न दृष्टिपथमायाति। यतोऽमरकोशेऽपि बहवो व्यवहारोचिताः शब्दा न सन्ति, बहवश्च नितरामनावश्यका एव विद्यन्ते। यथा तत्र "भात" इत्यस्य संस्कृतं वर्तते परं 'दाल" इत्यस्य नास्ति। "खूटी" वाचकौ नाग-दन्त-निर्यूहशब्दौ विद्येते परन्तु "अरगनी" वाचको न कोऽपि शब्दो मिलति। यद्यपि सर्वेऽपीमे शब्दाः कोशान्तरेषु लभ्यन्ते परं सर्वेषां तेषामेकत्रसंग्रहाऽभावात्, कोशान्तराणाञ्च विरलप्रचारतया विद्यमानैरपि परः सहस्रैर्व्यावहारिकैः शब्दैर्वयम-परिचितास्तिष्ठामः।

अनेनैव कारणद्वयेन व्यवहारिक—संस्कृतशब्दानलभमानाः पण्डिता विद्यार्थिनश्च सर्वथा संस्कृत-भाषणाद्विरक्तास्तिष्ठन्ति। यद्यप्यत्र तेषामालस्यमनुत्साहश्चाऽपि कारणं वर्तते तथापि पदे पदे संस्कृतशब्दानामभाव एव तान् सर्वथा व्यापारादस्माद्विमुखी-करोति इति बहुत्र ग्रामं ग्रामं मयाऽनुभूतमिदम्। एकदा काशी हिन्दू-विश्वविद्या-लयस्थ-संस्कृतच्छात्रावासस्य प्रधानाऽध्यक्षाः श्रीमन्तः पं० कालीप्रसादशास्त्रिणो व्या-करणशास्त्राचार्याश्छात्रावासे संस्कृतभाषण-प्रचारार्थं प्रार्थिता मामवोचन्—यत् पूर्वं

भवान् सर्वेषां दैनिकोपयोगभाजां पदार्थानां संस्कृतनामान्यन्विष्याऽनयतु ततः परं वयं संस्कृतयैव गिरा व्यवहर्तुं छात्रानाज्ञापयिष्यामः । एतत्कार्यार्थञ्चाऽहं तैर्बहुबारमुत्साहितः । एवमेवाऽस्माभिर्बहुत्राऽवलोकितमवलोक्यते च यत् पण्डिताश्छात्राश्च पाकं कुर्वाणा अपि पाकपात्राणां, विविधानि वासांसि वसाना अपि तत्तद्वाससां, नानाविध-खाद्यपेयलेह्यचोष्यपदार्थान् व्यवहरन्तोऽपि तत्तद्वस्तूनां संस्कृत-नामानि न जानन्ति । पण्डिताः खलु विद्यार्थिनामादर्शस्वरूपाः, यथा ते वर्तिष्यन्ते तथैव विद्यार्थिनोऽपि । परं पण्डितास्तु न स्वयमेव संस्कृते व्यवहरन्ति नापि छात्रानेवोपदिशन्ति । प्रत्युत बहवस्तु संस्कृतभाषाभाषिणेऽसूयामपि प्रकटीकुर्वन्ति । यदि कश्चन संस्कृते वदति तदा सोऽभिमानी पण्डितम्मन्यश्च मन्यतेऽपरैः । अत एवानेके कामयमाना अपि भयेन लज्जया वा संस्कृतेऽव्यवहरन्तो मयाऽवलोकिता बहुषु विद्यालयेषु । एवञ्च संस्कृतशब्दानामभावेन, औदासीन्येन, भयेन, लज्जया च परित्यक्त-संस्कृतभाषण-व्यापाराः कानिचित् परीक्षापाठ्य-पुस्तकानि पठन्तः पाठयन्तश्च संस्कृतस्यैव पण्डिता विद्यार्थिनः संस्कृत-प्रचारे बाधकतां भजन्ते ।

यदि संस्कृताध्ययनस्य कस्यामपि परीक्षायां कथमप्युत्तीर्णताप्राप्तिमात्रमेव प्रयोजनं स्यात्तदा तु न किमपि वक्तव्यं वर्ततेऽस्माकम् । परन्तु, एकतो यदा अ० भा० संस्कृत-साहित्य-सम्मेलने, देवभाषा-परिषदि, विभिन्नसंस्कृतप्रचारकसंस्थासु च संस्कृत-प्रचाराय विविधाः प्रस्तावा उपस्थाप्यन्ते, राष्ट्रभाषात्वसम्पादनाय (?) चान्दोलनं विधीयते, संस्कृत-पत्रपत्रिकादीनाञ्च सुचारु–प्रकाशनाय च प्रयत्नः क्रियते तदाऽपरतः संस्कृत-समाजस्येदृशी निश्चेष्टता कथमिवोचिता केनापि हितैषिणा वक्तुं शक्यते । अल्पीयांसि दिनानि व्यतीतानि, त्रिवेन्द्रम नगरे अ० भा० ओरियेन्टल कान्फ्रेन्सस्य सभापतिपद-मलङ्कुर्वाणैः श्री डा० एफ० डब्ल्यू० टामस सी० आई ई० महोदयैः संस्कृतस्योपयोगिता-सम्बन्धे तत्प्रचारस्यावश्यकत्वे च कीदृशं भाषणं दत्तमिति भवन्तः सूर्योदय-स्याऽस्मिन्नेवाऽङ्केऽन्यत्र पठिष्यन्ति । परमस्माकं कृते तु द्वादशवर्षपर्यन्तमधीत्याऽपि संस्कृत-भाषणमात्रमपि नितरां दुष्करं वर्तते तत्कथं नामाऽग्रे संस्कृतस्य प्रचारो भविष्यति संस्कृतं राष्ट्रभाषा वा स्यात् ?

माननीयाः सूर्योदयपाठकाः ! अनयैवात्मनः संस्कृत-समाजस्य दुरवस्थया दुःखितोऽहमिमां समूलमुन्मूलयितुं गतवर्षे तथाविधमेकं कोषं लिखितुमारब्धवान् यस्मिन् सर्वेषामपि व्यवहारभाजां शब्दानां संस्कृतशब्दाः स्युः । तदर्थञ्च बहूनां कोषाणामायुर्वेद ग्रन्थानाञ्चाऽध्ययनं कृतम् । दिने दिने नवनवाः शब्दा अलभ्यन्त । मनसि महान् हर्षो जातः । अहरहश्च समुत्साहोऽवर्द्धत ।

ततः परमेकदा मया विचारितम्, यदि हिन्दीशब्दसदृशानामेव संस्कृतशब्दानामन्वेषणं विधीयेत तस्य च समुचित-प्रचारो जायेत तदा संस्कृतभाषणे तत्प्रचारे

च समधिकमेव सौविध्यं स्यात्। यथाऽमरकोषे "पक्षद्वारन्तु पक्षकम्" इति शब्द-द्वयं "खिड़की" वाचकं वर्तते। वैजयन्तीकोषे पुनः "पक्षद्वारं खड़किका" इति खड़किका शब्दोऽपि वर्तते। एतेषां च पक्षक-पक्षद्वार-खड़किकाशब्दानां मध्ये खड़किका शब्देनैव तदितरशब्दद्वयापेक्षया झटिति अर्थज्ञानं जायते। इत्थं चानया-दिशा संस्कृतव्यवहारे प्रचारे च सौकर्यमवेक्ष्य मया तादृशानामपि शब्दानां संग्रहे दृष्टिर्दत्ता बहवश्च सङ्गृहीताः। केचनाऽत्रापि भवतां विनोदाय लिख्यन्ते—

बाप बप्पा—वप्ता ( त्रिकाण्डशेषः )।
आजा—आर्यकः ( „ )।
लड़का—लाडिकः (कामसूत्रटीकायाम्)।
कलाई—कलाची ( हारावली )।
टाँग—टङ्गः ( मेदिनी )।
लात—लत्ता ( भागवते )।
कोयला—कोकिलः ( कल्पद्रुकोषः )।
गोहरा—गोहलम् ( हारावली )।
दाल—दालिः ( कल्पद्रुकोषः )।
खिचड़ी—खेचरः ( राजनिघण्टुः )।
चपाती—चर्पटी ( त्रिकाण्ड शेषः )।
गडुवा—गडुकः ( शब्दरत्नसमन्वयः )।
कचोरा—कचोरः ( अभिधान-चिन्तामणिः )।
कटोरी—कटोरी ( रसरत्नसमुच्चयः )।
तावा—तापः ( अभिलषितार्थ-चिन्तामणिः )।
अगौछा—अङ्गोच्छः ( कल्पद्रुकोषः )।
गद्दी—गर्दिका ( अभिलषितार्थ-चिन्तामणिः )।
तराई—तराची ( हारावली )।
बैंगन—वङ्गनः ( शब्दार्थचिन्तामणिः )।
दुम ( पूँछ )—दुम्बकः ( „ )।
दीमक—दीका ( कल्पद्रुकोषः )।
बेंग ( दादुर )—व्यङ्गः ( मेदिनी )।
बोंक ( बकरा )—बुकः ( राजनिघण्टुः )।
गाछ—गच्छः ( त्रिकाण्डशेषः )।
खच्चर—खच्चरः ( राजनिघण्टुः )।
लीद—लद्दिः ( रसरत्नसमुच्चयः )।
मकुना हाथी—मत्कुणः ( वैजयन्ती )।

एवमेवाऽन्येऽपि बहवः सन्ति। अपरेषामपि संग्रहाय सततमुद्योग क्रियते। अनेनैव प्रकारेण शब्द-सञ्चयं कुर्वतो ममाद्य वर्षाऽधिकः कालो व्यतीतः। सम्प्रति शारदानुकम्पया मयैको लघीयान् 'विद्यार्थिबन्धुनामा कोशः, प्रकाश्यते यस्मिन् संज्ञा-सर्वनाम-विशेषण-क्रिया-क्रियाविशेषण-समुच्चयबोधकाव्यय—सम्बन्धबोधकाव्यय-विस्मयादिबोधकाऽव्ययखण्डभेदेनाऽष्टौ खण्डाः, संज्ञाखण्डे च गृहवर्ग-जातिवर्ग-शरीरवर्ग-वस्त्रवर्ग-पात्रवर्ग-खाद्यपेयादिवर्गभेदेन पञ्चाशद्वर्गाः सन्ति। सर्वे मिलित्वा कोशेऽस्मिन् ६००० व्यवहारिकाणां हिन्दीशब्दानां संस्कृतनामानि विद्यन्ते।

परमेतावता मम सन्तोषो नास्ति। अस्माकन्तु अयमभिलाषो वर्तते यत् निखिल-प्रान्तीयशब्दैः सादृश्यं भजतां-संस्कृतशब्दानामन्वेषणं विधाय सर्वेष्वपि प्रान्तेषु तत्तत्संस्कृत-शब्दानां प्रचारो विधीयताम्। संस्कृतशब्दा एव सर्वास्वपि भाषासु अप-भ्रष्टाः सन्ति। संस्कृतभाषाया एव एकार्थवाचिषु बहुषु शब्देषु कोऽपि कुत्राऽप्यपभ्रष्टः

कोऽपि कुत्रापि। यथा संस्कृते कफोणिः कूर्परश्चेति द्वौ शब्दौ वर्तेते, तयोः कफोणिशब्दस्यापभ्रंशः कोहनी, केहुनी, इति हिन्दीभाषायामुच्यते, महाराष्ट्रभाषायान्तु कोपर इति कूर्परशब्दस्यापभ्रंशः। एवमेव मद्विचारो वर्तते यत् प्रान्तीयभाषातः संस्कृतभाषायामेकैकं लघुकोशं निर्माय तद्द्वारा सर्वत्र सारल्येन संस्कृत-प्रचारो भवेत्। एतद्बुध्यैव मया प्रान्तीयभाषाणामपि लिपिज्ञानमध्ययनञ्च विधीयते। सम्भाव्यते यदि विद्वांसः स्वस्वप्रान्तीयशब्दानां क्रमेण सङ्ग्रहं विदध्युः, तेषां च सदृशसंस्कृतशब्दैः सह पुस्तकाकारेण प्रकाशनं स्यात् तदा झटित्येव सुगमतया तत्तत्प्रान्ते संस्कृतभाषा प्रचारिता-भवेत्। एतत्कार्यार्थं निम्नलिखितकार्याणि प्रागेवाऽनुष्ठेयानि भविष्यन्ति। तथा—

१—सर्वेषां प्रकाशितानामप्रकाशितानाञ्च कोषाणामध्ययनम्।

२—तेषु ये सन्दिग्धार्थाः शब्दाः स्युस्तेषामर्थस्पष्टीकरणम्।

३—सर्वेषु कोशेषु एकार्थवाचिनो यावन्तः शब्दा मिलेयुस्तेषामेकत्र क्रमिकः संग्रहः।

४—तेषु पर्यायशब्देषु कः शब्दः कस्यां भाषायां केन रूपेणाऽपभ्रष्ट इत्यस्य भाषाविज्ञानदृष्ट्या सम्यग् ज्ञानम्।

५—एकस्यार्थस्य वाचकाः कियन्तः पर्यायाः कस्मिन् कोषे सन्ति, पूर्वपूर्वकोषापेक्षयोत्तरोत्तरकोषेषु कथं पर्यायवृद्धिर्जाता? इत्यस्य विवेचनम्।

६—कः शब्दः कस्मिन्नर्थे कदा रूढ इत्यस्याऽनुसन्धानम्।

७—कोषातिरिक्तेभ्यः शिल्पशास्त्राऽर्थशास्त्र–कामशास्त्र–पाकशास्त्र–गजशास्त्राऽश्वशास्त्र–धनुर्वेद–पुराणेतिहासग्रन्थेभ्यश्च शब्दसंग्रहः।

८—एतस्य सर्वस्याऽप्यध्ययने कृते येषां शब्दानां संस्कृतं न मिलेत् तेषां कृते नवीनशब्दनिर्माणं भवेत्, तैरेव वा शब्दैर्व्यवह्रियेत? इत्यस्य विचारो व्यवस्था च।

तत्र येषां शब्दानां प्राचीनग्रन्थेषु संस्कृतशब्दाभावो निश्चित एवास्ति, तेषां कृते तु झटिति काचन व्यवस्था विधेया। यथा रेल, स्टेशन, कोट, स्यूटर, कुर्सी, बैञ्च प्रभृतयः। यद्यप्यस्मिन्विषये मतभेदो वर्तते। केचन नवीनशब्दनिर्माणमीहन्ते। केचन पुनस्तेषामेव शब्दानां संस्कृतेऽपि व्यवहारमिच्छन्ति। अपरे च बहवः सन्देहग्रस्ता एव तिष्ठन्ति। परन्तु सम्प्रति मतभेदमिमं दूरं विधाय सर्वसम्मत्या कस्यापि मार्गस्यावलम्बनं नितरामावश्यकं वर्तते। 'टिकट' इत्यस्य कृते चिटिकाशब्दश्चिरकालादस्माभिः काशीस्थ 'सूर्योदय'पत्रेऽवलोक्यते। केचित् प्रदर्शिनी इति व्यवहरन्ति। अन्ये पुनः प्रवेशिनी इति नाम्नाऽभिदधते। अयोध्यायाः "संस्कृतम्" पत्रे टिकट इत्येव लिख्यते। एवञ्चैकस्य शब्दस्य कृते यदि एतावान् विकल्पः स्थास्यति तर्हि कथं

केनाप्येकेन शब्देन सर्वेषामर्थबोधः स्यात् ? संस्कृतम्–पत्रस्य पाठका 'टिकट' शब्दं व्यवहरिष्यन्ति, सूर्योदयस्य तु चिटिकाशब्दम् । उभयोरेकत्र समागमे तु महान् विवादः सम्पद्येत। कदाचन परम्परयाऽधिकोऽप्यनर्थो जायेत । अतोऽस्मिन्विषये यथा स्यात्तथा त्वरा विधेया। संस्कृतपत्र-सम्पादकैस्तु संस्कृतसमाजकल्याणधियाऽवश्यमेव केनाप्येकेन पथा गन्तव्यम्। वर्तमानेऽस्मिन्वर्षे ( १९९४ सं० ) अमृतसर–साहित्यसम्मेलने गच्छन्तो महामहोपाध्यायाः श्रीगिरिधरशर्मचतुर्वेदाः काश्यामपि यदा समागता आसन् तदा मया ते बहुशोऽभ्यर्थिता एतदर्थम्। तैश्च प्रतिज्ञातं यदहं सम्मेलने शब्दनिर्माणाय प्रयत्नं विधास्यामि। परन्तु तत्रैतदर्थं काचन समितिर्निर्मिता न वा इति मयाऽद्यापि न ज्ञातम्। अस्तु पुनरपि ते मया मुहुर्मुहुः प्रार्थ्यन्ते। बलीयसी ममाशा वर्तते यत्ते वर्षेऽस्मिन्नवीनशब्दनिर्माणाय प्रबन्धं विधायाऽवश्यमेव संस्कृतसमाजमनुग्रहीष्यन्ति । अन्येऽपि विद्वांसो निजविचारं प्रकटयितुमभ्यर्थ्यन्ते। अस्मिन् विषये स्वसम्मतिः पत्रेषु प्रकाशनीया ।

एषु विषयेष्वन्यदपि बहु विस्तरेण वक्तव्यं वर्तते तत्सूर्योदयस्यागामिनि कलेवरे प्रकाशयिष्यामः। एतदुपर्युक्तं सर्वमपि कार्यं यदि समनोयोगं सम्पाद्येत तदाऽधोलिखितास्त्रयोऽपूर्वा अमूल्याश्च लाभा भविष्यन्ति। यथा—

१—अखिलपर्यायाणामेकत्र संग्रहे "बृहत्पर्यायसंग्रहाभिधान" नामकस्य कोशस्य रचना सम्पत्स्यते। ईदृशः कोऽपि कोशः प्रकाशितो नास्ति। महती पूर्तिः भविष्यति।

२—भाषाविज्ञानसम्बन्धिनि कार्ये ( Research ) सुमहत्साहाय्यं प्राप्स्यते।

३—शब्दार्थ–संशयोच्छेदश्च भविष्यति ।

किन्तु नैतत्सकलं कार्यमेकेन मया कर्तुं शक्यते। यत्किञ्चिन्मया लिखितम् अथवाऽऽयोजना कृता तत्सकलं पूर्णमेवास्ति इति न मया स्थिरीकर्तुं पार्यते। अत एव श्रीमतां पुरो मया स्वकीय-हृदयोद्गारोऽयं प्रकाशितः। अत्र किं हेयं, किं वादेयं, कया रीत्या, कीदृशेन च प्रयत्नेनेदं कार्यं सफलतां यास्यति ? किं किञ्चात्राऽपेक्ष्यते ? कुत्र च सर्वे कोषा मिलिष्यन्ति ? अर्थपूर्तिः कुतो विधास्यते ? इत्यादिविषये श्रीमताममूल्यां सम्मतिं ज्ञातुमिच्छामि। नितरां कृतज्ञो भविष्यामि, यदि श्रीमन्तः कृपया स्वसम्मतिं दत्वा कार्येऽस्मिन्मे साहाय्यं करिष्यन्ति। सम्मतिः सूर्योदयपत्रे प्रकाशनीया मम समीपे वा 'सूर्योदय' संकेतेन प्रेषणीया।

संस्कृतपत्र-सम्पादकास्तु मया विशेषतोऽभ्यर्थ्यन्ते। आशास्महे, सर्वेऽपि संस्कृतहितैषिणो मनीषिणः, सम्पादकमहाभागा अन्येऽपि एतत्स्पृहयालवः सज्जनाः कतिपयशब्दव्ययेनाऽस्मनो बहुमूल्यां सम्मतिं दत्वा मामनुग्रहीष्यन्तीति ।

---

श्रीमदखिलभारतवर्षीय

## संस्कृतसाहित्यसम्मेलनैकादशाधिवेशन स्वागताध्यक्षस्य

( महामहाध्यापक-महामान्य-महामहोपदेशक-पंचाम्बुभूषण-पण्डितराज-
सांख्यरत्न-विद्यानिधि-विद्यासागर-विद्यारत्नाकर-विद्यावाचस्पतेः )

### श्रीबलाकिरामशास्त्रिणः

# संक्षिप्तं स्वागतभाषणम्।



यत्पाद-पद्म-मकरन्द रसाभिषेकात्, सच्छास्त्रतत्त्वमधिगच्छति बालिशोऽपि।
तीर्त्वा भवाब्धिममलं पदमेति विष्णो, स्ताभ्यो नमोऽस्तु सततं गुरुदेवताभ्यः ॥१॥
समस्त-शास्त्रोघ-विमर्शहेतवः, मलीमसोत्तारि-विशुद्धसेतवः।
आप्तोत्तमज्ञान-निदानधेनवः, पुनन्तु मां ब्राह्मणपादरेणवः ॥ २ ॥

अयि ! श्रीमत्यो देव्यः ! पूजनीयाः ! माननीयाः ! आदरणीयाः ! सत्करणीयाः ! मातरो ! भगिन्यः ! पुत्र्यो ! वध्वश्च। तथा च श्रीमन्तो ! महामहिमवन्तो ! तत्र भवन्तः ! प्रभवन्तः ! भगवन्तः ! समस्तसद्गुणगणमणि-मण्डित-पण्डित-मण्डलाखण्डला ! विविधानवद्यविद्याविद्योतिताखिलभूमण्डलाः ! विद्वत्प्रवराः ! साधुवर्य्याः ! प्रतिनिधि-महोदयाः ! दर्शकमहाभागाश्च !

धन्योऽयमद्यतनो दिवसो यदद्य चिराभिलषितयुष्मद्दुर्लभशुभदर्शनेनात्मानं पवित्रीकर्तुं सर्वथाऽसमर्था अपि वयं युष्मत्कृपया समर्थाः सञ्जाताः स्मः।

दारुणेऽस्मिन् प्राणिमात्र-प्रकम्पकरे हेमन्तर्तौ विकरालेऽपि शीतकाले विदेशयात्राकष्टक्लेशानविगणय्यैतावद्दूरमागत्य युष्माभिरनुगृहीता वयं युष्माकमतीव हार्दिकं धन्यवादं प्रकुर्म्मः। परन्तु न लभामहे तादृशान् यथार्थवाचकान् शब्दान् यैरात्मनो वास्तविकान्तरिकाभिप्रायं व्यक्तीकर्तुं शक्नुयामः।

यद्यपि, क यूयम् ! महामान्या राजकीयोत्तमोत्तमदिव्यभव्यपूजोपचार-संभारसम्पूज्याः ! क दीना अकिञ्चना युष्माकं स्वरूपानुरूपां स्वागतसपर्य्यां संविधातुं न शक्ता वयम् ! तथापि गीर्वाणीसमुद्धरणपरायणतया प्रेम्णा समागम्य युष्माभिःकृतार्थीकृता वयमिति युष्माकं चरणकमलेषु पुनरपि धन्यवादपुष्पाञ्जलीः सहर्षं समर्पयामः।

यद्यपि, सम्भवेयुरनेकास्त्रुटयो युष्माकं स्वागतसत्कारसेवायान्तथापि, सहजोदारतया परमकृपालुतया च क्षम्यतां युष्माभिरिति मुहुर्मुहुः प्रार्थयन्ते विनीताः स्वागतकारिण्याः समितेः सभासदः ।

अयि ! माननीयाः ! महानुभावाः ! दिष्ट्याद्याखिल-भारतवर्षीयसंस्कृत-साहित्य-सम्मेलनस्यैकादशं महाधिवेशनं सफलीकर्तुं समुद्यता यूयमत्रैकत्र स्थिताःस्थ । नास्त्य-विदितमेतत्कृतधियां यत्संस्कृतभाषायाः समुन्नत्यै श्रीहरिद्वारे-ऋषिकुले सप्तत्युत्तरै-कोनविंशतिशततमे (१९७०) वैक्रमाब्दे ज्येष्ठशुक्लद्वादश्यां रवौ प्रातः स्मरणीय-सुगृहीतनामधेय-काशीनिवासि-पूज्यपाद-गुरुचरण—महामहोपाध्याय-सर्वतन्त्र-स्वतन्त्र-पण्डितराज—श्रीशिवकुमारमिश्रशास्त्रि—महाराजानां सभापतित्वेऽखिल-भारतवर्षीय-संस्कृत-साहित्य-सम्मेलनस्य सुप्रतिष्ठापनमासीत् । ततः प्रभृत्यद्य यावदस्य सम्मेलनस्य दशैव महाधिवेशनानि समभूवन् । यद्येवमेवातिशिथिलतयाऽनियमिततया च कदाचित्कमेवास्याधिवेशनं करिष्यते चेत् तदास्योद्देश्यसम्पूर्तिर्न कदापि सम्पत्स्यते । तत्तथा प्रयत्यतां यथास्य सम्मेलनस्य प्रत्यब्दमेवाधिवेशनं सम्पद्येत । सम्मेलने स्वीकृतप्रस्तावानां प्रचारश्च सर्वत्र कर्तुं शक्येत ।

अयि ! महाभागाः !आसन् पुरात्र सर्वशास्त्रप्रवीणा विद्वद्धुरीणा भूयांसो विद्वांसो ये निःशुल्कमेव स्वस्थाने हि च्छात्रानध्यापयन्ति स्म । तदानींतना विद्वज्जना वेतनादानं न सम्मन्यन्ते स्म । पूज्यपादा गुरुवर्य्याः पण्डित-श्रीगोपीनाथ-महाभागाः पण्डित-प्रकाण्डाः, डाक्टर लाइटनर-महानुभावैः स्वामिश्रीदयानन्दमहोदयैर्लाला सन्तराम-महाशयैश्च वेतनं गृहीत्वाध्यापनं लेखसंशोधनादिकं च कर्म कर्तुं बहुशोऽभ्यर्थिता अपि "सेवा श्ववृत्तिराख्याता गर्हिता सा द्विजन्मनाम्" इत्युक्त्वा नाङ्गीचक्रुः । तदैव हीयं श्रीगुरु-रामदासनगरी कनिष्ठा काशीति प्रसिद्धिं समवाप । साम्प्रतमप्यत्यत्र संस्कृतभाषा-पठनपाठनप्रचारः, सन्ति च कैश्चिद्वदान्यैर्धनिकैः सम्प्रचालिताः संस्कृत-महाविद्यालयाः पाठशालाश्चापि, यत्रानेके छात्राः पठन्ति परीक्षामुत्तरन्ति च ।

अस्ति चात्रैकः श्रीकृष्णकन्यामहाविद्यालयः कन्या एव पठन्ति प्रतिवर्षं हिंदी परीक्षासु संस्कृतपरीक्षासु चापि समुत्तीर्णा भवन्ति ।

यद्यपि गीर्वाणवाणी विश्वजनीना प्राणिमात्रोपकारिणी चातुर्वर्णिकानां चातुरा-श्रमिणाश्चैहलौकिक-पारलौकिकधर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रदायिनी सर्वस्व-भूतास्ति तथापि कुटिल-विकरालकलिकालप्रभावतोऽस्या ह्रास एव सन्दृश्यते क्रमशः ।

अहो दौर्भाग्यम् ! येषां कृते "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इत्यनुशासनं वर्तते, ते ब्राह्मणा अपि किमुतान्ये स्वपुत्रानाङ्गलभाषामध्यापयन्ति न संस्कृतमिति ।

साम्प्रतं संस्कृतभाषायाः संस्कृतज्ञानाञ्च दुरवस्थां दुर्दशाञ्च विलोक्य कस्य न खिद्यते चेतः सुचेतसः। संस्कृतज्ञा विज्ञा अपि "लोकव्यवहारानभिज्ञा" इति लोकप्रवादः कन्न खेदयति संस्कृतज्ञं विज्ञम्।

हा हन्त! या संस्कृतभाषा सर्वभाषादिमा सर्वभाषान्तरजननी चापि, सैवेदानीन्तनैस्तदीयालौकिकगुणानभिज्ञैर्दुःसाहसतया धृष्टतया च "मृतभाषा" इत्युच्यते। परन्तु नैतत्सत्यं किन्तु विपरीतमेव। यतोऽद्यापि पुरातत्त्वानुसंधानपरायणैर्विदेशीयैरपि स्वीक्रियतेऽस्या महत्त्वमिति।

किञ्च, याऽमराणां वाणी साप्यमरैवेति सा न कदापि मृता न मरिष्यति चापीति समाश्वस्यतां विश्वस्यतां निश्चीयताञ्चापि। परन्तु तथापि सावधानतया विचार्य्यतामस्याः समुन्नतेः कोऽपि सुगमः सरलश्च पन्थाः।

(१) संस्कृतभाषा व्यावहारिकी कथं स्यात् (२) राष्ट्रभाषा (३) राजभाषा च कथं भवेत् (४) सर्वसाधारणजनतायाः संस्कृतेऽनुरागः कथं समुत्पद्येत। (५) संस्कृतज्ञानामपि सुशिक्षितेषु समादरः कथं सञ्जायेत, इत्यादि सुविचार्य्य निर्धार्य्यतां कोऽपि सुकरोपायः। अन्यथा भाविनि नवीनशासने न शक्यते वक्तुं तत्र का स्थितिर्भविष्यति संस्कृतभाषायाः संस्कृतज्ञानां चेति चेतसि विचिन्त्यताम्।

सम्प्रति सर्वे देशाः सर्वा जातयश्चाहमहमिकतयाऽग्रतोऽप्यग्रे धावन्ति केवलं संस्कृतज्ञा एव शेरते तन्न शोभनम्। नायं शयनकालः किन्तु जागरणकालः।

## अत एव सम्प्रार्थयते—

कालापकर्षान्नृपविप्लवाद्वा, स्वभावतो वावनतिं गतस्य।
समुद्धृतौ संस्कृतरत्नराशेः, सतां विधेयः सततं प्रयत्नः॥

अयि! करुणावरुणालयाः! गुणग्रहणपरायणान्तःकरणाः! महोदयाः यत्किञ्चिन्न्यूनं वाधिकं वानुचितं वानुपयुक्तं वा निवेदितं भवेदत्र तत् क्षम्यतां युष्माभिरिति सविनयं याचते—विनीतो वशंवदः—

**वलाकिरामः (शास्त्री)**

(अमृतसरनगरे सुसम्पन्नस्य संस्कृतसाहित्यसम्मेलनस्य) स्वागताध्यक्षः।

# "ब्रह्मसूत्रस्य शक्तिभाष्यम्"

( समूलः प्रथमाध्यायः )

त्यक्तमहामहोपाध्याय-पद-पद नानादर्शनपरमाचार्य्य-सर्वतन्त्रस्वतन्त्र—पण्डित श्रीपञ्चाननतर्करत्नभट्टाचार्य्यविरचितम्। मू० १) रूप्यकम् "नं० ४७। हालदार-पाड़ारोड् कालिघाट, कलकत्ता" इति स्थानतो लभ्यम्। पुस्तकमिदं मया मनोयोगेन पठितम्। बहूनि स्थलानि एवमुपलब्धानि यत्र भाष्यकर्तुर्विवरणमपेक्ष्यते। यथा हि शाङ्करभाष्यस्य रत्नप्रभा टीका विद्यते तथैवास्य शक्तिभाष्यस्यापि विषमस्थलविवरण-कर्त्री काचन टीकाऽपेक्षितेति मम मनसि स्फुरितम्। सर्वप्रथममहं भाष्यकर्तार मभ्यर्थये यत् कमपि निजं योग्यं शिष्यं भाष्यमिदमध्याप्यैतट्टीकां संक्षिप्तां सरलां च स्वसमक्ष एव तेन कारयितुमनुकम्पतामिति।

अत्र भाष्ये को हि विषयो विद्यते इत्यस्य विज्ञापनन्तु इह संक्षिप्ते लेखे न सम्भवति। तथापि संक्षेपतो विदुषामौत्सुक्य-परिमार्जनाय भाष्यकर्तुरेव वाक्येभ्यः किञ्चित् किञ्चिदुद्धृत्येहोपस्थापयामि। इह भाष्ये ब्रह्मशब्देन शक्तिर्गृह्यते "तथाहि चिदचित्पर्य्याप्तसत्ताविशेषः, शक्तिरिति ब्रह्मेति परमात्मेत्यादिनामभिः व्यपदिश्यते। स चैकः, तद्व्याप्याः नित्यानित्यभेदभिन्नाः शक्तयोऽनन्ताः, नित्ये पुनर्द्वे एव चिन्मात्रा-चिन्मात्रभेदात्"।

सा हि शक्तिः भाष्यकर्तुर्मते निराकारा साकारा च विद्यते। तथाहि "ब्रह्मस्वरूपा-शक्तिर्हि साकारा निराकारा च तया खलु निर्माण-कार्यतया साकारत्वम् भक्तानुग्रहाया-लभ्यते। तदभौतिकमभौतिकगुणं चेत्यादि" तत्त्वज्ञाननिदानं तु महाशक्तेः करुणा सा च तदुपासनाधीना इत्यादि। "तत्र पूर्वमीमांसाप्रदर्शितदिशा कायिकवाचिक-कर्मप्रधानोपासनया विषयान्तरव्यावृत्तिसंस्कृतमनसः शोधितायां प्रवृत्तौ निर्मला निवृत्तिरुज्जृम्भते" इत्यादि—'शक्तिप्रसादजो निवृत्तानां मोक्षः, भोगश्चानिवृत्तानाम्' अध्यायावसाने च स्वयं भाष्यकृतैव भाष्योक्ततत्त्वानां संक्षेपः कृतः।

नित्या विलक्षणा सत्ता सा शक्तिर्ब्रह्म चोच्यते।
चिदचिद्द्वयपर्य्याप्ता न तु सा भिद्यते ततः॥
तन्मूलं हि जगत् सर्वं शिवशक्त्यन्वयाभिधा।
सोच्यते प्रतिबोधाय या वाङ्मनसगा नहि॥
एकैव सा ज्ञानबलक्रियारूपा सनातनी।
चिन्मात्रसत्ताऽचिन्मात्रसत्ता च व्याप्यते तया॥

पृथग् भूताऽप्यभिन्नास्ति नीरक्षीरयुतिर्यथा ।
चिन्मात्रकोटौ कूटस्थं चैतन्यं केवलः शिवः ॥
देवादिस्थावरान्तेषु जीवेष्वन्यत् प्रकीर्तितम् ।
बिम्बं कूटस्थ चैतन्यं प्रतिबिम्बं तथेतरत् ॥
अचिन्मात्रदिशि ख्याता मूलप्रकृतिरीश्वरी ।
शुद्धविद्या च माया च तद्भेदः परिकीर्तितः ।
महत्तत्त्वादिभूतान्तसर्गः सांख्यनयोदितः ॥
चिन्मात्रसत्ता या प्रोक्ता या चाचिन्मात्रगोचरा ।
सत्ता तद्द्वयमेवैतन्मूलशक्तेर्न भिद्यते ॥
मूलशक्तिर्निराकारा पूर्णानन्दमयी शिवा ।
उपासकेषु कृपया साकारा सापि वर्तते ॥
उमा दुर्गादिरूपेण मातृभावादुपास्यते ।
उपासकानां भ्रूणादिभावात्तद्भेद इष्यते ।
इत्येवमस्मत्सिद्धान्ते ज्ञायतां तत्त्वसंग्रहः ।

इत्येतावता भाष्यकर्तुर्वाक्योद्धरणेन भाष्यस्थविषयावगतिस्तु संक्षेपतोऽवश्यमेव पाठकानां स्यादेवेति नात्र बहुवक्तव्यस्य प्रयोजनमस्ति । सम्प्रति सूत्राणामर्थप्रकारे कियन्तो वाक्यांशाः समुद्ध्रियन्ते । तथाहि--

'जन्माद्यस्य यतः' १।१।२

अस्य लक्षणसूत्रस्यावयवभूतानि त्रीणि पदानि । जन्म आद्यस्य यतः इति समासरहितानि । आद्यो हि ब्रह्मा देवेष्वादावुत्पन्नत्वात् 'ब्रह्मा देवानां प्रथमः सम्बभूव ( मुण्डक १।१।१ ) तस्माद् आद्यो ब्रह्मा सर्गादिजातत्वात् तस्य यतो यस्याः शक्तेर्जन्म तद्ब्रह्मेति वाक्यशेषः । 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्वेताश्वतर-मन्त्रवर्णात् 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणम्' इति देवीसूक्तमन्त्रवर्णात् 'विष्णुः शरीरग्रहणमहमीशान एव च करितास्ते' इत्यादि ब्रह्मस्तुतिरूपसप्तशतीस्मृतेश्च अत एवोक्तं प्रपञ्चसारेऽष्टमपटले 'त्रिमूर्तिसर्गाच्च पुराभवत्वात्' इत्यादि एवं हि सर्वे-षामेव सूत्राणां विविधैः प्रमाणवाक्यैः सम्यगर्थो विहितो विद्यते । अत्राल्पीयसि लेखे भाष्यांशोद्धरणान्तरस्यावकाशो नास्ति तथापि महाप्रसिद्धस्य तुर्यपादस्थितस्यैकस्य सूत्रस्य व्याख्यानांशमुद्धरामि ।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधाद्' ।१।४।२६।

'या खलु शक्तिरस्मत्सिद्धान्ते ब्रह्मेति परमात्मेति वा परमेश्वर इति वा संज्ञा-यते । सा न केवलं पुरुषः किन्तर्हि प्रकृतिरपि अनुपादानकत्वे सति उपादानभूतापि

भवतीति शेषः। कुतः प्रतिज्ञादृष्टान्तानुपरोधात् = प्रतिज्ञा च दृष्टान्तश्च तयोरनुपरोधो व्याघाताभावः तस्मात्। एकविज्ञानेन सर्वविज्ञानं छान्दोग्ये प्रतिज्ञातम्। यदि ब्रह्मणः प्रकृतित्वं न स्यादियं प्रतिज्ञा व्याहन्येत। सांख्योक्तपुरुषवत्तस्य चिन्मात्रत्वे तस्य निर्विकारतया प्रकृतित्वायोगात् तद्विज्ञाने सर्वविज्ञानासम्भवाच्च। ननु "त्रिभुवनज्ञानं सूर्य्ये संयमात्" इति योगसूत्रादप्रकृतिभूते सूर्य्ये संयमादपि त्रिभूवनज्ञानवदप्रकृतिभूतेऽप्यात्मनि विज्ञाते तद्बलात् सर्वविज्ञानस्यानुपपत्त्यभाव इत्याशङ्क्याह दृष्टान्तेति। दृष्टान्तः = "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति मृद्विज्ञानात् सर्वमृन्मयविज्ञानवद् यद्विज्ञानेन सर्वविज्ञातं, तया खलु मृन्मयस्य मृदेव सर्वस्य प्रकृत्या भाव्यम्, अन्यथा दृष्टान्तो व्याहन्येत। तस्मात् पुरुषप्रकृत्युभयरूपत्वमेकस्याः शक्तेरित्याशयः" इति हि तस्य सूत्रस्य शक्तिभाष्यम्। अनेन पाठका भाष्यकर्तुः पाण्डित्यप्रकर्षेण सह व्याससूत्रानुसारि शक्तिभाष्यमेव विद्यते इत्यपि स्वीयां धारणां दृढयिष्यन्ति।

भाष्येऽस्मिन् व्याससूत्रानुसारिणि महत् प्रमाणमिदं विद्यते यत्सूत्रव्याख्याने क्लिष्टकल्पना कापि न दृश्यते, सर्वत्रैव सूत्राक्षरैरेव व्याख्यानं विहितमस्तीति सर्वथा स्मरणीयम्।

अन्यच्च प्राक्तना भाष्यकर्तारः परस्परं विवदमाना एकेऽपरेषां मत-खण्डने एव स्वीयां प्रतिभां ज्ञापयन्तो दृश्यन्ते। अत्र शक्तिभाष्ये तु इतराचार्य्यमतखण्डनस्य कथा तु दूरेऽस्तु, प्रत्युत आचार्य्यान्तरमतानुसरणमेव मया क्रियत इति शक्तिभाष्यकर्तुराचार्य्यस्य डिण्डिमघोषः। तथाहि पश्यन्तु तदीयवाक्यानि एतद्विषयकाणि—

"इदं पुनरत्रावधेयम् भगवद्भिराचार्य्यपादैः (श्रीशंकरभगवत्पादैः) सन्न्यासिनामवबोधाय यद् ब्रह्मसूत्र-व्याख्यानमारचितम्। शक्तिभाष्येऽस्मिन् तद्विरुद्धवादभूयिष्ठेऽपि तेषां श्रीमदाचार्य्य-चरणानां मतविरोधित्वं नास्ति। लोकोत्तरा हि गुरवो विनेयाधिकारमनुरुन्धानाः प्रवर्तन्ते देशनायै। न च तेषामेकतममतपक्षपातः" 'तैरेव भगवद्भिराचार्य्यचरणैः गृहिसाधारण-मोक्षमार्गोपदेशश्च प्रपञ्चसारे योऽसौ सप्रसादं सप्रयोगं सरहस्यश्चोक्तः आनन्दलहरीति गौडमण्डलप्रसिद्धायां सौन्दर्य्यलहर्य्यां यस्य चाभ्यर्हणं तमेव विभिन्नप्रस्थानं शक्तिवादमाश्रित्यास्माभिरेतद्व्याख्यानमुपक्रम्यते" इत्यादि।

एतेन भाष्यकर्त्रा शिष्टाचारव्रतप्रतिपालनपक्षपातित्वेन सहैव विनेयानां कृते महती शिक्षाऽपि दत्ता संसूच्यते। यतो हि कियतः कालात् संस्कृतविद्वत्समाजे स्वाहङ्कारप्रख्यापनमेव पाण्डित्यप्रकर्षसूचकं गण्यते। यथा श्रीमता पण्डितराजेन जगन्नाथेन —यत्र स्वग्रन्थे।

'वाचामाचार्य्यतायाः पदमनुभविता कोऽस्ति धन्यो मदन्यः' इत्युवाच तत्रैवेमे महोदया स्वभाष्यारम्भे—

नमामो गौतमव्यासौ गोत्रसूत्रप्रवर्तकौ
शङ्कराचार्य्यगङ्गेशोपाध्यायादींश्च सद्गुरून् ।
यच्छारीरकसूत्रजातमनघैराचार्य्यमुख्यैश्चिराद्
व्याख्यातं बहुधोपदेश्यधिषणावैशद्यसंसिद्धये ॥
श्रीपञ्चाननशर्मणाऽखिलजगन्मातुः कृपाकाङ्क्षिणा
तस्याधिश्रुति शक्तिभाष्यमधुना व्यक्तार्थमातन्यते ।

इत्यादिवाक्य-कदम्बैः कीदृशं स्वीयमनौद्धत्यं प्रकाश्य शिष्टसरणिमादृतवन्त इति सुधिय एव विमृशन्तु ।

यद्यपि स्वल्पीयस्यस्मिन् लेखे नाहं भाष्यविषयदिग्दर्शनमपि कारयितुमर्हामि तथाप्येतत्तु ब्रवीम्येव यदिह भाष्ये शङ्कराचार्य्य-सम्प्रदाये प्रचरद्रूपायाः श्रीचक्रोपासनाया अपि अनुकूलं भाष्यं विरचय्य शक्तिभाष्यकर्त्रा शङ्कराचार्य्याणामेवानुष्ठेयमनुष्ठितमिति । यतो हि प्रथमाध्यायस्य प्रथमपादसूत्राणि श्रीचक्रविदां समयिनामपि मतरहस्य-निवेदनाय विशेषतो व्याख्यातानि शक्ति-भाष्यकर्त्राऽनेन महात्मना । तथा हि तदीयं प्रतिज्ञावाक्यम्—

"अत्र समयिमतरहस्यनिवेदनाय प्रथमाध्यायप्रथमपादसूत्राणि तत्परतया च विशेषतः सङ्गमयिष्यन्ते ।" इत्यादि । किं बहूक्त्या मङ्गलाचरणे एव भाष्यकर्त्रा मनाक् काव्यार्थसूचनमिति नियममनुसरता यदुपदिष्टं तच्छ्रुत्वैव सुधियां शास्त्रतत्त्वविदां भाष्यस्यास्य विषयावगतिः स्यादिति निर्दिश्य विरम्यते मयेह विस्तरात् । तथाहि—

मङ्गलाचरणम्—

या नित्या श्रुतिशीर्षदर्शिततनु ब्रह्म यदाद्यप्रजा
विश्वेषां जननस्थिती विदधती मातेति या गीयते ।
अङ्के सुप्तमिवात्मजं वहति या कल्पावसन्नं जगत्
तां दुर्गां चिदचिन्मयीं परतरानन्दाय वन्दामहे ॥
उपनिषदुपगूढं मन्त्रशास्त्रेषु रूढं
मुनि-वचन-समूढं नित्य-विभ्रष्टमूढम् ।
समयिमतविशिष्टं यत् सुधास्वादमिष्टं
तदिह जगदभीष्टं शक्तितत्त्वं प्रदिष्टम् ॥

इत्येवं भाष्यमिदं सर्वथा सर्वतः शक्तिभाष्यमिति नाम्नः समुचितमनुकूलञ्च विद्यते । यतो हि संस्कृतवाङ्मयार्णवे सर्वाभ्यर्हितेऽस्मिन् ब्रह्मसूत्रेऽद्यावधि विद्यमानं

विरमामि विस्तरात्। भाष्यस्यास्यावश्यं विद्वांसः परिशीलनं विधाय परिष्कुर्वन्तु निज-शिष्या शेष-शेमुषी रिति भूयोभूयोऽनुरुणध्मि।

इह स्वल्पीयसि लेखे भाष्यामृतमहार्णवस्यास्य सन्दर्शनं कारयितुं कथमहमर्हामि। तथापि कियतोऽमृतविन्दुकणान् भाष्यकर्तुरेव शब्दानुद्धृत्य, सूर्योदय-पाठकेभ्यः समर्पितवान्। यदवश्यं वैदान्तिके जगति युगान्तरमुपस्थापितवतोऽस्य भाष्यामृतमहार्णवस्य दर्शनं सूर्योदयसहकारिसम्पादकपार्श्वे पत्रं सम्प्रेष्यानाय्य कुर्वन्तु इति। मुद्रणकर्गजपरिष्कारादिसौष्ठवमपि विषयापेक्षमेवास्ति। मूल्यविषये तु भाष्यविषयापेक्षया किञ्चिद्वक्तव्यमेव नास्ति। कर्गजपुस्तकाकारापेक्षयाऽपि स्वल्पतरमेवास्ति सार्द्धत्रयशतकपृष्ठमितस्य ग्लेजकर्गजविशिष्टस्यास्य पुस्तकस्य मूल्य १) एकरूप्यकमात्रमत्यल्पं विद्यते।

समालोचकः

( महामहाध्यापकः )—श्रीगोपालशास्त्री ( दर्शनकेशरी )

---

## समालोचनम्।

**किरातार्जुनीयम्**—श्रीमत्कविशिरोमणि-भारवि दामोदर-प्रणीतम्, घण्टापथ-सुबोधिनी टीकाद्वयोपेतम्। सर्गत्रयम्। मूल्यं ।।।) मात्रम्।

काशीस्थ विशुद्धानन्द महाविद्यालयीय साहित्यप्रधानाध्यापकेन श्रीमता पण्डित गौरीनाथशर्मणा विरचितया सुबोधिनीव्याख्यया कोलाचल-मल्लिनाथ सूरि रचितया घण्टापथ समाख्यया च समन्वितम्। अत्र ग्रन्थादौ गद्यात्मक कथासंक्षेपः, पद्यात्मक कथासंक्षेपश्च। 'सुबोधिनीः' टीकाकारेण कृतोऽस्ति, येन अस्य ग्रन्थस्य परीक्षोपयोगित्वं महत्वं च सर्वतोऽधिकं वर्द्धते। यथैकस्य श्लोकस्य व्याख्यानावसरे—

( १ ) अन्वयः, ( २ ) मल्लिनाथव्याख्याप्रकारः, ( ३ ) सुबौधिनी टीका, ( ४ ) समासः, ( ५ ) वाच्यपरिवर्तनप्रकारः, संस्कृतभाषायां, ( ६ ) सरलार्थः, तत्पश्चात्, ( ७ ) हिन्दी भाषायां भावार्थः, लिखितो विद्यते। संशोधनं मुद्रणं कर्गजादिकं चातिरमणीयं प्रतिभाति। अस्मन्मते सर्वेषां संस्कृतभाषाभ्यसनशीलानां विशेषतः परीक्षार्थिनां विद्यार्थिनां कृते ग्रन्थरत्नमिदं महदुपकारकं भविष्यति।

**रघुवंश महाकाव्यम्**—काशीस्थ राजकीय–प्रथम–परीक्षायां निर्धारितम्। द्वितीय सर्गतः सर्गचतुष्टयं यावत्। मूल्यम् ।।) अष्टाणकमात्रम्।

इदमपि, अन्वय-टीका-समास-कोष-वाच्यपरिवर्तन-हिन्दी भावार्थ-सहितं मनोहरं दृश्यते।

**पञ्चतन्त्र-पञ्चमतन्त्रम्**—( अपरीक्षितकारकमात्रम् ) पाठ्यग्रन्थेषु काशीस्थ-राजकायप्रथमपरीक्षायां निर्धारितम् विषमस्थलटिप्पणी-समलंकृतम्, श्रीमता पण्डित-गौरीनाथपाठकेन सम्पादितम्। मूल्यम् ≈)

वाल्मीकीयरामायणम्—रामायणमहाभारतयोः सङ्कलितांशः, तेनैवोक्तविदुषा विरचितया सुबोधिनीनामिकया व्याख्यया सहितः, प्रथमपरोक्षोपयोगी च । मूल्यम् ≈)

एतेषाम् अन्यसर्वविधसंस्कृतपुस्तकानां च प्राप्तिस्थानम्—

मैनेजर शारदाभवन, ६३ अगस्तकुण्डा, बनारस ।

सभा०—अवधेशप्रसाद शर्मा

## मीमांसाप्रकाशः ।

सम्पादकाः श्रीवामनशास्त्रिणः किञ्जवडेकराः मीमांसकशिरोमणयः । वार्षिकं मू० ५) पत्रमिदं प्रतिमासं संस्कृतभाषायामीङ्गिलशभाषायाञ्च एम्० जी० पी० नाम्न्याः समितेः पूना नगरात् प्रकाश्यते ।

अत्र लेखाः प्रायो महतां विशिष्टविदुषामेव मीमांसाविषयका दार्शनिकविचार-परिपूर्णा गवेषणात्मका मननशीलाः प्रकाश्यमाना दृश्यन्ते । इङ्गिलशभाषायामेव प्रधानतया लेखाः सन्ति । एवं मीमांसाविषयकभावविवरणं सर्वसाधारणजनगम्यत्वमं प्रकुर्वतां सम्पादकमहोदयानां वयम् सर्वेऽपि संस्कृतज्ञा विद्वांसो महान्तमुपकारं बिभ्रमस्तेभ्यो धन्यवादानपि भूयसो वितरामः । कर्गजमुद्रणादि सर्वसौष्ठवसम्पन्नस्यास्य पत्रस्य पञ्चरूप्यकं मूल्यं किञ्चित्करमेवास्ति । मीमांसातत्त्वबुभूत्सूनामत्युपयोगि पत्रमिदमिति स्वल्पेनैव विरमति ।

समालोचयिता श्रीगोपालशास्त्री ( दर्शनकेशरी महामहाध्यापकः ) काशी ।

### विद्यार्थिबन्धुकोषः ।

साहित्याचार्येण श्रीवासुदेवद्विवेदिना विनीतेन संगृहीतः सम्पादितश्च । पण्डित-विश्वनाथद्विवेदिना भवानीछापर (पो० परोहा–जि० गोरखपुर) ग्रामनिवासिना प्रकाशकेन प्रकाशितः । प्रकाशकात्, सूर्योदयकार्यालयाच्च लभ्यते । मूल्यम् अष्टाणकमात्रम् ।

श्रीमता पण्डित वासुदेवद्विवेदि विनीत इत्यन्वर्थोपनामकेन संगृहीतः 'विद्यार्थि-बन्धुकोषः' इति यथार्थनामा कोषो मम पुरतो विद्यते । अत्र गवर्नमेण्टसंस्कृत-कालेजाध्यापकस्य न्यायव्याकरणाचार्य पण्डित सूर्यनारायण शुक्ल मीमांसक शिरोमणेः संमत्युद्धरणमेव समीचीनं प्रभाति —

"हिन्दी शब्दसदृशानां संस्कृत शब्दानाम् अन्वेषणं तु सर्वथा नवीनमेव कार्यं वर्त्तते । यद्यपि सन्ति बहवः प्राचीनाः नवीनाश्च संस्कृतकोषाः तथाप्यस्मिन् पुस्तके संस्कृतप्रचारोपयिको यः शब्दविन्यासक्रमो वर्गादि विभागश्च मयावलोकितः स संस्कृत-कोषेतिहासे सुतरामभिनव एवाविष्कारो वक्तुं शक्यते" पुस्तकमिदं संस्कृतविद्यार्थिनां भाषणे लेखने च सुमहत् साहाय्यं विधास्यतीति मामकीनमपि मतम् । अस्य मुद्रणादिक सौष्ठवं मनोहर विद्यते । सुरवाङ्मये अभिनवरीत्या कोशप्रकाशनप्रयासः संग्रहीतुः प्रशंसनीयः ।



महोपाध्याय शास्त्री रेवाशङ्कर मेघजी पुरोहितः
( बम्बई )

# जिज्ञासा-समीक्षा।

( लेखकः—पं० केदारनाथ त्रिपाठी व्याकरण-शास्त्री ( गोला, गोरखपुर )

दिगन्तरालव्याप्यप्रतिमममधुरिमामण्डिताया ललितालापलसितायाः सरससुस्वादुगद्यपद्यसम्बलितायाः परम-पुण्याया गीर्वाण-वाण्या मासिकपत्र-सूर्योदयपाठकानामतिरोहितं पदम्य द्वादशवर्षीय ( ४–५–६–७ सं० ) कलेवरे "प्रश्नोत्तरणम्" इति शीर्षको लेखो राजते। तत्र द्वितीयपङ्क्तौ "विगताङ्के कस्मिंश्चित् सूर्योदयस्य प्रश्नद्वयं व्याकृति-स्थलीं समवलम्ब्य मुद्रितमासीत्" इति लिखितं वर्तते।

साधारणेनापि संस्कृतज्ञेन ज्ञातुं शक्यं यत् प्रश्नोत्तरणे समयस्य दीर्घता न सम्पादिता। विदुषाऽपि तत्र भवता जिज्ञासुना लिखितं त्रयोदशवर्षीय-(१–२–३–४–५ सं०) कलेवरे "श्रीकेदारनाथत्रिपाठिमहोदयेन दातुं द्वादशवर्षीयसूर्योदयस्ये"त्यादि। अहो बुद्धेर्विकासः–प्रज्ञाया विलासः। लेखस्य प्रकाशने दीर्घता समयस्य सम्पादिता। किं बहुना भवतां प्रश्नद्वयस्योत्तरणं क्रमशो दीयते—

१—आवश्यिका–आवश्यकी–इति प्रयोगद्वयमपि साधु। तथा हि–अवश्यंभवितरि 'आवश्यक' शब्दः। "ओरावश्यके" इति "आवश्यकाधमर्ण्ययो"रिति वा निपातनात् 'ठक्'–इक इकारस्याकारश्च। स्त्री विषये 'टिड्ढे'ति ङीपि "आवश्यकी"। धर्मपरकादावश्यकशब्दात्–अर्श आद्यजन्तत्वात् स्त्रियां "अवश्यिका"।

अथवा—अवश्यं भाव आवश्यकः। मनोज्ञादेराकृतिगणत्वात् "ओरावश्यके" इति "आवश्यकाधमर्ण्ययो"रिति वा निपातनाद्–वुञ्। अव्ययानां भेति टिलोपः। आवश्यकमस्त्यस्मिन्नित्यावश्यकः, अर्श आदेराकृतिगणत्वात्–अच्। स्त्रियामावश्यिका। प्रज्ञादित्वादणि "आवश्यकी"।

अथवा—पिप्पल्यादेराकृतिगणत्वादणि ङीपि "आवश्यकी" इति।

२—द्वितीयप्रश्नस्याशय उपवर्णितो जिज्ञासुना "पूणध्यै······ पूणध्यै–इति कथं दत्तम्। इत्येव मत्प्रश्नाशयः" इति।

यद्ययमेवाशयः प्रश्नस्य तत्रभवतां जिज्ञासुमहोदयानां तर्हि निरस्त, एव यत अध्यै अध्यैनां विधानस्याऽदृष्टार्थता। अन्याऽपि जिज्ञासा समुदेच्चेत् पुनः सूर्योदय द्वारा समुल्लेखनमावश्यकम्–किं पल्लवितेन।

---

# अखिल भारतवर्षीय-संस्कृतसाहित्यसम्मेलनस्य विशेषमधिवेशनम् ।

श्रीमतस्तत्र भवतो वाचकप्रवरानिदं निवेदयन्मदीयं हृदयं नितरां प्रसीदति, यत् श्रीऋषिकुलब्रह्मचर्याश्रमहरिद्वारस्य कर्मचारिणां स्थानीयानां विदुषां चायं निश्चयो यद् हरिद्वारे भविष्यतः कुम्भपर्वणोऽवसरेऽखिलभारतवर्षीय-संस्कृत-साहित्य-सम्मेलनस्य विशेषाधिवेशनं स्यादिति निश्चयमेनमवगत्य को नाम नासादयेदानन्द-संदोहम् । तदर्थमाश्रमे भूयसां विदुषां सान्निध्ये सभा तावदेकाऽजनिष्ट यत्रैवमासी-त्स्वागतसमितेः कार्यकर्तॄणां निर्वाचनम् ।

संरक्षकाः किल १—पं० श्रीगीतारामशास्त्रिणः ( निरुक्त समायाः सभापतयः ) २—पं० श्रीभोलानाथशर्मा ( श्रीऋषिकुलब्रह्मचर्याश्रममन्त्रिणः ) । ३—वेद-तीर्थाः पं० श्रीनरदेवशास्त्रिमहाशयाः । ४—व्याकरण वेदान्ताचार्याः पं० श्रीद्रव्येशझा महोदयाः । ५—व्याकरणाचार्याः पं० श्रीहरिवंशदत्तमिश्र महानुभावाः । ६—व्याकरणाचार्याः पं० श्रीमदुमादत्तशास्त्रि महाभागाः । ७—कविराज श्रीज्ञानेन्द्र-नाथसेन B. A. कविरत्नमहोदयाः, ( ऋ० कु० आयुर्वेद विद्यालय प्रधाना-ध्यापकाः ) स्वागताध्यक्षास्तावत्—पं० श्रीलीलाधरशर्मा शास्त्रि महोदयाः ( श्री-ऋषिकुल ब्रह्मचर्याश्रमाचार्याः ) प्रधानमन्त्रिणः—पं० श्रीपरमानन्दशास्त्रिमहोदयाः साहित्याचार्याः, शिक्षा सम्मेलनस्य मन्त्रिणो वाजपेयि श्री पं० किशोरीलालशास्त्रि महोदयाः, प्राचीन संस्कृतप्रदर्शिनीसम्मेलनस्य मन्त्रिणः पुराणवाचस्पति पं० श्रीचन्द्रभानुशास्त्रिमहोदयाः, सहायकाः श्रीमुकुन्दीलालशास्त्रिणः, कविसम्मेलनस्य मन्त्रिणः साहित्याचार्याः श्रीमदमरचन्द्रवर्माणः ।

एवञ्चास्य सम्मेलनस्य सदस्यानां सामाजिकानां रुचिं संस्कृतायां वाचि जनयितुं संस्कृताभिनयोऽप्येक आयोजितः स्यादयञ्च विशेषाधिवेशनस्य नूनं विशेषः स्यात्, अत्रत्यं कवि-सम्मेलनं छात्र-सम्मेलनमपि च स्वविषये अनुपमे एव स्याताम् । सर्व विधोऽपि यद्यपि प्रयत्नोऽद्य यावदेव समुपक्रान्तोऽस्ति येन श्रीमतां संस्कृतानुरागिणां मनोविनोदः स्यात्, तथापि तत्र भवतां सहयोगोऽपेक्षणीय एव ।

श्रीमतामाश्रयस्य
श्रीपरमानन्दशास्त्रिणो
मन्त्रिणः स्वागतसमित्याः ।



प्राप्तपत्रम्।

## "आदर्श गणितशास्त्रज्ञस्य स्वर्गारोहणम्"

श्यामवासिष्ठस्तदीयोभागिनेयः मयकोटीवास्तव्यः सूचयति—

गढवाल प्रान्तान्तर्गत दशज्यूला नागपुरे कुरुभ्मणग्रामे पौष २८ दिवसे गणितशास्त्रज्ञानां पुरोहितोपाह्व पं० पुरुषोत्तमशर्म्मणां देहावसानं जातम्। ज्योतिषशास्त्रे विशेषतो गणितविषये—एते महोदया अद्वितीया विद्वांस आसन्। जगतीतले सम्प्रति तादृशाः सदाचारपोषका गणितशास्त्रज्ञाः पण्डिता विरला एवोपलभ्यन्ते।

---

## आरा संस्कृतमहाविद्यालये शोक-सभा।

श्रीमन्तो माननीयमहोदयाः प्रातःस्मरणीयगुणस्तोमाः सर्वतन्त्रस्वतन्त्रा भारतरत्नभूताः परमवर्षीयांसो विद्वद्धौरेयाः श्रद्धेयचरणाः पण्डितश्रीकाशीनाथशास्त्रिणो हि नश्वरमिदं शरीरं विहाय कैलाशवासमवापुः काश्यामिति, महतः शोकस्यायमवसरो विद्वज्जगत्सु, एतस्य श्रीमतः शिष्यवर्गेषु सम्प्रति श्रीमन्माननीयमालवीयमहोदयप्रभृतयोऽनेके देशरत्नभूता नेतारो विद्वांसश्च सन्ति। श्रीमानयं चिरकालं यावत् हरिद्वार-गुरुकुलकांगड़ी इत्यभिहितायामार्यसंस्थायाम् प्रधानाध्यापकपदमलंकृत्य संस्कृतभारत्या एवमार्यजगतो गौरवमयं सेवाव्रतं परिपालयामासेति कस्य नाविदितं सचेतसो महत इति। सम्प्रति हि भगवतो विश्वनाथस्य पावनपुरीं काशीमधिवसन्तोऽतीव वर्षीयस्यपि वयस्यध्यापनद्वारा छात्राणामुपकारं विदधानास्ते असारमिमं संसारमपास्य पवित्रं शिवशिवेति नाम स्मरन्तो दिवमवापुरिति महतो भागधेयस्य विजृम्भितं स्पृहणीयञ्च नः सर्वेषाम् तत्पदानुसारिणामिति तदद्य महता शोकभारेणोद्विग्नधियो वयं किमपि वक्तुमशक्नुवन्तस्तदीयनिःश्रेयसाधिगतये भगवन्तं विश्वेश्वरं साञ्जलिबन्धं प्रार्थयामहे यत् पूर्वत एवप्रदत्तस्वात्मभावाय शिवस्वरूपिणे तस्मै भगवान् शाश्वतिकीं शान्तिं प्रदेयादिति। यद्यपि लोके ते सर्वथा पूर्णकामा आसन् तथापि तथाविधस्य विद्यावारिधेश्चिरं वियोगेन सुदुःखितान्तःकरणान् तदीयात्मीयान् तद्वियोगे शोकसंतप्तहृदयाञ्छान्तिप्रदानेन नितरामनुगृह्णातु, इति।

सभापतिः—

रामसकल उपाध्यायः,

संस्कृतमहाविद्यालय प्रधानाध्यापकः।

---

## श्रीमत्परमहंसपरिव्राजकाचार्याणां विद्यादिवाकराणां श्री १०८ मत्स्वामिस्वरूपानन्देति प्रसिद्धानां मण्डलीश्वरपदभाजां ब्रह्मीभावावाप्तिसमये तेषां विद्यालयस्थविद्यार्थिनः शोकोद्गारः ।

हा ! हा ! हता तव दया सकला सुधीश !
नष्टो नु मानमहिमा जगतीतलेऽस्मिन् ।
धर्मप्रभावपरता विगता समस्ता
याते दिवं त्वयि गुरो जनतापहारिन् ॥ १ ॥

सा स्निग्धता सरसता विमला च नित्यं
निष्ठा स्वधर्म इह तत्त्वयुतं रहस्यम् ।
कस्मै पुनर्न भुवि नन्दयिताऽतिमात्रम्,
ब्रह्मैकतान ! गुरुवर्य्य दयासमुद्र ! ॥ २ ॥

मधुरया तव बोधितधर्मया
शुभगिरा गलितं दुरितञ्च नः ।
अघविनाशकरं तव दर्शनं
नयनगोचरमद्य कथं भवेत् ॥ ३ ॥

निधानं धर्माणां कुलभवनमाद्यं गुणजुषां
गतं रत्नं लोकाद्—अहह ! विधिवाञ्छा सफलिता ।
अहो किं नैष्ठुर्य्यं किरसि परितोऽङ्गारतुलितम्
विधे ! हा ! हा ! कष्टं तव खलु चरित्रं विरमतात् ॥ ४ ॥

—स्वामी रामेश्वरानन्दपरिव्राजकः
श्रीपरिव्राजकमहामण्डलस्थः
काशी ।



## स्वामि स्वरूपानन्दमण्डलीश्वराः।

इमे हि महात्मानो गतमाघमासस्य वसन्तपञ्चम्यां तिथौ शनिवासरे नववादने इमं विनश्वरं कलेवरं परिहाय इह काशीधाम्नि विश्वेश्वरतामापन्नाः। देहत्यागकाले एषामायुषोऽवस्था चतुःषष्टिवर्षात्मिका आसीत्। इमे हि स्ववैदुष्येणेह केवलं काश्यामेव न हि किन्तु सर्वत्रैव भारते संन्यासिसम्प्रदाये विद्वत्समाजे च महदुन्नतपदमासादितवन्त आसन्। एतेषां प्रगाढ़पाण्डित्येन सन्तुष्टाः शास्त्रार्थमीमांसया परितुष्टाः पण्डितराजमहामहोपाध्याय पं० शिवकुमारशास्त्रिणः पं० जयदेवमिश्रप्रभृतयः स्वर्गस्था विद्वांस एतेषां शास्त्रज्ञानस्य महतीं प्रशंसां कुर्वन्ति स्म। एतेषां स्वभाव ईदृश आसीद्, येन केऽपि विद्वांसो विचारावसरे एभिः पराजिता अपि एनं प्रशंसन्त एव गच्छन्ति स्म। मण्डलीश्वरपदमधिष्ठाय निरभिमानिन इमे स्वशिष्यवर्गे गृहस्थसमुदाये च धर्मव्याख्यानावसरे धर्मसमन्वयमपि एवं कुर्वन्ति स्म, येन धर्ममर्यादा अपि नापगता भवति स्वलोकव्यवहारेऽपि कापि बाधा न भवति स्म। व्यतीतेऽर्द्धकुम्भपर्वावसरे प्रयागे त्रिवेणीतटे श्रीमता मदनमोहनमालवीयमहोदयेनापि सह धर्मशास्त्रमीमांसावसर आगत आसीत्। तत्रैषां धर्मशास्त्रीय-विचारपद्धत्या तेऽतीव सन्तुष्टा जाता, एषां शास्त्रीयप्रौढ़िन्तेऽतीव प्रशंसितवन्तः। एभिरध्यापिता बहवो विद्वांसो ब्राह्मणाः संन्यासिनश्च विद्यालयमहाविद्यालयेषु अध्यापनं कुर्वन्ति। गृहस्थाश्च महान्तो योग्याः सन्तो धर्मप्रचारादिना लोककल्याणकृत्यमनुतिष्ठन्ति। किम्बहुना सम्प्रति एषां परलोकवासेन संन्यासिमण्डलस्य विशेषतः सनातनधर्मस्य महती हानिः सञ्जाता या अपूरणीया दृश्यते।

एषां वियोगेन सन्तप्ताः काशीस्था विद्वांसो ब्राह्मणाः सन्यासिनो नागरिकाश्च लोकवृत्तमनुरुन्धाना एकत्र समेत्य अपारनाथमठस्थश्रीसंन्यासिपाठशालायां महतीं शोकसभामपि संयोजितवन्तः, यत्र तेषां स्मृतौ सर्वे श्रद्धाञ्जलिसमर्पणं कृतवन्तः, लक्ष्मीकुण्डस्थे श्रीपरिव्राजकमहामण्डले च परिव्राजकोपदेशकानामेका संसत् सञ्जाता। यत्रैषां स्मृतौ श्रद्धाञ्जलिः समर्पितोऽभूत्।

सम्प्रति मण्डलीश्वराणां स्वामिवर्याणान्तेषां स्थाने स्वामिपरमानन्दमहोदया विद्यायां शास्त्रज्ञाने धर्मोपदेशे च परमयोग्या विद्वद्वरेण्या मण्डलीश्वरपदं विभूषयन्ति इति काशीस्थसंन्यासिनां विदुषाञ्च परमसन्तोषो विद्यते।

श्रीशिवकुमारशास्त्री साहित्याचार्य्यो ज्यौतिषशास्त्री व्याख्यानविशारदश्च,

अध्यापकः—नारायणविद्यालयस्य लक्ष्मीकुण्डस्थस्य।

## ग्राहकमहोदयेभ्यो निवेदनम्।

श्रीमन्तः पाठकमहानुभावाः! कठिनेऽस्मिन् धर्मविप्लवसमये सर्वाभ्युदयप्रदस्य सनातनधर्मस्य प्रचारार्थं प्रयतमानोऽयम् "सूर्योदयस्य" भगवतः श्रीविश्वनाथस्य परमानुग्रहेण त्रयोदशं वर्षं शीघ्रं व्यतिगच्छतीति निवेदयतो मेऽत्यन्तं प्रसीदति चेतः। बहुविधविघ्नबाहुल्येन "सूर्योदयः" वर्षेऽस्मिन् ग्राहकमहोदयानां समीपे यथा समयं न प्रेषितोऽभूदिति सक्षमाप्रार्थनम् निवेदितम्। अस्तु, साम्प्रतं अस्य प्रकाशनादिसर्वविधः प्रबन्धोऽन्यस्मिन् मुद्रणालये कृतोऽस्ति। अतः परं चैतस्य प्रकाशनं यथा समयं भविष्यतीति सुदृढोऽस्माकं विश्वासः।

येषां वार्षिकं मूल्यं समाप्तिमगात्। तेऽधुना शीघ्रं धनादेश-(मनिआर्डर) द्वारा स्वकीयं वार्षिकं साहाय्यं प्रेषयन्तु। सनातनधर्मस्य सुरभारत्याश्च कृते किञ्चित् साहाय्यं वितरितुं सनातनधर्मपक्षपातिनो भवन्तः पराङ्मुखा न भविष्यन्तीति अस्माकं विश्वासः। आशास्ति भवन्तोऽस्य साहाय्यं नूनं प्रेषयिष्यन्ति, अथवा वी० पी० द्वारा "सूर्योदयं" प्रेषयितुमादेशपत्रं कार्यालयेऽस्मिन् सम्प्रेष्य स्वकीयं ग्राहकत्वं संरक्षिष्यन्ति। धनादेशपत्रे स्वकीयेन सम्पूर्णसंकेतेन सह 'नवीनोऽहं' ग्राहकः 'प्राचीनो' वा इति सुस्पष्टतया लेखनीयम्।

---

## वाराणसेयराजकीयसंस्कृत-महाविद्यालयीयच्छात्रावासस्थपरिषदोऽधिवेशनम्।

(१८ दिसम्बर १९३८)

इदञ्च लब्धकाशिकानेकख्यातयो न्यायव्याकरणाचार्याः पण्डितवर्याः श्रीशुभकरणशास्त्रिमिश्राः परिभूषयितुमीहमाना अधिकारगणकलापै रनुपस्थिता इति तदीयशिष्यगणानामन्यतमो लब्धव्याकरणाचार्यपदवीकः परिषदो विशेषहितसाधकः पं० श्रीरामकरणपाण्डेयमहोदयः पर्यभूषयत् साभापत्येन। विषयश्च—"संस्कृतभाषाया उन्नतिः कथंकारं सम्भवति" इति।

वक्तारः—१. श्रीराधारमणयाज्ञिकः। २. पं० श्रीवासुदेवोद्विवेदः। ३. पं० श्रीकामाक्षानाथः। ४. पं० श्रीरमापतित्रिपाठी। ५. पं० श्रीकेदारनाथत्रिपाठी।

६. पं० श्रीलक्ष्मीप्रसादशास्त्री। ७. पं० श्रीत्रिलोकीनाथमिश्रः। ८. पं० श्रीमदच्युतानन्दोपाध्यायः। ९. पं० श्रीकेवलानन्दशर्मा "अज्ञेयः"। १०. पं० श्रीरामचन्द्रदासो वैष्णवः। ११. पं० श्रीवदरीनारायणशुक्लः। १२. मंत्री परिषदः। १३. सभापतिश्च।

अत्रैवाधिवेशने परिषदोऽस्या मुखपत्रिकाया "माधव्या" आवश्यकतानुसारं सहायक-सम्पादकस्य कृते श्रीबदरीनारायण शास्त्रिणा प्रस्तावे प्रस्तुते मंत्रिणा समर्थिते सर्वैश्च पारिषद्यैः प्रायसोऽधिकसंख्यामुपगतैरनुमोदिते च प्रधानसम्पादकानां लब्धसाहित्याचार्यपदवीकानां; श्रीद्विजेन्द्रनाथमिश्रशास्त्रिणां निगुर्णोपाभिधेयानां संमत्या चात्र सम्पादककलायां वैचक्षण्यमुपगता बालकवयो न्यायशास्त्रिणः श्रीकेवलानन्दशर्माण एव सुनिश्चिताः। इत आरम्य मासद्वयमेषा परिषन्नाधिवेक्ष्यते सर्वविधपरीक्षाऽऽसत्तेरिति सर्वसम्मत्या सुदृढम्।

इति निवेदयति—
शुक्ल श्रीराजनारायण शास्त्री,
परिषदो मन्त्री।

---

## संस्कृतछात्रसंमेलनम्।

सुषमामश्वन्त्यां विगतवसन्तपञ्चम्यामनन्तसमारम्भेण स्थानीय-नगवासंस्कृतपाठशालीयभव्यभवने सुरसरस्वतीस्नेहिनां समुपस्थितौ संस्कृत-कविसम्मेलनं साफल्येन सम्पन्नम्। सभापतिपदं महामहाध्यापका दर्शनकेशरिणः श्रीगोपालशास्त्रिणः समलंकृतवन्तः। पूर्वं मङ्गलाचरणे जाते श्रीजयदेवपाण्डेय कालिकाप्रसाद त्रिपाठि केशवप्रसादशर्म सत्यदेवद्विवेदि—धनपतिद्विवेदिप्रभृतीनां नवं-नवं-निबन्धपाठोऽभवत्। अनन्तरं च कविसम्मेलनं प्रारब्धम्। समस्या आसीत् (१) वसन्तः (२) सर्वङ्कषा भगवती भवितव्यतैवेति। सभापतीनामाज्ञया निर्णायकपदे सुप्रसिद्धाशुकवयः श्रीमदीशदत्तशास्त्रि 'श्रीश' महोदयाः समासीना अभूवन्। तत्र रामलोचनपाण्डेय—रामदर्शत्रिपाठि—हरिशंकरपाण्डेय—कवलधारीद्विवेदि जनार्दनशुक्ल—प्रभृतयो द्वादशाधिकाः कवयः कवितामपठन्। तेषु रघुवीरशरणमिश्रो निर्णीत प्रथमश्रेण्यां पुरस्कारं प्राप्तवान्। सभापति करकमलन प्रदत्तानि प्रमाणपत्राणि पुरस्कारादीनि च गृहीतानि छात्रैः। सभापतीनां वेदाचार्य गङ्गाप्रकाश ब्रह्मचारिणां च भाषणानन्तरं सभा विसर्जिताऽभूत्।

उमाशंकर शास्त्री विशारदः।

---

## श्यामवासिष्ठ महिमादत्तवासिष्ठः—

### सं० पा० मयकोटी ( गढ़वाल ) सूचयति—

श्री संवत् १९९४ माघकृष्णद्वितीयायां गढवालप्रान्तान्तर्गतनागपुरमण्डले पोल्ला ग्रामे श्री पं० हरिकृष्णशास्त्रिमहोदयस्य जननीवार्षिकश्राद्धे स्वामी सच्चिदानन्दसंस्कृतपाठशालाप्रधानाध्यापक पण्डित हीरावल्लभजी पन्त व्याकरणाचार्य्य महोदयानां सभापतित्वे ग्रामसुधारविषये सभाऽभूत्, यस्यां सभायां बहवो मानवाः सम्मिलिता आसन् । व्याख्यान दातारः क्रमश एते महानुभावाः—

पं० श्यामादत्तवासिष्ठ शास्त्री । पं० रविदत्त शर्म्मा ज्यौतिष शास्त्री । पं० रविदत्त सेमवालशास्त्री । पं० मित्रानन्द शास्त्री । पं० घनश्यामशर्मवासिष्ठः ।

अन्ते सभापतिमहोदयानां सारयुक्त सुमनोहरं विशदं व्याख्यानं ग्रामसुधारविषयेऽभूत्, ततः शान्त्या सभाविसर्जनं जातमिति शम् ।

---

## हरिद्वारे कुम्भमहापर्वसमयः ।

विदितमस्तु सनातनधर्मावलम्बिमहानुभावानां यत् मेषराशौ यदा सूर्यः संक्रामति, कुम्भराशौ च बृहस्पतिः तिष्ठति तदा हरिद्वारे कुम्भमहापर्वयोगो लगति । सौभाग्यवशतो योगोऽयं चैत्रशुक्लचतुर्दश्यां बुधवासरे ( वैक्रमाब्दे १९९५ ) तदनुसारतः अप्रेलमासस्य त्रयोदशदिने ( १३ अप्रेल १९३८ ई० ) मध्याह्नोत्तरं चतुर्वादनात् परं भवति । गङ्गास्नानार्थं साधारणपुण्यकालः प्रातर्दशवादनान्तरं विशेष पुण्यकालश्च द्वादशवादनान्तरं ( १२-३६ ) जायते । अस्मिन् शुभावसरे भारतीयाः सर्वे स्नानार्थमागत्य पुण्यसञ्चयं कुर्वन्त्विति ।

योगीन्द्र झा वेदव्याकरणाचार्यः,
ऋषिकुल ब्रह्मचर्याश्रम, हरद्वार ।

---

## पत्रिकापरिचयः ।

'विदुषी' इयं हिन्दीभाषामयी मासिकी पत्रिका । अस्याः सम्पादिका रत्नेश्वरी अग्रवाल, लक्ष्मी पाण्डेय, कुसुमलताश्च सन्ति । अस्यां विदुषीनां महिलानामेव लेखाः प्रकाश्यन्ते । प्रकाशिताः प्रबन्धाः पठनीयाः स्त्रीसमाजोपयोगिनो दृश्यन्ते । विदुष्याः सर्वविधां समुन्नतिं कामयामहे । मुद्रणादिकमन्यच्च सर्वं रमणीयं विद्यते । परन्तु 'विदुषी' अस्मत् कार्यालये प्रतिमासं नागच्छति । वार्षिकं मूल्यं १) एक रुप्यकमात्रम्, प्राप्तिस्थानम्—प्रकाशिका 'विदुषी' कार्यालय, बनारससिटी ।

× × × ×

## संगृहीत समाचाराः

हिलसा ( पटना ) नगरस्य श्री मु० दे० संस्कृतविद्यालयस्थ—संस्कृतछात्रसमिते स्त्रयोदशवार्षिकोत्सवः पं० ईश्वरीदत्तदौर्गादत्तिशास्त्रिणां एम० ए० एम० ओ० एल० ( सेक्रेटरी विहारसंस्कृतएशोसियन ) महोदयानां सभापतित्वे फाल्गुनकृष्णषष्ठ्यां रविवासरे महता समारोहेण सम्पन्नः । स्वागताध्यक्षेण श्रीकृष्णचन्द्रजी अग्रवालमहोदयेन—हिलसा नगरमपि पूर्वं विद्यापीठमासीदिति संसाधितम् । अन्यविदुषां भाषणान्ते विद्यालयस्य छात्रावासस्य पुस्तकालयस्य च समुन्नतये प्रस्तावाः स्वीकृताः । अस्य च पूर्तये स्थानीय उदारचेता भूस्वामी श्रीरामबाबू बेंकर महोदयः २५००० रूप्यकाणां वृहतो भूभागस्य च दानस्य प्रतिज्ञातवान् । सभापति महोदयैरपि शिक्षाविभागतः २५००० रूप्यकाणां साहाय्यं कर्तुं वचनं दत्तम् ।

× × × ×

गतमार्चमासस्य ५, ६, तारिकायां मेरठनगरे मेरठमण्डलीयसनातनधर्मसम्मेलनस्याऽभूतपूर्वमधिवेशनं श्री वैजनाथजी वाजोरिया एम० एल० ए० महाशयानां साभापत्ये सुसम्पन्नम् । सम्मेलनस्योद्घाटनं राजा सर वासुदेव कोलेंगोड के० टी० सी० आई० ई० एम० एल० ए० महोदयेन कृतम् । सम्मेलने समागतेषु सुप्रसिद्धो राष्ट्रियनेता श्रीमाधव हरि अणे एम० एल० ए०, पण्डितप्रवरा श्री देवनायकाचार्या, व्याख्यानकेशरी पं० कल्पनाथजी शर्मा चेत्यादीनां नामानि लेखनीयानि सन्ति ।

× × × ×

गतमार्चमासस्य १—२—३ तारिकायां मेरठनगरे स्थानीयसनातनधर्मरक्षिण्याः सभायाः, श्रीसनातनधर्मधर्मार्थौषधालयस्य, श्रीनृसिंहपुस्तकालयस्य च सम्मिलितं ५४ तमं वार्षिकं महाधिवेशनं जातम् । वहिर्देशतः कीर्तनकलानिधिः श्रीरामचन्द्रशर्मा, पं० मोहनलालजी अग्निहोत्री, पण्डितप्रवराः श्रीदेवनायकाचार्याः पं० गोविन्द्रचन्द्र बी० ए० चेत्यादयो व्याख्यातारः सम्मिलिता आसन् ।

× × × ×

श्रूयते श्री इन्दौरमहाराजो राजायत्तमन्दिरेषु चाण्डालादीनां प्रवेशाय घोषणां कारितवान् । तत्प्रतीकाराय सम्प्रति इन्दौरनगरे स्थले स्थले सभां विधाय विरोधप्रस्तावाः स्वीक्रियन्ते, जनतायां महानसन्तोषो वर्तते । चाण्डाला अपि मन्दिरेषु गमनं धर्मविरुद्धाचरणं मन्यन्ते । कतिपयदिवसपर्यन्तं आपणे हट्टताल आसीत् । विरोधि-सम्मेलन—समुत्साहेनाऽऽशास्यते यत् शीघ्रमेवेयं राजाज्ञा परावर्तनीया भविष्यति । जगदीश्वरो महाराज्ञे शुभां मतिं वितरतु ।

× × × ×

गतमार्चमासस्य २३ तारिकायां रात्रौ ८॥ वादनावसरे पटियालानरेशस्य यदुवंशावतंश श्री भूपेन्द्रसिंहजी महाराजबहादुरस्य देहावसानं जातम्। इमे सनातनधर्मस्य परमानुरागिणः प्रधानसंरक्षकाश्चासन्। अनेन मर्मभेदिना समाचारेण सनातनधर्मसंसारो नितरां दुःखितो वर्तते।

× × × ×

गत होलिकाया मुहर्रमस्य चावसरे संयुक्तप्रान्ते अनेकस्थानेषु च हिन्दुयवनयोः कलहो जातः। तत्र काश्याः प्रयागस्य जब्बलपुरस्य च कलहो नितरामुग्र आसीत्। काश्यां १० मृताः, ६३ आहताः, २०० निगृहीताः सन्ति।

× × × ×

सम्प्रति भारतीय नवीनशासनविधानानुसारेण प्रतिप्रान्तं मतदातॄणां स्थानानाञ्च संख्या निम्नलिखिताङ्कानुसारेण वर्तते—

| प्रान्ते | मतदातॄणां संख्या | सदस्यस्थानम् ( सीट ) |
|---|---|---|
| बङ्गाले | ६३ लक्षाणि | २५० |
| बम्बई प्रान्ते | २७ ,, | १७२ |
| मद्रासे | ५६ ,, | २१५ |
| मध्यप्रान्ते | १६ ,, | ११२ |
| संयुक्तप्रान्ते | ५५ ,, | २२८ |
| सीमाप्रान्ते | ३ ,, | ५० |
| विहारे | २४ ,, | १५३ |
| उड़ीसाप्रान्ते | ५ ,, | ६० |
| आसामे | ७ ,, | १०८ |
| सिन्धे — | ६॥ ,, | ६० |
| पञ्जाब प्रान्ते | २७ ,, | १७५ |
| | २८९॥ | १५२५ |

गतफरवरीमासस्य २०, २१ तारिकायां काश्यां आर्यमहिलामहाविद्यालयस्य वार्षिकोत्सवसमारोहः समजायत। प्रथमदिने श्रीमान् काशीनरेशो द्वितीयस्मिन् दिने मिस एम० एच० हुसेन ( पी० ए० टू दी चीफ इन्स्पेक्टर्स यू० पी० ) सभापतिपदमलञ्चक्रतुः। बालिकाभिः परस्परं वाग्विवादः कुणालनाटकस्याभिनयश्च कृतः। श्रीकाशीनरेशमहोदयः स्वकरकमलाभ्यां पारितोषिकवितरणं विहितवान्। समारोहः श्लाघनीय आसीत्।

× × × ×

निकुञ्जे तत्सङ्गप्रणयिनि चिरं मे स्थितवतो
न चासौ मूर्द्धोर्द्ध्वं कथमपि समारोढुमशकत् ॥१७॥

सुबलः—( स्वगतम् ) प्रकृतिगम्भीरोऽप्ययमसम्बद्धमिव ब्रवीति तदेनं प्रबोधयामि—( प्रकाशम् ) सखे प्रियतमामुखेन्दुनिबद्धदृष्टिना त्वया न लक्षिता शशाङ्कस्य तदानीन्तनी गगनमध्यस्थितिः, वास्तवः पुनरयमेव गतिप्रकारः ।

श्रीकृष्णः—( सोपालम्भम् ) विलुप्यमानस्मृतेः प्रवर्द्धमानदुःखातिरेकस्य मे प्रलपिते किं विचारितेन, विचारणीयः पुनः प्रियतमायास्तावदिहानागमनहेतुः ।

सुबलः—( सवैलक्ष्यम् ) सत्यमिदम्, किन्तु मूढा वयं सर्वत्र त्वामेव विचारकं जानीमः ।

श्रीकृष्णः—ममायं वितर्कः ।

किं मह्यं कुपिता खलस्य वचनात् प्राणाधिका राधिका
रुद्धा वा गुरुभिर्निषेधवचनातिक्रान्तिरोषोद्धतैः ।
किं वा मन्मथबाणखिन्नहृदया मूर्च्छाभिरापीड्यते
नातश्चिन्तयितुं क्षमे प्रियतमा प्राप्नोति कां वा दशाम् ॥१८॥

---

पूर्वपत्रे गतस्य षोडशसंख्यकस्य 'हा ज्योत्स्ने 'इत्यादि श्लोकस्यार्थः । विरहिणां ज्योत्स्नादयो मदनोद्दीपका दुःखप्रदा भवन्तीति वर्णयति—

हा खेदे, हे ज्योत्स्ने त्वं गरलैः कवलीकृतासि विषैर्ग्रस्तासि विषैर्व्याप्तासीत्यर्थः कथमन्यथा विषवद् दुःखप्रदा भवेरिति भावः । हे वंशकृत् आदिपुरुष चन्द्रमः, चन्द्र, गोत्रं पर्वतं ( उदयाचलं सुमेरुं वा ) भेत्तुं विदारयितुं शीलमस्य तादृशो यो दहनः सुमेरौ उदयाचले उत्पन्नो यो दावानलः, स गोत्रभेदिदहनः कर्म्मधारयसमासात्, वातेरितः पवनोत्क्षिप्तः यो गोत्रभेदिदहनः तस्य आसत्त्या योगेन एवम् = अविषह्यम् यथा स्यात् तथा उष्मायसे उष्माणं तापमुद्वमसि कथमन्यथा स्वभाव-शीतलस्य स्ववंशजातं प्रति विशेषेणोचितस्निग्धभावस्य कथमेवं तापप्रदत्वं स्यादिति भावः । अथ च अद्य वैशाखी पूर्णिमा, अस्यां ते वातेरितगोत्रभेदिदहनासत्ति र्युक्तैव, विशाखानक्षत्रस्य पूर्णिमासम्बन्धादेव मासस्यास्य वैशाखसंज्ञा, विशाखानक्षत्रं स्वातीनक्षत्रादव्यवहितोत्तरम्, स्वातीनक्षत्रस्याधिदेवः पवनः, विशाखानक्षत्राधिदेवौ शक्राग्नी, शक्राग्निबोधकश्चात्र गोत्रभेदिदहनशब्दः, गोत्रभेदी गोत्रभित् शक्रः दहनः अग्निः तयोरासत्त्या सन्निधानेन, उष्मायमाणत्वस्यावश्यम्भावः ।

चन्द्रमाः स्वातीनक्षत्रं परित्यज्य अद्य विशाखानक्षत्रे तिष्ठति, तेन स्वातीनक्षत्राधिदेवेन ईरितस्य शक्राग्नेः सम्बन्धो विशाखासु जातः, इन्द्रस्य गोत्रभित्त्वं प्रसिद्धं तत्सङ्गात् त्वं स्वगोत्रं मां भिनत्सि, दहनयोगेन च मां—दहसीति व्यङ्गः । वंशीं निन्दति—श्रीराधामोहनहेतुतया तद्विरहे तस्याः दुःखप्रदत्वात् । भुजगीभूता, पूर्वं तस्या भुजगीत्वं नासीत् अद्य तथाभाव इति च्विप्रत्ययः ॥ १६ ॥

( विचिन्त्य सोन्मादमिव )

नो मह्यं कुपिता कदाप्यजनि सा दूरे निकुञ्जस्थलाद्
रोधे वानुचरीमुखान्ननु मया वार्तेयमज्ञास्यत ।
आशाबन्धनवर्म्मणा हृदि तया स्मारः शरः सह्यते
भ्रातः किन्तु विचारितैःपरमतो नूनं न सा जीवति ॥१९॥

( इति मूर्च्छति )

सुबलः—( सास्रं पल्लववातेन बीजयन् ) वृन्दावनजीवन, समाश्वसिहि ।

श्रीकृष्णः—( संज्ञां लब्ध्वा ) सखे दिष्ट्या वर्द्धसे ।

पुंस्कोकिलाः कुनिनदैः कुलिशं क्षिपन्ति
व्यालीविषस्वशितमस्यति गन्धवाहः ।
कृन्तन्ति मर्म्म कुसुमान्यलिरावशस्त्रै-
र्दुःखावसानमचिरान्मरणादुपैमि ॥२०॥

सुबलः—( श्रुतिमभिनीय सहर्षम् ) शान्तं पापम्,
दुःखावसानमचिराद्रमणादुपैहि ।

श्रीकृष्णः—( सखेदम् ) सखे, कृतमिदानीमलीकाशंसया ।

सुबलः—सखे प्रियं ते कथयामि नेयमलीकाशंसा, यतस्त्वदुक्तिप्रमाणकः खल्वहम्—

कोकिलकाकलिमिलितादलिकुलचलितादवैमि राधायाः ।
अचिरोदयमुदयाद्रेरारुणरागादिवार्कस्य ॥ २१ ॥

श्रीकृष्णः—( निपुणं निरूप्य सहर्षम ) हन्तोज्जीवितोऽस्मि निमित्तं समुन्नयता वयस्येन ।

यस्यां पिकावलिरुपस्कुरुते कलानां
पुष्पाण्यपास्य भजतेऽलिकुलं दिशं ताम् ।
पापाभिशङ्कि हृदयन्तु मम प्रियायाः
सञ्चारलक्ष्मणि ददाविह नावधानम् ॥२२॥

( नेपथ्ये )

( शुष्कपत्रमर्दनध्वनिः )

श्रीकृष्णः—( श्रुतिमभिनीय ) पदशब्दमिव शृणोमि ।

सुबलः—तत् ससखीजनया श्रीराधया भवितव्यम् ।

श्रीकृष्णः—( निरूप्य ) प्रियतमासञ्चारचिह्नविपरीतदिशो घनतमालतरुतलादयं शब्दः ।

सुबलः—( श्रुतिमभिनीय ) सत्यमाह भवान् ।

( ततः प्रविशतः पुरुषौ )

एकः—न दिट्ठो कह्णो ण राअकण्णा ण वा से सहिओ ता पडिणिउत्तम्ह । ( न दृष्टः कृष्णो न राजकन्या न वा अस्याः सख्यः तत् प्रतिनिवर्त्तावहे )

द्वितीयः—भागुरे ! कथमेवं चपलायसे ।

भागुरिः—देवअ रत्ती अधिआ जादा कंपदि मे हिअअं णिम्मानुसे इध ट्ठादुं अदो भणीअदि पडिणिउत्तह्मत्ति ।

( देवक रात्रिरधिका जाता, कम्पते मे हृदयम् निर्मानुषे इह स्थातुम् । अतो भण्यते प्रतिनिवर्त्तावहे इति )

देवकः—धनदात्र्यै कुटिलायै किं निवेदयिष्यसि ?

भागुरिः—अदंसणं ( अदर्शनम् । )

देवकः—न विश्वसिष्यति ।

सुबलः—सखे, इतः पुरस्तात् तरुच्छायायां कौचित् पुरुषौ दृश्येते, तद्यावदेतौ परीक्षिष्ये प्रलम्ब इव वा नवेति ( इति वृक्षान्तरितस्तिष्ठति )

भागुरिः—ता किं करेह्म ( तत् किं कुर्व्वः ) ।

देवकः—कुञ्जपर्य्यन्तं गत्वा पुनर्विचित्य कुटिलायै यथाभूतमर्थं निवेदयावः ।

सुबलः—अहो कुटिलाप्रेषिताविमावपसर्पौ । तद् यावदिमौ भीषये इति वृक्षान्तरालात् क्षुद्रलोष्ट्रं वर्षति ।

भागुरिः—( सशङ्कं दृष्ट्या सर्वतो निरीक्ष्य ) देवअ पेक्ख अमाणुसी लोट्ठविट्ठी । जइ ते ण भअं ता तुमं चिट्ठ अहं पुण पलाअणेण पिअदरं जीविदं रक्खिस्सं । ( इति पलायते )

( देवक पश्य, अमानुषी लोष्ट्रवृष्टिः, यदि ते न भयं तत् त्वं तिष्ठ, अहं पुनः पलायनेन प्रियतरं जीवितं रक्षिष्यामि ) ।

सुबलः—पुनः लोष्ट्रं वर्षति ।

देवकः—द्वावेवावां कुटिलायाः पुरोहितसम्बन्धिनौ तुल्योपायनौ च तद् यद्येकः पलायितो भागुरिः, कथमहं भूताद्वा मानुषाद्वा निग्रहमधिगन्तुं तिष्ठामि । भो भागुरे अहमपि त्वामनुसरामि । ( इति धावति । )

सुबलः—( सहास्यमुपसृत्य ) कुटिलाप्रेषितौ पुरुषौ तदनुसन्धानायागतौ, तयोरेकस्तु मदीयलोष्ट्रक्षेपाद् भूतभिया पलायितोऽन्योऽपि तमनुसृतः ।

श्रीकृष्णः—तदयं नवः कश्चित् प्रबन्धः ।

सुबलः—बाढम् , अत एव श्रीराधायाः प्रत्युद्गमनमधुनैव विचिन्वतापि त्वया विधेयम् ।

नेपथ्ये—हला तुवर तुवर, 'देव्वविडंविदाए दुक्खभाइणीए इमाए किदे अणुहोदि दुक्खाइं पाणणाहो' त्ति भट्टिदारिआ तुवरावेदि ।

( सखि त्वरस्व त्वरस्व दैवविडम्बितायाः दुःखभागिन्या अस्याः कृते अनुभवति दुःखानि प्राणनाथ इति भर्तृदारिका त्वरयति ) ।

श्रीकृष्णः—( सहर्षम् ) वृन्दायाः स्वरोऽयम् । महतो गुल्मप्रतानस्य दक्षिणेन श्रूयते । ऽयध्वश्चायम् ।

सुबलः—तदलं विलम्ब्य, आमन्त्रये त्वां प्रातर्दर्शनाय ।

श्रीकृष्णः—( सुबलं गाढमालिङ्ग्य ) किमत्र ब्रवीमि—यतः ।

विश्वासस्थलमुभयं स्वहृत् सुहृच्चेति विश्रुतं लोके ।
समुचितकृत्यनियोगे सुहृदेव परं विशिष्यतेऽन्यस्मात् ॥

( इति निष्क्रान्तौ )

इति प्रथमोऽङ्कः ।

---

## द्वितीयोऽङ्कः ।

ततः प्रविशत्येकतः श्रीकृष्णोऽपरतश्च भृङ्गारकरण्डकादिहस्तवृन्दाललितादिसखीजनसहिता श्रीराधा ।

श्रीकृष्णः—आश्चर्यम् !

वृन्दास्वरेण दयितागममत्र बुद्ध्वा
प्रत्युद्गमाय तरसा वनमागतोऽस्मि ।
तद्दर्शनन्तु न लभे न च तत्सखीनां
वाचं शृणोमि, किमियं मृगतृष्णिकैव ॥ १ ॥

( निरूप्य )

भ्रमति मधुकरावली समन्तात् सुरभितदंगसमीरणानुबद्धा ।
भवति कलरवश्च कोकिलानामिह न च सा, तदिदं किमिन्द्रजालम् ॥ २ ॥

भवतु वा सर्वमेव तावदिदमुत्कलिकाकुलस्य मे भ्रान्तिविजृम्भितम् । कथं सुबलोऽपि भ्रान्तो जातः ? ( इत्युन्मनीभूय इतस्ततो मृग्यति )

श्रीराधा—देव्वविडंविदाए दुक्खभाइणीए इमाए किदे अणुहोदि दुक्खाइं पाणणाहो जदो वंसिरवो वि ण सुणीअदि ता तुरीअदु तुरीअदु ।

[ दैवविडम्बितायाः दुःखभागिन्या अस्याः कृते अनुभवति दुःखानि प्राणनाथो यतो वंशीरवोऽपि न श्रूयते तत् त्वर्यताम् त्वर्यताम्। ]

श्रीकृष्णः—( श्रुतिमभिनीय )

दक्षिणेन घनलतागुल्मप्रतानमिदानीं वामास्वर इव श्रूयते, यावदनुसरामि ।

( इति परिक्रामति )

ललिता—( सहर्षम् ) भट्टिदारिए अअं कुंजो । ( भर्तृदारिके, अयं कुञ्जः । )

वृन्दा—णहि णहि; जइवि दाणीं दिसं ण अभिआणामि तहवि दढं भणामि ण दाव अअं कुंजो ।

( नहि, नहि; यद्यपि इदानीं दिशं न अभिजानामि, तथापि दृढं भणामि न तावत् अयं कुञ्जः । )

ललिता—अंतिए कधं एव्वं दे पच्चओ ? ( अन्तिके, कथं एवं ते प्रत्ययः ? )

वृन्दा—जादे जाणामि इध दुवे ज्जेव कुंजे संझाए दीविआहिं सज्जिदे । एसो हि णिप्पदीवो लदागुल्मप्पदाणो इदो वामदो जो अह्मेहिं पेक्खिदो ?

( वत्से, यतो जानामि इह द्वावेव कुञ्जौ सन्ध्यायां दीपिकाभिः सज्जितौ । एष हि निष्प्रदीपो लतागुल्मप्रतानः इतो वामतो योऽस्माभिः प्रेक्षितः । )

श्रीकृष्णः—( निरूप्य सहर्षम् ) अहो ! नास्माकं भ्रान्तिः इन्द्रजालं वा, दिङ्मूढा खलु ससखीजना मे प्रियतमा चिरमिहैव भ्राम्यतीति मन्ये । विचिन्त्य—

व्यासंगमार्गभेदादिदोषात् कृतधियामपि ।
दिने भवति दिग्भ्रान्तिर्देशेऽपि बहुशो गते ॥ ३ ॥

किमुत अनतिक्रान्तपूर्वे भूभागे निशीथे गोपिकानाम् । तदहमलक्षित एवैताभिः उपस्थास्ये ।

( इति पुनः परिक्रम्यावलोक्य )

अहो वनोद्देशपरिप्लाविनी रजत नदीपूरायमाणा कौमुदी ! इतः पूर्वमियं हि—

उद्वेगमेघपटलावृतचक्षुषो मे
नैवं स्मरेषुविधुरस्य मुदे दिदीपे ।
अस्मिन् क्षणे तु सुदिनभ्रममर्पयन्ती
किं प्रेयसीतनुरुचोज्ज्वलिता चकास्ति ॥ ४ ॥

तदस्मिन् शाखाच्छायान्धकारे तिष्ठन्नवसरं प्रतिपालयामि ।

( इति तिष्ठति )

श्रीराधा—( सविषादम् ) ण दीसदि कुंजो ण सुणीअदि बंसीरवो ता आणामि उम्मूला अह्माणं आसालदा ।

( न दृश्यते कुञ्जः, न श्रूयते वंशीरवः तत् जानामि उन्मूला अस्माकं आशालता । )

श्रीकृष्णः—( स्वगतम् ) अहो, विषादसागरमग्नेव प्रेयसी दृश्यते, तत् किमुपसर्पामि ? ( इत्येकपदेनाग्रमुपसर्पन् )

हृदय ! अलमावेगेन, क्षमस्व क्षणम् । ( निवृत्य )

खेदोक्तिरेषा प्रेयस्याः पीडयन्त्यपि मे श्रुतिम् ।
अन्तः पुलकमाधत्ते माने पादाहतिर्यथा ॥ ५ ॥

तदेतस्याः सद्यः समुद्धरणहेतुं वंशीं परित्यज्य नितरामपराद्धोऽस्मि ।

वृन्दा—भट्टिदारिए विबहलहुलंहणेण कादरासि क्खणं इध वीसम, जाव आहिंडिअ अहं कुंजमंडवं सामसुंदरं अ पेक्खामि ।

( भर्तृदारिके, विपथलघुलङ्घनेन कातरासि क्षणमिह विश्राम्य यावदाहिण्ड्य अहं कुञ्जमण्डपं श्यामसुन्दरं च पश्यामि । )

श्रीराधा—( सनिश्वासम ) हला सरेण दे आणामि तुमं वि णिरासा जादा । जं होदु तुमं उज्झिअ ण चिट्ठिस्सम् ता देहि मे हत्थावलंवं तुए सह अहं वि गमिस्सम् ।

( सखि, स्वरेण ते जानामि त्वमपि निराशा जाता । यद् भवतु त्वामुज्झित्वा न स्थास्यामि तद् देहि मे हस्तावलम्बं त्वया सह अहमपि गमिष्यामि । )

श्रीकृष्णः—( स्वगतम् ) तदयमवसरः । ( इत्युपसृत्य ) प्रिये !

किं ते न दातुमलमस्मि करावलम्बं
वृन्दां यदाश्रयसि मय्यत्रतिष्ठमाने ।
फुल्लच्छिरीषकुसुमोपमकोमलाङ्गि !
तोत्राङ्कितान् मम करादथवा बिभेषि ॥ ६ ॥

श्रीराधा—( सहर्षोत्कम्पम् ) अम्ह अज्ज उत्तो ! ( अहो आर्यपुत्रः ( इत्यर्द्धोक्ते मूर्च्छति )

वृन्दा—( पतन्तीं तामालम्ब्य शनैरङ्के शाययित्वा सखेदम् ) अम्हो किंण्णेदम् ? भट्टिदारिए समस्ससस । ( अहो किन्नु एतत ! भर्तृदारिके समाश्वसिहि ) ( सर्वाः सख्यः परिचरन्ति )

श्रीकृष्णः—( सावेगम् आसन्नतरीभूय ) सखि वृन्दे !

किं श्रान्त्या गुरुभिः कदर्थिततया दुःखातिरेकेणवा,
किं वा दुर्जनसाध्वसेन विधुरा किं सौकुमार्य्येण वा ।
दुःसञ्चारवनस्थलीविलमिलद्व्यालेन दष्टाथवा,
निष्पन्दश्लथवन्धनाङ्गविकला सद्यः कथं मे प्रिया ॥ ७ ॥

वृन्दा—सामसुन्दर तुम्ह अदक्किददंसनसुहातिरेकेण सुउमारी भट्टिदारिआ मोहं गदत्ति तक्केमि । ( श्यामसुन्दर ! तव अतर्कितदर्शनसुखातिरेकेण सुकुमारी भर्तृदारिका मोहं गतेति तर्कये )

श्रीकृष्णः—( सविषादम् ) सखि किमिदं ब्रवीषि किं न स्मरसि बहुशोऽतर्कित-दर्शनं मे लब्धमनया प्रमोदपुलकपूर्णया ।

वृन्दा—साम सुन्दर,—

एक्क विहं जइवि सुहं तइवि विभिज्जइ दसाविसेसादो ।
रित्तं जुत्तं अमिदं एव्वं पानं अ भोअनं होदि ॥ ८ ॥

अज्ज तुह दंसणेण जं से अमिदं सुहं तस्स वेअं धारइदुं असक्कं खु भट्टिदारिआए हिअअं ।

[ श्याम सुन्दर !—एकविधं यद्यपि सुखं तथापि विभिद्यते दशाविशेषेण ।
रिक्तं युक्तं अमितं एवं पानञ्च भोजनं भवति ।।]

अद्य तव दर्शनेन यदस्या अमितं सुखं तस्य वेगं धारयितुं अशक्तं खलु भर्तृदारिकाया हृदयम् । ]

श्रीकृष्णः—अद्य दशा वैशिष्ट्यं तु न सम्प्रधारयामि ।

वृन्दा—साम सुन्दर, अज्ज अम्हाणं दे दंसणं णरए पडंताणं सग्गगमणं लद्धमिच्चुदण्डाणं रज्जलाहो णिच्चिदविसपाणाणं अमिअ सेवणं अ ।

( श्यामसुन्दर, अद्य अस्माकं ते दर्शनं नरके पततां स्वर्गगमनं लब्धमृत्यु-दण्डानां राज्यलाभः निश्चितविषपानानां अमृतसेवनञ्च)

श्रीकृष्णः—( श्रीराधामुखवद्धदृष्टिः ) यद्येवं तदुपलब्धये सत्यपि मे महत्यौत्सुक्ये सम्प्रति तिष्ठतु कथान्तरं यदद्यापि नोच्छ्वसिति मे प्रियतमा ।

ललिता—( श्रीराधाया मुखनयने जलं सिञ्चति ) हद्धी हद्धी, साअरं उत्तरिअ रअणद्दीवुच्छंगे मग्गो अम्हाणं पोदो । ( इति रोदिति )

( हा धिक् हा धिक्, सागरमुत्तीर्य रत्नद्वीपोत्संगे मग्नोऽस्माकम् पोतः )

वृन्दा—जादे अलं परिदेविदेण पच्चक्खे सामसुंदरे को अम्हाणं उव्वेओ । पेक्ख आसण्णचेदणा भट्टिदारिआ ।

( वत्से, अलं परिदेवितेन, प्रत्यक्षे श्यामसुन्दरे कोऽस्माकम् उद्वेगः, पश्य आसन्नचेतना भर्तृदारिका । )

श्रीकृष्णः—( निर्वर्ण्य सहर्षम् ) सम्यगुपलक्षितं भवत्या—

चलति निविडकृष्णं पक्ष्मवक्राग्रमेतत्
किसलयकमनीयः कम्पते किञ्चिदोष्ठः ।
स्फुरितमृदुलनासा दीर्घनिश्वासमेषा
त्यजति नलिननेत्रा नेत्रयो मुंद्रणञ्च ॥ ९ ॥

श्रीराधा—( चक्षुरुन्मील्य ) कहिं मे अज्जउत्तो। ( कुत्र मे आर्यपुत्रः )

श्रीकृष्णः—प्रिये !

एषोऽस्मि ते कमलिनि प्रसभोपजात—
मूर्च्छानिपीडनविलोकनजातखेदात्।
त्वन्मुग्धकायलतिकाहितसाश्रुदृष्टिः
सुस्थोऽधुना तव वचोऽमृतबिन्दुपानात् ॥१०॥

श्रीराधा—( सहर्षम् ) सच्चं तुमं सि ( इत्युत्थातुमिच्छति ) [ सत्यं त्वमसि ]

श्रीकृष्णः—प्रिये, अलमिदानीमायासेन, क्षणं विश्राम्य। यतः—

संत्यज्यमानमूर्च्छापि वैकल्यं प्रतिपद्यसे।
मुच्यमाना तमोग्रासाद् यथा चान्द्रमसी तनुः ॥ ११ ॥

श्रीराधा—अज्जउत्त—[ आर्यपुत्र ]

वृन्दा—भट्टिदारिए [ इति संकेतं ग्राहयति ] ( भर्तृदारिके )

श्रीराधा—( स्वगतम् ) अज्जउत्त त्ति भाषणं विंदाए सदसो पडिसिद्धम्। तदवि मुहादो एदं ब्बेब पदं झत्ति णीसरइ ता होदु हिदआरिणीए ताए वअणं पालइस्सम् जइ पुणो वि णविसुमरिदं भवे। ( प्रकाशम् ) पाणणाह ण क्खु अहं विअला लहुं जेव कुंज मंडवं एमि।

( आर्यपुत्र इति भाषणं वृन्दया शतशः प्रतिषिद्धम्। तदपि मुखात् इदमेव पदं झटिति निःसरति; तद्भवतु हितकारिण्यास्तस्याः वचनं पालयिष्यामि यदि पुनरपि न विस्मृतं भवेत्। प्राणनाथ, न खलु अहं विकला लघु एव कुञ्जमण्डपं एमि )

श्रीकृष्णः—( स्वगतम् ) अहो मधुरं सम्बोधनम्। वृन्दा खलु वृन्दावनलीलायाः प्रधानं सहायः। ( प्रकाशम् ) यदि नाम त्वं मुक्तवैकल्यासि, तथापि—

क्लान्तं दुरध्वगमनेन तवाङ्घ्रियुग्मं
मातङ्गकर्कशकराहतपंकजाभम्।
संवाहयन् मृदुकराग्रविवर्तनेन
स्वीयाधिकारसदृशाचरणोद्यतोऽस्मि ॥ १२ ॥

तदुद्यमपूरणनुज्ञाप्रसादेन कृतार्थीक्रियतामयं सेवकजनः।

श्रीराधा—माक्खु, माक्खु एदम्। ( मा खलु मा खलु एतत् )

( इति पादौ संकोचयति )

श्रीकृष्णः—सखि वृन्दे कल्याणीयं रजनी। तथाहि—

प्रतिकूलमाचरन्त्या कृतमनुकूलंससम्भ्रमभ्रान्त्या।
संकुचितं खलु चरणं मम करलभ्यं विनायासात् ॥ १३ ॥

( इति पादं करेण परामृशन् )

अहो—

चरणयुगलमार्द्रम्—

( विलोक्य सचकितम् )

—हा स्रवद्रक्तधारम् !!

श्रीराधा—( सत्वरमुपविश्य ) णहि णहि अलत्तअधारा भवे। [ नहि नहि, अलक्तकधारा भवेत् ]

श्रीकृष्णः—( तलं परामृश्य विलोक्य च )

निशितकुशशिखाभिर्विद्धमेतत् तलञ्च।

( गात्रं परामृश्य—विलोक्य च )

चितमपि मृदु गात्रं कण्टकाग्रैर्विलग्नैः

धिगुपलहृदयं मे दीर्यते यन्न सद्यः ॥ १४ ॥

श्रीराधा—( स्वगतम् ) किं पुलआइं मे कण्टआइं कधेदि पाणणाहो। ( प्रकाशम् )। पाणणाह अवि णाम सच्चं एदम्। [ किं पुलकानि मे कण्टकानि कथयति प्राणनाथः। प्राणनाथ, अपि नाम सत्यमेतत् ]

श्रीकृष्णः—मदेकविन्यस्तहृदये कृतं प्रश्नेन—

अलिमलिनमदङ्के लोचनं लीनमेतत्

क्षणमपि निजदेहे सावधाना निधेहि ॥

ध्रुवमनुभवितासि प्रेमपीयूषसेको-

चित-कनकलतायां शोकशूकोपघातम् ॥ १५ ॥

श्रीराधा—( विलोक्य ) अत्थि किंपि, ता जइ ममवि एव्वं, तदो जाणामि सहीणं अहिआइं क्खदाइं। [ अस्ति किमपि, तद् यदि ममापि एवं, ततो जानामि सखीनाम् अधिकानि क्षतानि ]

वृन्दा—( विलोक्य ) हद्धी हद्धी संकाउलचित्तदाए अह्मेहिं एदं ण पेक्खिदं, भट्टिदारिए दाणीं पेक्खामि सुउमारत्तणेण अग्गदो लहुगमणेण अ विसुमरिद-कञ्चुलिअग्गहणाए तुहज्जेव क्खदाइं अहिदाइं। ललिदे भिंगारसलिलेण धावेहि रत्तधारं, देहि मम करंडअं अ जाव कण्टआइं उद्धरिअ ओसधं अप्पेमि।

[ हा धिक्, हा धिक् शंकाकुलचित्ततया अस्माभिः एतन्न प्रेक्षितम्, भर्तृ-दारिके इदानीं प्रेक्षे सुकुमारत्वेन अग्रतो लघुगमनेन च विस्मृतकञ्चुलिकाग्रहणायाः तवैव क्षतानि अधिकानि। ललिते! भृंगारसलिलेन धावय रक्तधारां, देहि मम करण्डकञ्च यावत् कण्टकानि उद्धृत्य औषधम् अर्पयामि। ]

ललिता—(यथानिर्दिष्टमाचरन्ती) एदं करंडअं (इत्यर्पयति) [एतत् करण्डकम्]।

वृन्दा—( करण्डकात् सूचीमौषधचूर्णञ्च निःसार्य्य श्रीराधामुपचरितुं प्रवृत्ता )।

श्रीकृष्णः—सखि वृन्दे, न केवलं भवती मदनशरसम्पातजनितहृदयक्षतविरो-

पणपटीयसी, कायचिकित्सायामपि दक्षिणा भवति, करण्डकञ्चेदं भैषज्यमन्दिरमेव मन्ये ।

वृन्दा—सामसुंदर ! अणुइदं भणासि, पेक्ख, ( श्रीराधिकामङ्गुल्या निर्दिश्य )

हिअअं तुह क्खु एदं मअणसरेहिं क्खदं ण अण्णेहिं ।

एसा ताह चिइच्छा, करंडअं पेममूलं अ ।

[ श्यामसुन्दर, अनुचितं भणसि, पश्य,

हृदयं तव खल्वेतत् मदनशरैः क्षतं नान्यैः ।

एषा तस्य चिकित्सा, करण्डकं प्रेममूलञ्च ]

श्रीराधा—( स्वगतम् ) कुंजमंडवगमणं विणा विंदाए ण क्खु एदं बअणं जुज्जइ [ कुञ्जमण्डपगमनं विना वृन्दाया न खलु एतद्वचनं युज्यते ] ।

श्रीकृष्णः—सखि वृन्दे, किमेतावदेव तत्रौषधम् ?

वृन्दा—अअं उपसग्गनिउट्टणो वाओ ( अयं उपसर्गनिवर्त्तनोपायः )

श्रीकृष्णः—तल्लब्धाश्वासोऽस्मि, प्रियतमाया उपचाराविरोधेन ब्रूहि तां सूचितपूर्वां विपत्तिं या हि मृत्युदण्डेनोपमिता, यया च दुरध्वाश्रयो भवतीनाम् ।

वृन्दा—ता सुणु, इध पुप्फदोलुच्छवोत्ति कुदोवि लद्धप्पउट्टिआए कुडिलाए कोविदेण अज्जराआणेण सिणिद्धेण वि णिरुद्धा भट्टिदारिआ । [ तत् शृणु, इह पुष्पदोलोत्सव इति कुतोऽपि लब्धप्रवृत्तिकया कुटिलया कोपितेन आर्यरायाणेन स्निग्धेनापि निरुद्धा भर्तृदारिका ] ।

श्रीकृष्णः—किं निगड़ेन बद्धा ?

वृन्दा— ण हि ण हि, रुद्धदुआरए घरए णिक्खित्ता [ न हि न हि, रुद्धद्वारे गृहे निक्षिप्ता ] ।

श्रीकृष्णः—हा, हृदयेनानुभवामि प्रियायास्तदानीन्तनीमवस्थाम्—

काहं प्रियप्रणयनिर्भरबाहुबन्ध-
संश्लिष्टमण्डलपयोधरभारहर्षम् ॥
लप्स्येऽद्य हा ! क च गृहोदरशून्यलीना
नैराश्यनिश्वसितवाष्पकुलाकुलोऽस्मि ॥ १६ ॥

श्रीराधा—( स्वगतम् ) सच्चं जाणिदं मे हिअअं तहिं ट्ठिदेण पाणणाहेण [ सत्यं ज्ञातं मे हृदयं तत्र स्थितेन प्राणनाथेन ] ।

श्रीकृष्णः—ततस्ततः ।

वृन्दा—तदो गदे पढमपहरे अच्चाहिदसंकिणा अअणिदबहिणीवअणेण तेण ज्जेव मुक्का [ ततो गते प्रथमप्रहरे अत्याहितशङ्किना अगणितभगिनीवचनेन तेनैव मुक्ता ] ।

श्रीकृष्णः—( सहर्षम् ) ।

वज्रं सृजति यो मेघः स एवाम्भः समुत्सृजन् ॥
जीवान् जीवयति प्रायः स्नेहार्द्रस्येदृशी स्थितिः ॥ १७ ॥

वृन्दा—सुणादु कधासेसं [ शृणोतु कथाशेषम् ]।

श्रीकृष्णः—कथय कथय।

वृन्दा—तदो बहिणीए कुडिलाए सामरिसं भादुणो भणिदं, अह्माणं वअणे जइ ण दे पच्चओ, ता एहि कुंजवणस्स एक्कपदिअं, तहिं चिट्ठंतो बहूए अहिसारं अप्पणाणअणेण पेक्खिस्ससि, जुत्तं एदं सुनिअपडिवण्णं अज्जराआणेण ताणं एदं रहस्समंतणं णिहुदं मए सुणिदं पेक्खिदं अ एक्कपदीगमणं। [ततो भगिन्या कुटिलया सामर्षं भ्रात्रे भणितम्, अस्माकं वचने यदि न ते प्रत्ययः, एहि निभृतं कुञ्जवनस्य एकपदिकां, तत्र तिष्ठन् बध्वा अभिसारम् आत्मनयनेन द्रक्ष्यसे, युक्तमेतत् श्रुत्वा प्रतिपन्नम् आर्यरायाणेन तयोरेतत् रहस्यमन्त्रणं निभृतं मया श्रुतं प्रेक्षितञ्च एकपदीगमनम् ]।

श्रीराधा—( सबाष्पम् ) हला चिट्ठदु कधा, सुमरणं वि तस्स मम दुक्खं उप्पादेदि [ सखि, तिष्ठतु कथा, स्मरणमपि तस्य मम दुःखमुत्पादयति ]।

श्रीकृष्णः— अनन्यमार्गो ह्ययं कुञ्जमण्डपसन्निवेशः तदकथितमपि शिष्टं ज्ञायत एव। ( साकूतम् )

सखीजनया मदाशाया प्रियया मे विपथेऽर्पितं पदम्॥
स्खलितं न, न कण्टकक्षतं गणितं वा न कृताहिवर्गभीः॥ १८॥

श्रीराधा—( सावेगम् ) पाणणाह मा एव्वं, अपरिइदवणभाएण आअदा अह्मेत्ति सच्चं, किं तु सो ण विवधो [ प्राणनाथ, मैवं, अपरिचितवनभागेन आगता वयमिति सत्यं किन्तु न स विपथः ]।

श्रीकृष्णः—( सादरम् ) प्रिये, कस्तर्हि विपथः?

श्रीराधा—जेण गदाणं ण तुह दंसणं सो ज्जेव विवधो [ येन गतानां न तव दर्शनं स एव विपथः ]।

श्रीकृष्णः—प्रिये! जितोऽस्मि।

वृन्दा—सामसुंदर, जइ तुमं जिदो भट्टिदारिआए, ता तदणुमदिए कुंजमंडवमग्गं दंसअंतो लहुं लहुं पुरदो होहि [ श्यामसुन्दर यदि त्वं जितो भर्तृदारिकया तत् तदनुमत्या कुञ्जमण्डपमार्गं दर्शयन् लघु लघु पुरतो भव ]

श्रीकृष्णः—( सहर्षम् ) एवमस्तु, अधिकन्तु यद्यनुमन्यसे त्रिविधक्लेशावसन्नां प्रियतमामुरसा कुञ्जमण्डपं नयन् विजितकृत्यं पूरयामि।

वृन्दा—सअंगहरसिअ अअं अंजली, मरिसेहि अह्माणं तुह भट्टिदारिआवहणे परिवंधिआणं [ स्वयंग्रहरसिक! अयम् अञ्जलिः, मर्षयास्मान् तव भर्तृदारिकावहने प्रतिबन्धिकाः ]।

श्रीकृष्णः—( सविस्मयम् ) वृन्दे! प्रहेलिकामयमिव ते वचनं मे प्रतिभाति। कथय कथमेवं परुषासि।

यस्याः प्रयत्नशतवातहृतान्तराय-
मेघान्धकारविमले विपिनाम्बरान्ते ॥
प्राप्तोऽहमैन्दवकलामिव पाणिनैनाम्
वृन्दैव सा त्वमसि सोऽस्मि च सा प्रिया च ॥ १९ ॥

श्रीराधा—( स्वगतम् ) एदं सुणिअ किं भणइ सही विंदा [ एतत् श्रुत्वा किं भणति सखी वृन्दा ]

वृन्दा—सामसुंदर ! अअं पुप्फदोलुच्छवजण्णो इध तुमं देवदा भट्टिदारिआ पधाणं उवआरो अम्हे जण्णदीक्खिदाओ दीक्खिदेहिं दिण्णं उवआरं देवदाओ गेह्णंति, ण अदिण्णं, अज्ज अम्हेहिं अअं उवआरो ण दे दिण्णं अदोज्जेव परिबंधो करिअदि ।

[ श्यामसुन्दर ! अयं पुष्पदोलोत्सवयज्ञः, इह त्वं देवता, भर्तृदारिका प्रधानम् उपचारः, वयं यज्ञदीक्षिताः, दीक्षितैर्दत्तम् उपचारं देवता गृह्णन्ति, न अदत्तं, अद्य अस्माभिः अयं उपचारो न ते दत्तः, अत एव प्रतिबन्धः क्रियते ]

श्रीराधा—( स्वगतम् ) जाणाति विंदा उच्छवस्स गुणं वड्ढयिदुं [ जानाति वृन्दा उत्सवस्य गुणं वर्द्धयितुम ]

श्रीकृष्णः—( सहास्यम् ) सखि ! चिरदत्तोऽयमुपचारः, अद्य कथं निर्माल्यरूपः पुनस्तस्यै देवतायै दीयते ।

वृन्दा—सामसुंदर, इध सुणु सत्तसंगदं मे वअणं [ श्यामसुन्दर ! इह शृणु शास्त्रसंगतं मे वचनम् ] ( संस्कृतमाश्रित्य )—

गङ्गाजलं वा तुलसीदलं वा निर्माल्यतां नैव यथोपयाति ॥
तथैव नो राजसुता ततो वा गुणाधिका नित्यनवा विभाति ॥ २० ॥

श्रीकृष्णः—( सहास्यम् ) तदलं विचारितेन, यद्येतेन भवतीनां तोषः, तथैवास्तु । तच्छनैरप्रमादमादाय मे प्रेयसीमागम्यताम् अहं पुरतो भवामि ।

श्रीराधा—पाणणाह ! सअं पारेमि गंतुं [ प्राणनाथ ! स्वयं पारयामि गन्तुम् ]

श्रीकृष्णः—प्रिये तन्मन्दं मन्दं मामनुसर सह सखीभिः । ( इति अग्रे सरन्तं श्रीकृष्णमनुसरन्त्यः सर्वाः परिक्रामन्ति )

वृन्दा—भट्टिदारिए इध सिलासअलाइं, पदक्खेवभूमिं दे पेक्खंती गच्छामि तुमं वि सावधाणा एहि । [ भर्तृदारिके इह शिलाशकलानि पदक्षेपभूमिं ते पश्यन्ती गच्छामि, त्वमपि सावधाना एहि ] ।

श्रीकृष्णः—प्रिये प्राप्तोऽयं ससखस्य मे त्वय्युत्सुकस्य प्रतीक्षणभूभागः, पश्य इतो नाति दूरे—

कलिन्दगिरिनिष्यन्द-धाराधाराधरद्युतिः ॥
सविधे भाति ते स्निग्धा वेणीवावर्त्तहारिणी ॥ २१ ॥

श्रीराधा—पाणणाह पेक्खिअदि तुह अंगकांतिच्छुरिदा इअं जमुणा [ प्राणनाथ, दृश्यते तव अङ्गकान्तिच्छुरिता इयं यमुना ]।

वृन्दा—( पदान्तिके वंशीं विलोक्य स्वगतम् )—इअं वंसी सामसुंदरस्स, ता गेह्णामि एदं, जाव ण अण्णेसिअदि दाव गुत्तं रक्खिस्सं ( इति आदाय वस्त्राभ्यन्तरे रक्षति ) [ इयं वंशी श्यामसुन्दरस्य तद् गृह्णामि एनाम्, यावन्न अन्विष्यते तावद् गुप्तं रक्षिष्यामि ]।

श्रीराधा—हला विंदे ! तुह पदे सिलासअलं फ्फुरिदं ? [ सखि ! वृन्दे तव पदे शिलाशकलं स्फुटितम् ? ]

वृन्दा—णहि णहि बाहअं किंपि ओसारिदं [ नहि नहि बाधकं किमपि अवसारितम् )

श्रीकृष्णः – ( स्वगतम् ) अये गोपितो मे वेणुर्वृन्दया, तदेवं ( प्रकाशम् ) सखि ललिते अद्य पुष्पदोलोत्सवदिवसे श्रावयामि वोऽपरं नवोत्सववृत्तान्तम् ।

ललिता—सामसुंदर ! को णओच्छववुत्तंतो [ श्यामसुन्दर ! को नवोत्सववृत्तान्तः ]

श्रीराधा—पाणणाह इमिणा दे बअणेण उच्छुअ ह्मि ( प्राणनाथ ! अनेन ते वचनेन उत्सुकाऽस्मि )

श्रीकृष्णः—श्रूयताम्—

राधानाम सदा गायन् बहुरन्ध्रोऽपि मे प्रियः ॥
दीर्घाङ्गो मोहयन् गोपीर्वृन्दापाणिग्रहे स्थिरः ॥ २२ ॥

( श्रीराधिकाललिते सविस्मयं वृन्दामुखमीक्षेते )

वृन्दा—( वस्त्राभ्यन्तराद् वंशीं बहिष्कृत्य ) हला पेक्ख मे पाणिग्गहत्थिरं पिअं रासमंडलखेलणे गोपिआमंडलिव्व—

सामेण राअपुण्णं अणिसं किदचुंबणा खु जा पुव्वं
भूपडिदा विअला सा क्खित्ता पच्चा मए ऊढ़ा । [ सखि ! पश्य मे पाणिग्रहण-स्थिरां प्रियां रासमण्डलखेलने गोपिकामण्डलीव—
श्यामेन रागपूर्णम् अनिशं कृतचुम्बना खलु या पूर्वम्,
भूपतिता विकला सा क्षिप्ता पश्चान्मया ऊढा ]

श्रीराधा—( सस्मितम् ) ता णवुच्छववुत्तंतो त्ति सुठ्ठु भणिदं पाणणाहेण । [ तत् नवोत्सववृत्तान्त इति सुष्ठु भणितं प्राणनाथेन ]

वृन्दा—(सस्मितम् ) भट्टिदारिए णाअरगुणदंसिणिए तुए वि सुठ्ठु भणिदं, अहं दु पिअं दे णिवेदेमि कुंजमंडवदुआरं आअदाओ अह्मेत्ति । [ भर्तृदारिके नागरगुण-दर्शिन्या त्वयाऽपि सुष्ठु भणितम्, अहं तु प्रियं ते निवेदयामि, कुञ्जमण्डपद्वारमागता वयम् इति ]

श्रीराधा—अह्मो ( इति सविस्मयं सस्पृहं च अवलोकयति ) [ अहो ] ( सख्यः करतालीं दत्वा सहर्षम् ) दिट्ठिआ बड्ढह्म [ दिष्ट्या बर्धामहे ] ।

श्रीकृष्णः—वृन्दायाः सरसवचनावलीमुग्धतया मयाऽपि नोत्प्रेक्षितमिदम् ।

वृन्दा—अलं बिलंबिदेण पबिसदु जुअलं अब्भंतरं पुरीअदु अह्माणं मणोरहो । [ अलं विलम्बितेन प्रविशतु युगलमभ्यन्तरम् , पूर्यतामस्माकं मनोरथः ] ।

( सर्वाः श्रीकृष्णं राधां च अनुसरन्त्यः कुञ्जमण्डपप्रवेशं नाटयन्ति ) ।

वृन्दा—जादे ललिदे ! बहिनि विसाहे ! सब्वाओ सहिओ ! एध जण्णं संपादेह्म सज्जेध उवआरं जाव जण्णेस्सरस्स चरणं धाविअ जण्णट्ठाणं णेमि । [ वत्से ललिते ! भगिनि विशाखे ! सर्वाः सख्यः ! एत यज्ञं सम्पादयामः, सज्जयत उपचारं यावत् यज्ञेश्वरस्य चरणं धावित्वा यज्ञस्थानं नयामि ] ।

( इति सर्वा उलूलुध्वनिं कृत्वा श्रीराधिकां पुष्पाभरणेन सज्जयन्ति )

वृन्दा—( भृङ्गारं करे गृहीत्वा ) सामसुंदर ! ( इत्यर्द्धोक्ते जिह्वां ईषद् दष्ट्वा ) जण्णेस्सर ! देहि चरणं जाव धावेमि । [ श्यामसुन्दर—यज्ञेश्वर देहि चरणं यावद् धावयामि ] ।

श्रीकृष्णः—किशोरोऽहं प्रौढा त्वमसि सखि वृन्दे ननु कथम्
अकल्याणीं वाणीं वदसि मम पादग्रहपराम् ॥

वृन्दा—( अपवार्य संस्कृतमाश्रित्य )—
प्रभो त्वत्सेवायाः फलमधिगतं सम्प्रति मया
यतस्त्वां जानामि द्रुहिणशिवसम्पूजितपदम् ॥ २३ ॥

( इति स्वयमेव बलादिव श्रीकृष्णचरणमादाय प्रक्षालयति )

श्रीकृष्णः—( सस्मितम् ) तवानेन बलात्कारेण नाहं प्रत्यवैमीतीह वनदेवता साक्षिणी ।

वृन्दा—तुमं ज्जेव सव्व देवदाणं देवदासि अलं संकाए एहि अहिचिट्ठ एदं जण्णट्ठाणं ( इति कुसुमशयनीयं दर्शयति ) [ त्वमेव सर्वदेवतानां देवतासि अलं-शङ्कया, एहि अधितिष्ठ, एतत् यज्ञस्थानम् ] ।

श्रीकृष्णः—सखि ! किमहमेक एवेदं अधितिष्ठामि ?

वृन्दा—( सस्मितम् ) तुमं एक्को ज्जेव सदा चिट्ठसि अज्ज कधं भाआसि ता अधिचिट्ठ, ( इत्युपवेशयति ) [ त्वमेक एव सदा तिष्ठसि, अद्य कथं बिभेषि ? तद् अधितिष्ठ ] ।

ललिता—अन्तिए एस सज्जो उवआरो ( इति पुष्पाभरणालङ्कृतां राधामुपस्थापयति ) । [ अन्तिके, एष सज्ज उपचारः । ]

वृन्दा—सहिओ करिअदु उलूलुसद्दो वादिअदु संखो, ( श्रीराधां करे धृत्वा

श्रीकृष्णं प्रति ) जण्णेस्सर अअं दे पढमो उवआरो, ( इति—राधिकाम् राधिका-वामकरं श्रीकृष्णहस्ते अर्पयति। वस्त्राभ्यन्तरात् वंशीं बहिष्कृत्य ) दुदिओ इअं वराइआ वंशी [ वामकरे वंशीं समर्पयति सख्यः क्रियताम्—उलूलुशब्दः, वाद्यताम् शंखः, यज्ञेश्वर ! अयं ते प्रथम उपचारः। द्वितीय इयं वराकिका वंशी )।

श्रीकृष्णः ( सहर्षम् ) द्वयमपि इदं युगपत् समन्त्रकं प्रतिगृह्णामि। तथाहि—

विनोदिनि त्वां पिकजित्वरस्वरे
करे दधानस्य यदस्ति मे सुखम् ॥
ब्रुवे कथं तद् वचसामगोचरम्
रदच्छदे योजयतश्च का कथा ॥ २४ ॥

श्रीराधा—( सस्मितम् ) अज्जउत्त ( सशङ्कं वृन्दां दृष्ट्वा ) पाणणाह इमिणा वअणेण अएदणस्स चेदणत्तणं चेदणस्स अ अएदणत्तणं संवादेसि [ आर्यपुत्र, प्राण-नाथ, अनेन वचनेन अचेतनस्य चेतनत्वं चेतनस्य च अचेतनत्वं सम्पादयसि ]।

वृन्दा—जण्णेस्सर ! पुण्णं कुणुहि जण्णं, माहवीमेलणं अणुचिट्ठ जेण अह्मे किदत्थाओ होम्म। भट्टिदारिआबि जधाकामं संबोधेदु। [ यज्ञेश्वर ! पूर्णं कुरु यज्ञं, माधवीमेलनम् अनुतिष्ठ, येन वयं कृतार्था भवेम, भर्तृदारिकापि यथा कामं सम्बोधयतु ]।

श्रीकृष्णः—सखि वृन्दे ! अभिनवोऽयमुत्सवप्रकारः,

गृहीतपूर्वोऽपि नवत्वमद्य, प्रयाति कान्ताकरपल्लवोऽयम्।
आसंसृतेरभ्युदितोऽपि चन्द्रो दर्शात्यये नूतनतामुपैति ॥ २५ ॥

श्रीराधा—( स्वगतम् ) अह्मो अज्ज मे पढमसंग विअ भावसवलत्तणं होदि। [ अहो अद्य मे प्रथमसङ्गे इव भावसवलत्वं भवति ]।

वृन्दा—( सानन्दनृत्यमिव ) सहिओ तुवरद निसीधकुसुमचयणादिअं दोलुच्छव-संविहाणसेसं संवादेदुं। [ सख्यः त्वरध्वं निशीथकुसुमचयनादिकं दोलोत्सव-संविधानशेषं सम्पादयितुम् ]।

सख्यः—तह ( इति निष्क्रान्ताः )। [ तथा ]

वृन्दा—रसमअ ! इमस्सिण् समए णीरवाभूषणा दे वंसो ( रसमय अस्मिन् समये नीरवभूषणा ते वंशी )

श्रीकृष्णः—सखि स्वयमर्पितोत्सवानन्दस्य प्रियतमापहृतमनसो मे स्खलितमिदं स्वयमेव प्रदर्शयन्त्या भवत्या महदुपकृतं तद् यावत् प्रसाधयामि। (इति वंश्या गायति)

कथय मुरलि ! राधानाम कामप्रपूरं,
विपिनमपि च दूरं पूरय ध्वानतानैः ॥
अमृतकरकरौघैः स्नातमप्येतदद्धा,
त्वदुदयदमृतान्ते गाहतां प्रेमसिन्धौ ॥ २६ ॥

ललिता—( प्रविश्य ) स्सरमाहुरिमुद्धाओ चिरं ठ्ठिदाओ अह्मे अदिपड़दि उण रत्ती सव्वाओ सहिओ विविहमंगलहत्थाओ परिपालअंत्ति जुअलं ता लहु लहु दोलमंडवं एदु [ स्वरमाधुरीमुग्धाश्चिरं स्थिता वयम्, अतिपतति पुना-रात्रिः, सर्वाः सख्यो विविधमंगलहस्ताः प्रतिपालयन्ति युगलम्, तत लघु लघु दोलमण्डपम् एतु ]

श्रीकृष्णः—सखि, इदमपि मे प्रियतरम् ( इति उत्थाय करेण श्रीराधाकर-मादाय प्रचलन् गतिभङ्गं नाटयन् ) सखि वृन्दे क्रियताम्, आवयोः गमन-साहायकम् यतः—

उत्कम्पते प्रथममेलनवत् प्रिया मे
स्तब्धा पदात्पदमपि चमते न गन्तुम ॥
स्वेदामृतेन करपल्लवनिःस्रुतेन
संसिञ्चती मम करं करणं रुणद्धि ॥ २७ ॥

वृन्दा—( सस्मितम् ) ता अह्मे एक्केकं धारेह्म । [ तद् वयं एकैकं धारयामः ]

( नेपथ्ये मंगलध्वनिः, गीतञ्च )

मदनशरासन-शरनिकराकर-सुरभि-कुसुम-वनसायम् ।
पूर्ण-सुधाकर-कर-सरणि-स्फुरदम्बर-सम्भृतधारम् ,
सविध-सरोवर-वारि-विराजित-कुमुदमुदञ्चित-हासम् ,
मृदुमलयानिल-चुम्बित-कम्पित-पल्लव वल्लि-विलासम् ।
दीपशतोज्ज्वल माकुल-मलयज-परिमल-मिलदलिपुञ्जम् ।
राधामाधव-रूप-युगलमुपयातु मनोहरकुञ्जम् ।
भक्तहृदयमिव निर्मल-कोमलमिह ! नवदोलनतल्पम् ,
भजतु च सदयं पश्यतु तदयं मुग्धजनः सविकल्पम् ॥

श्रीकृष्णः—अहो सख्यः मङ्गलध्वनिभिः, विमानस्था देवबालाश्च गीतेन अस्मान् आमन्त्रयन्ते । ततः दोलोत्सवमण्डपं साधयामः, ( इति वृन्दाललितयोः दत्तावलम्बं श्रीराधायुगलं सर्वश्च सखीजनो निष्क्रान्तः ) ।

❀ इति द्वितीयोऽङ्कः ❀



# सूर्योदयः।

त्रयोदशे वर्षे | चैत्र-वैशाख-ज्येष्ठपूर्णिमाः १९९५ | १०-११-१२ संख्याः


## सम्पादकीया अभिप्रायाः।

### व्यवस्थापकसभाया धार्मिकविषयेऽपि हस्तक्षेपः।

सम्प्रति सर्वत्रैव राष्ट्रमहासभा-( कांग्रेस ) सदस्यशासितप्रान्तेषु एक पदे एव सामाजिक-धार्मिकादिष्वपि विषयेषु प्राचीनां नियमव्यवस्थां परिवर्त्या-र्वाचीनां नियमव्यवस्थां परिचालयितुं झञ्झावातः प्रचलितो दृश्यते। नायं समीचीनः पन्था अस्माकं विमर्शे विद्योतते। तथा हि—

"अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते" इति

व्यासोक्तेः पौरुषमनपेक्ष्य अनुबन्धक्षयहिंसादिदोषजातञ्चाविगणय्यैव प्रारब्धं कर्म तामसतया निगदितं विद्यते, तदेव साम्प्रतिका व्यवस्थापकसभा-सदस्याः स्वस्वप्रान्तेषु प्रारब्धवन्तो दृश्यन्ते। पश्यन्तु—वस्तु-विचारणायां मुख्योऽधिकारस्तु न कोऽपि व्यवस्थापकसभामन्त्रिमण्डलस्य दृश्यते। यतो हि सर्वं शासनसूत्रं सम्राट्प्रतिनिधि-(गवर्नरजेनरल) महोदयहस्ते एवास्ति सर्वथा तद्विरुद्धन्तु किमपि कर्तुमेव नार्हन्ति इमे। सैन्यविभागे देशान्तर-वाणिज्य-विषये शासकवर्गरक्षिवर्गप्रभृतीनां वेतनादिविषये तु अस्पृश्या एवेमे सन्ति। शिक्षा-कृषि-स्वास्थ्यादिष्वेव कियत्सु विषयेषु नाममात्रतोऽस्ति कियानधिका-रस्त्वेतेषाम्। तत्रापि यदि तत्प्रान्तीयः सम्राट्प्रतिनिधि- ( गवर्नर ) महोदयः शासनशकटचक्रं निरोद्धुमिच्छेत् चेत् पदमात्रमपि नेमेऽग्रे गन्तुमर्हाः। परन्तु सर्वमपीदमविगणय्य सर्वथा धर्मविषये एकदैव प्रान्तीय-व्यवस्थापक-मण्डलमन्त्रिणः प्रजाप्रतिनिधयोऽपि सन्तो जनतोद्वेगकर-धार्मिकसामाजिकविष-येष्वेवाधिक्येन हस्तक्षेपं कुर्वन्ति। विहारप्रान्ते देवोत्तरसम्पत्तिनियन्त्रण-नियमं क्वचित् च पुरुषबहुविवाहनियन्त्रणनियमं क्वचन च पतित्याग-

नियमं धम्बईप्रान्ते च अस्पृश्यानां मन्दिरप्रवेशनियमं निर्मापयितुं बद्धपरिकरा दृश्यन्ते । एवमन्यत्रापि प्रान्ते क्रमेणान्येष्वपि धार्मिकादिविषयेषु हस्तक्षेपो भविष्यत्येवेति निर्विवादसिद्धम् ।

यद्यपि वयं सनातनधर्माणो न दृढं सुसंघटिताः स्मः । तथापि सर्वाधिका अस्माकं संख्या । यदि वयं स्वीयां गाढनिद्रां विहाय चेष्टमानावस्थां तु दूरे तिष्ठतु, केवलं पार्श्वपरिवर्तनमेव कुर्मः तर्हि सर्वोऽप्ययं प्रान्तमन्त्रिणां स्वेच्छानर्तन-कूर्दनादिमहोपद्रवसमुदायः समवसितः स्यात् । नेदं भविष्यतीत्यशङ्किताः खलु सदस्याः सन्ति ।

वयं पृच्छामः क इमे धार्मिकविषयेषु हस्तक्षेपकर्तारः ? देवोत्तरसम्पत्तिर्हि तत्तद्धर्मसम्प्रदायशिष्यैः स्वगुरुभ्यो धार्मिकबुद्धया समर्पिता विद्यते । तस्याः सम्पत्तेः सर्वथा ते एव गुरवो मोहान्ता अधिकारिणः सन्ति । तस्याः सम्पत्तेः सदुपयोगं कुर्वन्ति न वा एतस्य निरीक्षणं तेषामेव मण्डलीति प्रसिद्धया तत्परिषदैव कर्तव्यम् । नहि खृष्ट मोहम्मद-जैनादि-धर्मान्तरस्थैः स्वधर्मशास्त्रशासनमतिक्रामद्भिश्च मानवैः संघटितायाः व्यवस्थापकसभायाः सनातनधर्मदेवोत्तरसम्पत्तिनियन्त्रणे कोऽप्यधिकारो न्यायतो वर्तते । राजशक्तिसम्पन्ना साम्प्रतिकी व्यवस्थापिका सभा राज्यमदमोहमुग्धा नानर्थं कुर्य्यादित्येवास्माकमिह वक्तव्यं विद्यते । शान्तया गम्भीरया दृष्टया विचारणीयं धार्मिकविषये हस्तक्षेपस्तया नैव कर्तव्यः । न वा गणतन्त्रपरायणैः गणमतविरुद्धः स्वैराचारो विधेयः ।

यदि सर्वथा धर्मोत्तरसम्पत्तिनियन्त्रणमावश्यकमेवापतितं चेत्तदा तदधिकारिणो मोहान्ताः साधवः संन्यासिन उदासिनो रामानुजीयाः दादूपन्थिनो गरीबदासिनः सर्वेऽपि देवोत्तरसम्पत्तिस्वामिनः प्रथमतः सूचनीया एव, यद्भवन्तः सावधाना भूत्वा स्वकर्तव्यपथपथिका भवेयुः । स्वीयायाः सम्पत्तेः हिन्दूधर्मरक्षणे, शिक्षालये, चिकित्सालये, वापीकूपतडागारामादिषु इष्टापूर्तकर्मसु सदुपयोगो विधातव्य इति । इत्थं बहुशो बोधिता अपि सन्तो यदि ते सन्मार्गारूढा न भवेयुस्तदा देवोत्तरसम्पत्तिनियन्त्रणनियमनिर्माणविषये विमर्शं विदधतु सम्प्रति ते सर्वेऽपि मोहान्तादयः स्वात्मनः संघटनं कर्तुं तत्परा अपि विद्यन्ते । अन्येष्वपि धर्म्मनियन्त्रणेषु मासान्तरे सविशेषं वक्ष्यामः ।

पुण्येऽस्मिन् भारतवर्षे विवाहादयः संस्कारा धार्मिकं कृत्यं वर्त्तन्ते । नतु मांसदृशामिव भोगमात्रार्थाः । एवं स्थिते—श्रुतिस्मृतीतिहासपुराणशासनमविगणय्य परानुकारमात्रपरायणाः यथास्थितमपि स्वातन्त्र्यं परपदे समुत्-

सृजन्तीति महतः क्लेशस्य सम्भारः शिरसि समापतितो देशभक्तानाम् ।

वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदामिति वेदो धर्म्ममूलं तद्विदांच स्मृतिशीले । इत्यादीनि बहूनि धर्मशास्त्रीयवचनानि सन्ति । एवं सति धर्मशास्त्रीय निर्णये क इमे नियमान्तरनिर्मातारः ? स्पृश्यास्पृश्यादिविचारेऽपि धर्मशास्त्रीयवाक्यानि विद्यन्त एव । इत्थं हि सर्वत्रैव विषये धर्मसूत्रकृतां नियमैरेव सर्वथा सर्वकार्य्यसिद्धिः । सम्प्रति अविचारितं धर्मशास्त्रादेश-विरुद्धं कर्म करणं सर्वथा प्रजाप्रतिनिधीनां व्यवस्थापकसदस्यानामनुचिततरं स्वात्म विनाशकरमेव भविष्यति । उक्तमत्रापि मनुना—"उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानि चित् तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" इति । इत्येवं सम्प्रति विवेकशून्यम् अविचारितं सर्वथा शीघ्रायमाणं धार्मिकविषये प्रजाप्रतिनिधीनां राष्ट्रिय-महासभासदस्यमन्त्रिणां व्यवस्थापकसभायां नियमनिर्माणादिकर्म जनतोद्वेगकरं सर्वथा भारतीयसंस्कृतिविनाशकरं परस्परं च कलहसमेधकमिति नात्र हस्तक्षेपो विधेय इत्येवास्माकं सत्परामर्शः ।

---

## संस्कृतशिक्षापद्धतिः ।

सम्प्रति संस्कृत-शिक्षा-पद्धतिः कीदृशी दूषिता विद्यते, यस्याः परिवर्तनं कीदृग् नितान्तमावश्यकमस्ति, इति सर्वेऽपि विद्याविदो देशकालात्मविदो विदन्ति । परन्तु केऽपि तत्र दृष्टिपातं न कुर्वन्ति इति महद्दौर्भाग्यं संस्कृत-वाङ्मयाध्येतॄणाम् । तेषां किमपि संघटनं समुचितं न विद्यते यद्द्वारा तेऽस्य विषयस्य कृते आन्दोलनं कोलाहलं वा कुर्य्युः । ऐषमः पञ्जाम्बुप्रान्तीयामृतसरनगरे संस्कृत सम्मेलनस्यैकादशाधिवेशनं महता समारोहेण म० म० पण्डित गिरिधरशर्मचतुर्वेद-महोदयानां सभापतित्वेन सम्पन्नम् । परन्तु तदीयाः प्रस्तावाः कियत्सु समाचार-पत्रेषु प्रकाशिताः ? कियन्तो वामृतसरस्थविद्वांसोऽन्ये वा तदीयप्रस्तावान् पश्यन्ति ? को वाग्रे यत्नस्तेषां प्रस्तावानां कार्य्यरूपेण परिणमनकृते भवतीति न ज्ञायते । ते हि महात्मानो येषां हृदि संस्कृतभाषायाः साम्प्रतिकी दुरवस्था खेदमावहति तत्रैकचित्तीभूय प्रस्तावान् उपन्यस्तवन्तः, स्वापेक्षितस्थाने प्रेषितवन्तश्च नतु तदनुरागिस्थाने । अस्तु । परं समाचारपत्र-सम्पादकानामनवधानतया कियत्सु पत्रेषु प्रकाशिता एव नाभवन् । कियत्सु च संक्षिप्यैवं संस्कृत-सम्मेलनवृत्तं प्रकाशितम्, येन तत्र सम्मेलने सम्पन्नानां सर्वेषां

कृत्यानां किमपि ज्ञानमेव नाभवत्। प्रतिविद्यालयं प्रतिसंस्कृत-पण्डितं सम्मेलन-कृत्य वार्त्ताप्रेषणे जनवलं धनवलञ्चापेक्ष्येते, तयोस्तु संस्कृतसाहित्यसम्मेलने नितरामभाव एवास्ति। धनवलस्य जनवलस्य चाभावेनैव द्वित्रेषु वर्षेषु कदाचिदेव तदीयमधिवेशनं भवतीति महत् कष्टकरम्। तत्रापि तत्प्रान्तीयाः कियन्तो विद्वांसः समुपतिष्ठन्ते। काशीस्थानां विदुषाम् तदितरप्रान्तीयानान्तु उपस्थितिरगणेयप्राया।

सम्मेलनेन संस्कृतशिक्षा-पद्धति-परिशोधनार्थम् एका समितिः निर्मिता, तेन तु स्वीयं कर्तव्यं कृतम्। सम्प्रति सर्वेषामेव संस्कृतज्ञानां विदुषां विद्यार्थिनां कर्तव्यमिदं विद्यते यत् ते स्वयमेव प्रवृत्ति-विनिमयेन तदीयान् प्रस्तावानवगत्य कार्य्यरूपेण परिणमयेयुः। ये च प्रस्तावा राजकीयकर्मचारिभिः सह सम्बन्धभाजः सन्ति तेषां कृते तान् सर्वान् सर्वथा समुद्दीपयेयुः। राजकीयकर्मचारिणस्तु पुरा संस्कृतभाषा-विषये महदौदास्यं प्रकाशयन्ति स्म। परन्तु-यू॰ पी॰ मन्त्रिमण्डलेन सर्वासामपि शिक्षाप्रणालीनां निरीक्षणं कर्तुं कियतां तज्ज्ञानामेका समितिर्नियुक्ताऽभूत्। तत्र संस्कृतशिक्षायास्तु नामैव नासीत्। किमिदम्? किं संस्कृतशिक्षायाः संशोधनं नापेक्षितं? किं तत् तेषां कर्तव्ये नापतति स्म? किन्तु तत्रापेक्षा एव विद्यते स्म कारणम्।

सम्प्रति संस्कृतभाषाभिज्ञाः माननीयाः श्रीसम्पूर्णानन्दमहोदयाः शिक्षामन्त्रि-पदमधितिष्ठन्ति। श्रूयते तैः संस्कृतशिक्षासंविधानकृतेऽपि विदुषामेका समितिः संयोजिता विद्यते। अत्र तत्तद् विषयज्ञैः संस्कृतज्ञैः सर्वैर्मिलित्वा संस्कृतशिक्षा-पद्धति परिवर्तनाय महान् प्रयत्नः कर्तव्यो विद्यते, येन संस्कृतभाषायाः सर्वोऽपि गुणराशिः सर्वेषां पुरतः स्फुरितः स्यात्। संस्कृतज्ञा विद्वांसो विद्यार्थिनश्च साम्प्रतिके जगति कार्य्यसमर्था भूत्वा संस्कृतवाङ्मयगौरवं प्रकाशयितुं प्राचीनं गौरवं वर्द्धयितुं च समर्थाः भवेयुरिति।



# अहो शिक्षाविभागे प्रान्तीयता !

चाणक्यप्रभृतिभी राजशासनवेदिभिर्विद्वद्भिश्चन्द्रगुप्ताशोकप्रभृतिभिर्महामान्यनृपतिभिश्च भारतं विशालभारतं कर्तुं सर्वथा प्रयतितम्। मध्ये मध्ये च विच्छिन्नमपि भारतम् बहुधा एक-सूत्रसम्बद्धमेवाधिकमवलोक्यते। पूर्वन्तु चक्रवर्तिराजसमूहसमये तु भारतमिदं बहुविस्तृतमासीत्। इन्द्रप्रस्थम् पाटलिपुत्रमित्यादिकमेकमेव भारतमात्रस्य शासनकेन्द्रस्थानमासीत्। परन्तु सम्प्रति एकसूत्रसम्बद्धमेकराजशासितमपि एकादशभिः प्रान्तैर्विभक्तमस्ति भारतम्। भवतु नाम, शासन-सौकर्य्याय प्रान्तविभागः। परन्तु प्रान्तविभागोऽयं चिर्भिटकफलवत्स्यात्तर्हि तु भारतीयं कल्याणं भावि, न तु जम्बीरफलवदुपरित ऐक्येऽपि आभ्यन्तरीणभेदे भारतीयं मङ्गलं भविष्यति। तत्रापि शिक्षाविभागे प्रान्तीयविचारणया वैदुष्यविनाश एव निश्चितः। प्राक्तने काले तक्षशिलानिवासी पाणिनिः पाटलिपुत्रेऽध्यापको बभूव। गोनर्ददेशीयोऽपि पतञ्जलिः पुष्पपुर्याम-ध्यापयामास। अद्यावधि काश्यामपि सर्वत्रैव संस्कृतविद्यालय-महाविद्यालयेषु वङ्गीया मैथिला उत्कला दाक्षिणात्याः पाञ्चालाः सर्वं एव देशदेशान्तरस्थाः विद्यावारिधयो विद्वांसोऽध्यापका भवन्तिस्म। प्रान्तीयताविचारस्य तु गन्धोऽपि नासीत्! अद्यत्वे श्रूयते यदियं काशी युक्तप्रान्तीया नगरीति संयुक्तप्रान्तीया एव विद्वांसः इहापि शिक्षासंस्थासु विनियुक्ता भविष्यन्तीति। परन्तु अस्माकम् सम्मतौ तु नायं पन्थाः साधीयान् भाति। यतो हि प्रथमतः शिक्षासंस्था प्रान्तीयभेदवादेन विमुक्तैव विधातव्या। तत्रापि काशीयं सर्वेषामेव भारतवासिनां शिक्षास्थानम्, अत्र तु प्रान्तीयताविचारस्यांकुरोद्गम एवानुचितः। शिक्षासंस्थासु प्रान्तीयताविचारणया योग्यविदुषामनादरेण सहैव पाण्डित्य-प्रकर्षस्यापि अवसादो भविष्यति। सम्प्रति तु अध्यापनक्षेत्रस्य विस्तीर्णतया विदुषां परस्परप्रतिस्पर्द्धितया पाण्डित्यप्रकर्षमासादयितुमवसरोऽप्युपलभ्यते। प्रान्तीयतासङ्कोचविचारणया तु अध्यापनस्थानादिक्षेत्रसङ्कोचेनावश्यं वैदुष्य-सङ्कोचः समुपस्थितो भविष्यति, इति संस्कृतविदुषांकृते असह्योऽयं शास-कानां शिक्षाविषये प्रान्तीयताप्रतिबन्धः। अस्मिन् विषयेऽस्माकं पूर्वाचार्या डिण्डिमनादं व्याजह्रुः। तथाहि—

"दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्।" इति।

अतश्च संक्षेपेणैव वयं प्रान्तीयशिक्षासचिवं सम्बोधयामो यद् कथ-मपि शिक्षासंस्थासु प्रान्तीयताप्रतिबन्धो न निवेशनीयः। काश्यान्तु सुतरां तदभावः करणीय एव। काशी खलु सर्वेषां प्रान्तीयानां मान्या संस्कृतशिक्षायाः

सर्वाभ्यर्हितं स्थानं भारतवर्षस्य ज्ञानकेन्द्रं विद्यते। किं बहुना उक्तं हि केनचन कविना—

"पुरी श्रेष्ठा तीर्थराजी जित्वरी च तपःस्थली।
काशी वाराणसी काशिर्वरणासी वराणसी" ॥

सर्वश्रेष्ठाया अस्याः पुर्या गौरवरक्षायै तथा सम्प्रति सर्वदेशस्था एव विद्वांस इहागत्याधीयते तेषां सर्वेषामेवास्यां काश्यां यथाऽध्ययनस्याधिकार स्तथाऽध्यापनस्यापि अधिकारोऽस्त्येवेति निर्विवादसिद्धम्। अतश्चेह संस्कृत-राजकीयविद्यालये ( गवर्नमेण्ट संस्कृतकालेज ) अन्यत्रापि काशीस्थविद्यालय-महाविद्यालयेषु प्रान्तीयताप्रतिवन्धप्रेतस्तु विवेकगन्धधूपेनापसारणीय एव। एकश्चान्यः काशीस्थराजकीयसंस्कृतविद्यालये नवीनो नियमः सम्वृत्तो दृश्यते यदध्यापकयोग्यताया विज्ञापने कियतः कालात् विदुषो वयोऽवस्थाया अपि प्रतिवन्धो नियोजितोऽवलोक्यते यत् त्रिंशद्वर्षतः पूर्ववयस्कस्यैव विदुषोऽध्यापनाय नियुक्तिर्भविष्यति। पञ्चपञ्चाशद्वर्षतः पूर्ववयस्केनैव तत्राध्यापनीयम्। ततःपश्चात् नियमतोऽवकाशग्रहणमेव कर्तव्यमिति। अयमपि प्रतिवन्धः परम्परागतप्रथाविरोधी विद्यते। एतेन नियमेन अध्यापनादि विशेषानुभवरहितानामेव पण्डितानां प्रवेशो भविष्यति। अध्यापनस्य प्रौढतां-सम्पादनसमये एव ततः सम्बन्धविच्छेदो भविष्यति। "अलंकरोति हि जरा बुधमन्त्रचिकित्सकान्" इति प्राचीनोपदेशं विचार्य्य विमर्शनीयो योऽयं विषयः सम्प्रति सर्वेषां संस्कृतभाषाभ्युदयाभिलाषिणामित्यहो शिक्षाविभागे प्रान्तीयता।

## श्रीमतां बालकृष्णमहोदयानामभिनन्दनम्।

अस्मिन् हायने भारतशासकमहोदयैर्द्वौ संस्कृत-विद्वांसौ महामहोपाध्याय-पदेन भूषितौ। तत्रैके स्वनामधन्याः पण्डितसम्राजः श्री पण्डित बालकृष्णमिश्र महोदया हिन्दू विश्वविद्यालयीयसंस्कृतविभागीयप्रधानाध्यक्षाः ( प्रिंसिपल संस्कृत विभाग ) मैथिलाः सन्ति। अन्ये च स्वनामधन्याः केचन मद्रासप्रान्तस्थाः।

द्वितीयैर्विद्वद्भिस्तु नास्ति विशेषपरिचयोऽस्माकम्। किन्तु श्रीबालकृष्ण-महोदयाँस्तु पूर्वत एव वयं जानीमः। इमे महोदयाः पाण्डित्ये मिथिलायां वाचस्पतिमिश्रान् संस्मारयन्ति। प्रत्युत अत्रविषये कालिदासीयं पद्यमेवेत्थं पठितं स्यात्तर्हि साधु स्यात्—

'मन्दोत्कण्ठाः कृताः सर्वेऽनेन वाचस्पतौ गुरौ।
फलेऽपि सहकारस्य पुष्पोद्गम इवाधुना ॥

किम्बहुना मिश्रमहोदया यथा पाण्डित्ये सम्राज स्तथैव शीले सदाचारे भारतीय-प्राचीनसंस्कृतिरक्षायाम्। एतेषां पाठनपद्धतिस्तु अपूर्वा विद्यते। वेदान्तविषयस्य प्रधानाध्यापकाः सन्तोऽपि इमे साहित्यं वा न्यायं वा यं कमपि विषयमध्यापयन्ति तस्य प्रतिपादनेऽन्तेवासिनां पुरतो भावमयं चित्रमेवोपस्थापयन्ति। इत्थम्भूता एव विद्वांसः —

'भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित् प्रकाशताम्॥

इतिपद्यस्योदाहरणानि। किम्बहुना एतेषां विशिष्टाऽध्यापनशैली शिष्येषु प्रसिद्धा विद्यते। अत एवेमे श्रीकाशीपण्डितसभया 'पण्डित सम्राडितिपदव्या पूर्वत एव समलङ्कृता विद्यन्ते। सम्प्रति तु भारतसम्राड् एभ्यो महामहोपाध्याय-पदवीं वितीर्य्य तां स्वीयां पदवीमेव विभूषितवान्। यतो हि इत्थम्भूतैरेव विद्वद्भिरस्याः पदव्या गौरवं समेधते। अस्तु—साम्प्रतम्-सनातनधर्म-संरक्षणपरेभ्यः एभ्यः साधुवादप्रदानपुरस्सरम् एषां दीर्घजीवनं कामयामहे।

———

### भ्रमसंशोधनम्

अत्राङ्के १८५ पृष्ठे मुद्रिते पं० प्राणजीवनशास्त्रिकृते काशीस्तवेऽन्तिम-पद्यस्योत्तरदलं—

"कुसुमाञ्जलिवच्छम्भोः पादयोरुपदीयताम्"॥

इति संशोध्य पठनीयम्। पूर्वोक्तं भ्रमवशान्मुद्रितमिति
( स० सम्पादकः )

## अजगरेण जीवन्नेव बालको भक्षितः।

"बरहमपुर"स्यैष सम्बादो वर्तते यदेको बालकः प्रायेण पाठशालातः पलायते स्म। अतः स एकदाऽध्यापकेन गृहीत्वा एकस्मिन् प्रकोष्ठे पिहितः। अल्पीयसा कालेन प्रकोष्ठात् "साँप साँप" इति शब्दः श्रुतः। परमध्यापको बालकस्य धूर्ततां मत्वा तत्र ध्यानं न दत्तवान्। परन्तु किञ्चित्कालानन्तरमेव चीत्कारमेकं श्रुत्वा यदा कपाटमुद्घाटितं तदा बालकोऽजगरमुखे पतितो लब्धः। अजगरो हतः परं बालकोऽपि मृत एवासीत्।

× × + ×

## संगृहीत-समाचाराः ।

श्रूयते यत् विहारप्रान्तीयशासकद्वारा अशिक्षां समूलमुन्मूलयितुं शिक्षाप्रचाराय १०० ०००) रूप्यकाणां साहाय्यं स्थिरीकृतम् ।

दैशिक-चिकित्सा-पद्धति-प्रोत्साहनस्य नीतिमनुसरता विहारसर्वकारेण पटना आयुर्वैदिकस्कूल, पटना तिब्बियास्कूल इत्येताभ्यां २७ सहस्राणि रूप्यकाणि समर्पितानि ।

× × × ×

श्रूयते अक्टूबरमासे श्रीमान् वायसराय महोदयः श्रीनगरे गमिष्यति । तत्र च श्रीमतः काश्मीरनरेशस्य प्राघुणिको भूत्वा स्थास्यति ।

× × × ×

मथुरायां गोवधनिरोधार्थं ५००० सत्याग्रहिणः साधवस्तत्पराः सन्ति । कथ्यते यत् १८०५ ईशवीये ईष्टइण्डिया कम्पनीसरकारस्य सेनापतिः श्रीलार्ड-लेकसाहवो घोषणां कृतवान् यन्मथुरायां तत्समीपे च यः कोऽपि गोवधं करिष्यति तस्मै कठोरो दण्डो दास्यते इति । एतत्पूरणार्थमेव साधूनां महानाग्रहो वर्तते ।

× × × ×

समाचारपत्रात् ज्ञातमेतत्—मध्यप्रदेशीय प्रधानमन्त्री व्यवस्थापक-सभायां यौतुक-( तिलकदहेज ) निरोधार्थं प्रस्तावमुपस्थापयितुं निश्चितवान् । प्रस्तावस्यास्य इदमुद्देश्यं वर्तते यत् ये जना यौतुकम् ( तिलकदहेजं ) ग्रहीष्यन्ति ते दण्डभागिनो भविष्यन्ति ।

× × × ×

चीनीभाषाया एको महान् कोषः साम्प्रतमेव सम्पूर्णतामगात् । अस्य सम्पादको हूनाननिवासी फूतिगंची त्रिंशद्वर्षाणां सततपरिश्रमेण कोशमिमं सम्पादितवान् । अस्य ८५ भागाः सन्ति । अत्र ४५ लक्षशब्दानां समावेशो वर्तते ।

× × × ×

स्विट्जरलैण्डे सम्प्रति ईदृशानि घटीयन्त्राणि निर्मीयन्ते येषु समयज्ञानार्थमेकद्वित्रिप्रभृतयोऽङ्का न वर्तन्ते । समयज्ञानार्थं तत्र यदा एका बोटिका ( बटन ) दाम्यते तदा घटीयन्त्रं स्वयमेव समयं वदति ।

× × × ×

# सभापतेरभिभाषणम्।

[ अखिल भारतीय सनातन विद्वत् परिषदि १९३७ इस्वीये मद्रास नगरे श्रीमत् परमहंसपरिव्राजकाचार्य श्रीसम्पत्कुमार रामानुजजीरस्वामिनां यदुगिरि यतिराजमठाधीशानां (मेलकोट मैसोर) ]

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥
स्मृते सकलकल्याण भाजनं यत्र जायते।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥
अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः।
श्वः श्वः पापिष्ठदिवसाः पृथिवी गतयौवना॥

अपि नाम स कालः पुनरस्मानुपसीदेत् यस्मिन् नः पूर्वपुरुषाः दैवीं वाचमाचारयन्तः अविप्लुतमर्यादाः स्वस्वधर्मप्रवणचातुर्वर्ण्यसुभगाम् इमां भारतीं भुवं मण्डयन्तः उभौ लोकौ सञ्चिन्वाना आसन्। हन्त, हन्त सोऽपि गतः, सापि गता, तेऽपि गता गह्वरम्। क्व नाम पश्येम अविरतवेदाध्ययन-मुखरितानि ब्राह्मणकुलानि। क्व नु वा साक्षात्कलयेम धर्मद्रुहां विध्वंसनाय समुद्यतशस्त्रं क्षत्रम्। क्व वापि अनुपश्यन्तः निर्विशाम विगतक्लेशं विततसन्निवेशं वेशम्। क्व च वा नन्दयेम पूर्ववर्णावरिवस्याचरितार्थं चतुर्थं सार्थम्।

अपि नाम पुनरप्युत्पत्स्यते ऐदंयुगीनो मयूरवर्मा, यो ब्राह्मणकुलावमान-नामसहमानः अपर इव रामो भार्गवः दुष्टराजन्यनिबर्हणाय समित्कुशाज्यचरु-पूतेन पाणिना समुद्बबर्ह शस्त्रं, शर्मपदं परित्यज्य वर्मपदमधत्त। सर्वथा वन्ध्येयं वसुधा नैव प्रसूते तान् पुरुषप्रवरान्, ये संवर्मयन्ति स्वानि तेजांसि चापाय शापाय वा।

तदेवं परिणमति कलेः कलेवरे, अन्तरमासाद्य पर्यन्तापरान्तदेशवर्तिनः दंशिता यवनाः कतिकृत्वः इमां भारतीं भुवं न रुरुधुः? कति कति च ऐश्वर्यं नापजह्रुः? कति कति वा देवकुलानि न चिच्छिदुः? कति कति प्रजाः न निजघ्नुः? कति कति वा ताः स्वधर्मात् न भ्रंशयाञ्चक्रुः? सर्वमिदं विमुख-विधिप्रतिषिद्धबले मिषत्येव ब्रह्मक्षत्रकुले संवृत्तम्। अपि स्मर्यते स वटविटपी

यः सितासितयोस्सरितोस्संभेदस्य साक्षी, यं च सा भगवती जगन्माता सीता रामचन्द्रेण भर्त्रा सह वनं प्रविष्टा प्रार्थयामास निरवद्यतया पुनरयोध्याधिगमाय। अपि तस्य बुध्नवासितायाः मृत्स्नायाः अवशिष्यते कणिकापि? अपि नाम दृशां गोचरीभवत्यधिष्ठानवेदिका वा सोमनाथस्य? किं बहुना कलेः कोलाहलमनुस्मृत्य? एवमपि मिथस्संघर्षेण बहुधा विक्षतमपि क्षत्रं ब्राह्मेण सहकारिणा तेजसा समुज्जृंभितबाहुवीर्यं प्रातिवेशिकसंविभागेन तद्यवनबलं पर्यवस्थाप्य, उद्धृष्टतेजितमिव शस्त्रं क्षत्रं सयुजा ब्राह्मेण धाम्ना सन्धुक्षितं अविपर्यासितवर्णाचारसमासन्निवेशं महीं पालयदासीत्।

इत्थं व्यतिवर्तमाने कालकदम्बके, दैवदुर्विपाकात् क्षत्रकुले विषयोपभोगैकान्तस्वान्ते सुदूरविस्मृतनिजवीर्योष्मणि नखलावकशस्त्रधारणायापि असमर्थौ भुजौ भस्त्राप्रायौ बिभ्राणे, अवजानानक्षत्रानुवृत्तिव्यत्ययप्रवृद्धान्तरायान्तरितनिजव्यवसितनिह्नुततेजसि ब्राह्मे सन्ताने, अकर्णधारधारणविशीर्णे विशंकटसंकटगर्तावर्तपातिनि जातत्रासे प्रजानिवासे अत्रान्तरयर्गेदुर्गते भारते मण्डले, वाणिज्यच्छलेन समागतं यूरोपखंडस्थद्वीपिराजप्रतिनिधिकुलं भिक्षुपादप्रसारणन्यायेनान्तः प्रविश्य उष्ट्रग्रीवानिवेशनयेन पर्णकुटीमिवोन्क्षिप्य विक्षिप्य भारतीमिमां वसुसतीं अहिभयजर्जरां विधाय मात्स्यं न्यायं वारुणीं दण्डनीतिं च प्रसार्य, निश्शस्त्रवीरसंप्रातं नित्योद्वेगनिश्वासधूसरं प्रजासमुदयमवष्टभ्य आधिराज्यमनुभवत् अप्रतिशासनं गड्डुरिकावर्तमावर्तयति तदेतन्मण्डलम्॥

हृताश्च राशयः मणिकनकादीनां कुप्यजातानां बाह्यवर्तिनाम्। किमितः परमावेद्यताम्! वसुन्धरागर्भनिगूढानां खनीनां हृदयगताः सुवर्णरेणवोऽपि निरवशेषं उत्पाट्य नीताः निजनिवासद्वीपम्। इतश्चान्विष्य विदार्यन्ते हृदयानी वास्माकं खनिस्थलानि। अलमलमावेद्य, सर्वः प्रजानिकायः चव्यासधर्मा समावेशितः।

किं बहुना राक्षस्यो वाचः श्रूयन्ते, विकृतानि रूपाणि दृश्यन्ते, वर्णाश्रमधर्ममर्मभेदीणि कर्माणि निर्मीयन्ते। अवस्कन्दयोः द्वयोरिदमन्तरं अनिगदविशदमध्यवसीयते—

यथा—आद्ये भारतस्य सहजो भावो नापहृतः। प्रत्युत शारीरं बाह्यकम् अपहृतं अपविद्धं च। द्वितीयेऽस्मिन् आन्तरोऽपि धार्मिकः भावः अपहृतः विपरीतश्चाधिष्ठापितः। आन्तरं बाह्यकमपि सत्त्वं पीतमुन्मूलितं च। वैदेशिकानां प्रजानां सर्वा अपि समारंभाः इन्द्रियगोचरेषु बाह्यवस्तुष्वेव ऐकान्त्येन प्रवृत्ताः। तेभ्यः वस्तुभ्यः स्वेन्द्रियाण्याप्यायनमनुभवन्तः तावन्नैव

तृप्ताः विश्राम्यन्ति। स्वहितप्रतिबन्धकेभ्यः न केवलमुदासीनः प्रत्युत समूलमुन्मूलयितुं संरभन्ते चतुर्भिरप्युपायैः। सर्वा अपि आसां प्रवृत्तिः नाध्यात्मिके वर्त्मनि मनागपि पदं निदधाति। विषयोपभोगेषु द्वयी गतिरिन्द्रियाणां राजसी तामसी चेति। आद्या तु उपर्युपरि विषयाणामनुभवात् कालदेशावस्थादिषु विलंबमन्तरं चासहमाना विषयतृष्णामुल्बणां जनयन्ती अचेतितमालामालं अभिसर्पन्ती प्रतिपत्तलेशमपि न सहते।

द्वितीया तु तृष्णान्धितचेतसां विवेकं आच्छादयन्ती चेतनां व्यामोह्य निरालोके निपातयति। पाश्चात्या तु प्रवृत्तिः आभ्यामुभाभ्यामेव नान्तरीयकाभ्यां साम्राज्यमश्नुवाना दृश्यते।

ईदृशी प्रवृत्तिः धर्मतयाभिमता अविरतं उद्वेलतया अनुभूयमानापि न स्थास्नुतामवलंबते। प्रत्युत विद्युदुद्योत इव छत्राकप्रादुर्भाव इव क्षणमात्रप्रकाशो भवति।

भारतीयवर्णाश्रमधर्मस्तु प्रकृतिप्राकृतेष्वेव प्रवर्तमानोऽपि सत्त्वप्रधानतया शान्तिमयः विवेकादिसप्तकसहकृतः नापि घोरतां मूढतां वा प्रतिपद्यते। किन्तु स्वनिष्ठान् तदनुवर्तिनश्च चेतनान् उभयलोकाविरोधिनं मार्गं नयन् न केवलमात्मानं नापि स्वानुष्ठातॄन् न वाप्यनुमोदकान् नैकं जनपदं प्रत्युत सर्वमेव भूमण्डल मेरुशिखरसीमानं प्रापयति। अन्येषां जनपदानां जनानां च अनितरसुलभां आदर्शतां च अवलम्बते। एवंविधस्य निरवद्यतमस्य श्रुतिसिद्धस्य कःपशतानुष्ठीयमानस्य रहस्यमविन्दानाःअ नभ्यस्तगुरुपरिचर्याः प्राकृतजनानुवर्तनप्रमुषितप्रज्ञालोकाः स्वपूर्वपुरुषप्रवर्तितं तमिमं धर्मं कीदृगित्यपि अविविञ्चानाः अशिक्षितानां भ्रमं जनयन्तः असमीचीनैरुपदेशैः नापि फलं समीचीनं लभन्ते। नाप्यन्यान् लम्भयन्ति।

आजानानुवृत्तहार्दराजानुवृत्तिशीलाः ते वयमिमे संप्रति विडंबनानाहतं जीवितमेव धारयामः। एवमप्रतीकारदारुणे दैवदुर्विपाके वानीरस्रोतस्संपातनयेन राजानुवर्तनादिभिः सामयिकैरुपायैः दैवमभिमुखमात्मनि अनुसन्दधाने अवनतशिरसि दैनन्दिनं व्यापारमनुतिष्ठति सति प्रजावर्गे, मेधाविनः दूरदर्शिनः केचन अपरिशीलितवर्णाश्रमममर्माणो भारतीयप्रजाऽननुगुणेन अधरोत्तरक्रमेण शासनेन सांप्रतिकराजकुलेन क्रियमाणां प्रशासनप्रणालीं स्वहितस्वाभ्युदयस्व समयाचारविरोधिनीमनुचिन्त्य विरुद्धप्रकारमपनुद्य, अनुकूलपर्वक्रमसमाहितां कारयितुं सयूथ्यानुमतां कांचन सभामाबध्य उद्दिधुमुट्टंकयन्त आसन्। अथ

नियतावधिकालानुभाव्यसभ्यभावेषु प्राक्तनेषु निवृत्तेषु, आबाल्यात् विधर्मिवैदेशिकजननिरन्तरानुवर्तनगाढनिरूढतदीयवेषभाषाहारादिस्वच्छन्दचेष्टितेषु, चिरनिर्मुष्टस्वर्णाचारतया सन्ततानुवर्तनग्रन्थिततद्भावभावनेषु अननुमन्यमानस्वानुष्ठानविमुखस्वकुलजनतासमयाचारविध्वंसनोपयिकजातिसांकर्यविधानोद्दीपितगाढाभिसन्धिकालकूटेषु नवीनेषु सभ्येषु प्रविष्टेषु निजाभिसन्धिविषमुद्गिरत्सु सुदूरमारोप्य शैलशिखरात्पातितेव कशाभिहतेव दूयमाना, संस्तभ्य आत्मानं निजां जनतां समूह्य सनातनधर्मप्रवणां प्रजाश्रेणीं महतीं सभां निर्माय शर्मावहां, कुलद्रोहिसभाभिसंरम्भविजृम्भितानि उच्छिन्दती निरवद्यस्वधर्मप्रचारेण नन्दयति अखिलमेव भारतं वलयम् ॥

अस्मिन् एव अभ्यन्तरे अध्यक्षराजकुलं कुतोऽपि हेतोः अनुद्भिन्नगभीरेणाभिसन्धिना इदं भारतं मण्डलं कतिपयधा खण्डमण्डलतया विभज्य तत्र तत्र तत्तन्मण्डलस्य प्रजानुमत्या समुच्चितानां पुरुषाणां खंडमण्डलप्रशासनाधिकारं सांकुशं दीयमानमासूत्र्य अंकुशं स्वहस्ते धृत्वा व्याघोषयति स्म। तदनुसारेण सरभसं कृते तदुचिते कार्ये चिररूढतया कतिपयेषु खंडमण्डलेषु म्लेच्छानां शासनाधिकारः प्राप्तः। अपरेषु मंडलेषु स्वकुलधर्मद्रोहिपुरुषाणामधिकारः प्राप्तः। त एते "कपिरपि च कापिशायनमदमत्तः" इतिन्यायानुसारेण मंडलानुशासनाधिकारबलेन जगदेव तृणाय मन्यमानाः अधिराजमन्त्रिसभायां स्वीयान् सभ्यतयानुप्रवेश्य तन्मुखेन सनातनवर्णाश्रमधर्मसंकरकरणाय भिग्रहं राजशासनानुमतं विधातुं संरभमाणाः प्रयतन्ते।

भगवता वासुदेवेन "संकरो नरकायैव" इत्यनुशासितम्। वर्णाश्रमधर्मसौनिकसभ्यास्तु "संकरः स्वार्थायैव" इत्युपदिशन्तः तथा कुर्वन्ति कारयन्ति च।

तमिमं संवर्तगर्तसंपातात् वर्णाश्रमधर्मं त्रातुं प्रवृत्ता पुरोवर्तिनी इयं महती सभा नः चक्षुरान्तरं बाह्यं च समुन्मील्याह्लादयति। सभ्याश्चेमे सनातनधर्मसंशीलनप्रसवैरमृताक्षरैः श्रवांसि स्नपयन्ति। इतोऽग्रे परमात्मशक्त्युपबृंहिता सौनिकसभासंरम्भमास्कन्द्य प्रशासितृराजकुलप्रसादपात्रभूता विजयिनी अचिरेणैव कालेन विजयध्वजस्तंभं न खलु न नाम समुत्तंभयति। कर्तव्यवस्तुसंग्रहः किञ्चिदावेद्यते। स तु द्विधा विभज्यते—

तत्राद्यः—ग्राम-खर्वट-खेटक-मण्डल-नगर-जनपदेषु सभां विधाय पूर्वपूर्वसभानिर्णीतानामर्थानामुत्तरोत्तरसभासु निरुह्य मूर्धन्यसभायां सिद्धान्तितानां विषयाणां प्रतिच्छन्दस्य अधिराजसभायै प्रेषणं वृत्तान्तपत्रेषु प्रकटनम्।

द्वितीयः — पूर्वोक्तसभापर्वक्रमेण संसूचितेषु प्रतिनिधिषु मूर्धन्यसभायां बहुजनसम्मत्या समुचितान् पुरुषप्रवरान् अधिराजसभायां सभ्यत्वेनानुमान्य तन्मुखेन संशप्तकसभाकूटनीतिवैशसखंडनपूर्वकं सनातनधर्मसंरक्षणविषय-सूचनानां अनुशासनधाराधिरोपणेन खंडमंडलेषु प्रचारणाय अधिराजप्रतिनिधि-सकाशात् अनुमत्यभयसंपादनम्।

एवमिदं प्रधानं कार्यद्वयम्—

आद्ये अवान्तरविषयाः-प्रशस्तवाग्मिभिः तत्र तत्र सनातनधर्माणां उपन्यासाः शास्त्रापार्थानां प्रत्याख्यानेन वास्तवार्थाविष्करणम्। अस्मदीय-बालिकाबालकानां वैदेशिकदुर्व्यवस्थानिष्पन्नपाठशालातो व्यावर्त्य स्वधर्माविरो-धिपाठशालासु अध्यापनम्।

द्वितीये अवान्तरविषयाः—सौनिकसभ्योपजापितधूर्तप्रवर्त्यमानशारीरा-भिघातप्रतिरोधनाय वालंटियर्नामकतरुणसैनिकयूथनिर्माणम्। इत्यादि सन्दृष्टिकमौदर्किकं यद्यत् कल्याणं संविधानं मेधाविभिः परिचिन्त्य साधितं तत् संपादनीयम् इति।

इदमन्यत् इतस्ततः कर्णकुहरं अवगाहते। यथा — मतत्रयाचार्यपादपीठ-मठाधिपतयः स्वयं सन्निदध्युः, विद्वद्वरान् प्रेषयेयुः, शिष्यान् चोदयेयुः शास्त्रार्थाद्युपकरणसामग्रीसमुपढौकनेन सभामिमां तेजिष्ठां उपबृंहयेयुरिति किंवदन्ती। संपुष्पितानां वृक्षाणामिव आमोदः दूरे स्थितानामपि आचार्यपा-दानां महामहिम्नां अनुकंपया प्रेषिताः शास्त्रार्थोपकरणपाणयः विद्वद्वतंसाः सन्निधाय इमां सुरभयन्ति सभाम्। एवमियं प्राणपणेनापि वर्णाश्रमधर्माचारान् निरपायतया समुज्जृंभयितुं अच्छलवृत्तिभिः सभ्यैर्दूरदर्शिभिरुपचीयमाना उपस्थानप्रसन्नेन भगवता सहस्रकरेण कुदृष्टिकुहनागहनमान्धकारमुच्छिद्य प्रदीयमानप्रत्यग्दृष्टिकरावलंबा सुखालोके पथि संचरमाणा तेनैव भगवता निजमंडलमध्यवर्तिनः उदितिनाम्नः पुंडरीकाक्षस्य अनुग्रहमाविर्भावयता प्रचोद्य-मानया कल्पं करोत्यस्मानजितान्।

अनुदिनमेवमुपतिष्ठामहे—

पश्येम शरदश्शतं जीवेम शरदश्शतं नन्दाम शरदश्शतं
मोदाम शरदश्शतं भवाम शरदश्शतं शृणवाम शरदःशतं
प्रब्रवाम शरदश्शतं अजिताः स्याम शरदश्शतम् इति।

दुःशिक्षात्यरदुर्विदग्धहृदयव्यावर्धितेर्ष्यानल-
ज्वालोद्गलनपूर्वरङ्गपिशुनैर्दुर्वर्णधूमोद्गमैः ।
लोकस्सम्प्रति लोप्यते श्रुतिवचःप्रासादलोकोऽञ्जसा
धिग्धिग्धैव समास्तृणाति जगतीं नीरन्ध्रमन्धं तमः ॥
तदिममर्थं भगवती श्रुतिरस्मानेवमनुशास्ति ।
या सा—उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः ।
राज्ञः सोमस्य तृप्तासः । सूर्येण सयुजोषसः ॥



## अ०भा०महिलासंस्कृतसाहित्यसम्मेलने स्वागताध्यक्षायाः सरस्वत्या भाषणम् ।

श्रीमत्यो महानुभाविन्यः,

यद्यप्यहं युष्मत्प्रदत्तैतत्कार्यभारोद्वहने सर्वथाऽसमर्था ( मन्ये चात्रोपस्थिता मदपेक्षया विदुष्यः सन्ति) परम् "आज्ञा सतां हि नियतं परिपालनीया"। इत्युक्त्या श्रीमतीनाञ्च साहाय्येन महाभारोत्तोलने बद्धपरिकराऽग्रेसरास्म्यधुना, आशासे च निहितकराः श्रीमत्योऽवश्यमेव करिष्यन्ति साहाय्यं येन चाहं सफलसकलकार्यभरा भवेयम् ।

विदितं चैवेदम्प्रलयकालघनघनाक्रामितजगदिवाद्य विविधदुःखसन्तानतानितं भारतम्, महामारुतप्रकम्पितशाखिशाखाजातमिव पाश्चात्यझञ्झावातप्रचालितं भारतम्, भूकम्पकम्पिताशेषधरातले चाद्य दोलायते भारतधर्मः; हाहाकारहुंकारार्तं भारतं सर्वत्रैव शुखदास्ते ।

दुःखेनोच्यते यद्भारतं भारतं नास्ति । नहि च भारतवासिनः भारतवासिन्यः भारतीयसभ्यता भारतस्य, भारतीयरागरक्तिमारक्तं साम्प्रतमन्यरागरक्तम् अस्मदाचारव्यवहारपद्धत्यपेक्षया साम्प्रतमन्याचारव्यवहारपद्धति र्लक्ष्यते भारते ! इदमेवात्र कारणं यदद्य वयं सर्वभाषोत्पादिकां माधुर्यादिगुणापेतां पूजितां देवदनुजमनुजवृन्दैः स्वराष्ट्रियसंस्कृतभाषां विहाय मृगतृष्णयैवेतश्चेतश्च भ्रमामः । एषा सा संस्कृतभाषा यस्यां वेदाविर्भावः, पुराणानां रचना दर्शनादीनि पुस्तकानि, स्मृत्यादयश्चोत्तमोत्तमा धर्मग्रन्थाः प्रकाशयन्ति स्वप्रकाशेन सकलं जगत्, या हि स्वयं स्वयम्भूमुखादाविर्भूता

गीर्वाणवाणीत्युच्यते यथैव जगद्गीर्वाणसमं भवति तां विहाय किमस्माकीनाऽवस्था सुखकरा भविष्यति नहि चैतत्कदापि भवितुम् अर्हति? किं स्वराष्ट्रियवस्तु परित्यागेन राष्ट्रं सुखयुतं भवति ? नहि सर्वथाऽसुखयुतं भवति ।

विमृशन्तु श्रीमत्यः संस्कृतं विनाद्य भारतधर्मोऽधर्मे परिणतः । अस्मदीय वेशादिसामग्र्यापि अन्यदेशीया स्वदेशाश्रितसामग्रीरेव विहायान्यदेशवेशादिनाऽन्या एव भूताःस्मः, अद्यास्मदीय मानप्रतिष्ठा परिमाणे एव प्रतिष्ठिता ।

स्वमर्यादा धूलिधूसरितैव लक्ष्यते, परित्यक्तमातृक इवाधुना सर्वथा कष्टप्रदाऽवस्था भारते न हिं चाच्छन्नैषा वार्ता यत् कोऽपि स्ववासं विहाय अन्यगृहमाश्रयते किं तत्र स सुखी एषैवावस्थाऽस्मद्देशस्थानां, परं पुनरपि वयं दुःखाग्निदग्धाः गृहौषधिसेवनसंलग्नमात्मानं पश्यामः,

हर्षेण चोच्यते सत्सु महाकष्टेष्वपि साम्प्रतं स्त्रीसमाजं संस्कृतोन्नतिपथदृष्टनिश्चयं पश्यामः । अस्मिन्नेव हर्षकर्मणि महिलासंस्कृतसाहित्यसम्मेलनमपि प्रमोदयत्यस्मन्मनः, कुसुमाकरामोदमुदित भ्रमर इव प्रमोदयत्यस्मच्चक्षूंषि । उचितञ्चैतत् यत्प्रत्येक महिला संस्कृताध्ययनाय प्रतिज्ञां कुर्य्यात् । वेदितव्यञ्च श्रीमतीभिर्यद् भारतवर्षे स्त्रीसमाज एव सर्वार्थप्रसाधकः, किं न शिवाजिवीरेण स्वधर्मरक्षा कृता निजमातृशिक्षया, गुरुगोविन्दसिंहोऽपि स्वमातृशिक्षामनुचरन् स्वदेशाचाररक्षायै सपुत्रः किं प्राणान्नात्याक्षीत्? किं हकीकतेनापि स्वप्राणाहुतिर्नादायि स्वाभिमानरक्षां कुर्वता, केवलं पठितमातॄणां शिक्षैवात्र हेतुः, किं नाद्य पद्मिनीचित्रचित्रितं जगत् दुर्गावती दुर्गया किं न खण्डितं दुष्टान्धकारं, संस्कृतसंस्कृतात्मभारतललनानां नामग्रहणेनैव पापानि नश्यन्ति । किमु दर्शनेन वाच्यम्, क्वाद्य गार्ग्या दर्शनम् यस्याः संमुखे ब्रह्मवित्याज्ञवल्क्योऽपि नतमस्तको बभूव कुत्राद्यात्रेयीति याभिर्भारतललना उन्नतमस्तका हिमालयशृङ्गामिव जाताः । भगिन्यः ! समागतः समय आह्वयत्यधुनाऽस्मान् संस्कृतच्छत्रच्छायाया अधः, दुःखविलास विलसितां भारतीयदुर्दशां दूरीकर्त्तुमावश्यकताधुना स्त्रीसमाजे देववाण्याः ।

यतो हि स्त्रिय एव समर्थाः सर्वथा स्वदेशोन्नतिं विधातुम् । चेद्भारते स्त्रीसमाजस्य संस्कृतभाषायामत्यादरः स्यात् निश्चयेनैव तदा स्वदेशोन्नतिः, स्वभाषोल्लासः, स्वनीतिविकासः, स्वगौरवम् ! स्वमानमर्यादा तादृश्येव स्यात् यादृशी सत्ययुगादिकालेऽभूत् । आगच्छन्तु, श्रीमत्यः ! समय एवायं संस्कृतसेवायाः, ! यया वर्षपूर्वकालिकीमवस्थां प्राप्स्यामः, प्रकाशयामो

जगति यत् स्त्रीसमाज एव देशोन्नतिहेतुः । अनया च स्वोक्त्या साम्प्रतं स्ववक्तव्यमुपसंहरामि, आशासे च सम्मेलनमिदं सत्ययुगसमयमानेष्यति, यत्र च वयं मकरन्दमुदित भ्रमरावलय इव मुदिताः सर्वदैव धर्मानुचारिण्यः सुखगृह-कर्मरताः स्याम ।

प्रार्थिका—सत्यवती (महीन्द्रा) प्रिंसिपल, श्रीकृष्णकन्यामहाविद्यालयस्य, अमृतसरस्य ।

अखिलभारतीयमहिलासंस्कृतसम्मेलने स्वीकृताः प्रस्तावाः—

१—अखिलभारतीयमहिलासंस्कृतसम्मेलनमिदं स्थायि सम्मेलनं स्यात् प्रधानकार्यालयश्च सम्प्रति अमृतसरसि ।

२—भारतीयसंस्कृतिसंरक्षणाय स्त्रीशिक्षायां संस्कृतभाषाया ज्ञानं परमावश्यकं तत्कृते सर्वेषु कन्याविद्यालयेषु संस्कृतभाषाया अध्ययनाध्यापन-प्रबन्धो नितान्तमावश्यकः ।

३—सम्मेलनमिदमाशास्ते यत्प्रतिनगरं विदुष्यो विद्वांसश्च महिला संस्कृतसमितीः संस्थाप्य संस्कृतभाषाप्रचारे महिलासंस्कृतसम्मेलनस्योद्देश्य-पूर्तिं कुर्युः ।

४—सम्मेलनमिदं संस्कृतभाषाप्रचारकेभ्यः कन्यामहाविद्यालयेभ्यः स्वी-यान् धन्यवादान् समर्पयति तेषां सुसमुन्नतिं च कामयते ।

श्रीमत्याः प्रमिलादेव्याः लेखः परममनोहरो भावपूर्णश्चासीन् महानुभा-वाया लेखं शीघ्रमेव प्रकाशयिष्यामः ।



## अखिलभारतवर्षीयसंस्कृतच्छात्रसम्मेलने स्वीकृताः प्रस्तावाः—

१—भारतीयसंस्कृतपरीक्षासमितीनां परस्परं सम्बन्धः स्थापनीयः, येन एकत्र परीक्षोत्तीर्णश्छात्रः अन्यत्र तदुच्चपरीक्षां दातुं शक्नुयात् ।

२—साम्प्रतिकी शिक्षापद्धतिः छात्राणां सर्वथा देशकालसमाजानुपयोगिनी अतः तत्परिवर्त्तनं परमावश्यकम् ।

भूगोलेतिहास-राजनीति-अर्थशास्त्रादीनामनिवार्यः परीक्षायां सन्निवेशः । औद्योगिकशिक्षणमपि सर्वविद्यालयेषु शिक्षणीयं येन छात्राः स्वतन्त्रं जीविका-निर्वाहं कर्तुं प्रभवन्तु । तत्र चित्रकलावास्तुकलाशिल्पशास्त्रज्योतिषवैद्यक-कर्मकाण्डादीनामर्थसाधकानां विषयाणां शिक्षणम् । व्यायामादिकस्य शिक्षणेन सह सन्निवेशः ।

३—काशीस्थराजकीय-संस्कृतमहाविद्यालयकाशीहिन्दूविश्वविद्यालादिषु परीक्षायां द्वादशवर्षात्मकं संस्कृतशिक्षणं छात्राणां सर्वथानुपयोगि तद्यथा-सम्भवं न्यूनं करणीयम् ।

४—विद्यालयाधिकारिभिः प्रतिविद्यालयं पुस्तकालयवाचनालयानां स्थापनमावश्यकम् । तत्र छात्रोपयोगि साहित्यसंकलनं कर्त्तव्यमिति ।

५—पञ्चाम्बुविश्वविद्यालयः संस्कृत-परीक्षार्थिनां छात्राणां परीक्षा-परिणामविवेचनार्थमेकं समितिनिर्माणं कुर्यात् । यस्याः परामर्शमन्तरा छात्रपरीक्षापरिणामप्रकाशनं न स्यादिति पञ्चाम्बुविश्वविद्यालयाधिकारिणः प्रार्थ्यन्ते ।

६—इदमखिलभारतवर्षीय संस्कृतच्छात्रसम्मेलनं प्रचलितस्य स्वाधिकार-प्राप्तिसंग्रामस्य सर्वथा साहाय्यं प्रकाशयति ।

७–अयं अ० भा० सं० छात्रसंघः भारतीयशासकवर्गं प्रान्तीयशासकवर्गं विद्यालयसञ्चालकवर्गं भारतीयधनिकवर्गञ्च प्रार्थयते यत् संस्कृताध्यापकाना-मन्यभाषाध्यापकानामपेक्षयाऽधिकतरं वेतनं स्यात् ।



## गंगाशतकम् ।

लेo—पण्डित नारायणपति त्रिपाठि महोदयः काशीस्थः ।

अये ! जिह्मगे ! जिह्मगं मां जनित्रि !
महाजिह्मगाङ्के नहि स्वापयाम्ब !
कदा स्यामहं जिह्मगाक्रान्तकायस्,
सुखी जिह्मगां धारयन्त्वामजिह्मः ॥ १२२ ॥

भूभृच्छृङ्गात्पतन्ती हहह हहह हैरुच्चनादैर्नदन्ती,
स्वीयोत्तुङ्गैस्तरङ्गैः हिमगिरिशिखरं मार्जयन्ती भ्रमन्ती ।
तापौघान्संहरन्ती जलनिधिसलिलं मिष्टयन्ती मिलन्ती,
भक्तैनः क्षालयन्ती जयतु शिवपुरीं संस्पृशन्ती द्युसिन्धुः ॥१२३॥

मुक्तेर्निदानं बहु ( गुरु ) धर्ममानं,
तीर्थप्रधानं पुरुपुण्यदानम् ।
स्वर्लोकयानं सुखस-(द्युसदा ) न्निधानं,
कलिघ्नगानं मम तेऽम्बुपानम् ॥ १२४ ॥

किं मां कर्षसि दूत ! पाप ! शमनद्वारं निनीषास्यहं,
नो यास्यामि, कथं ? मृतस्सुरसरित्तीरे शुभे नो गृहे ।
तर्हि त्वं चल, किन्न वेत्सि सदने गाङ्गं जलं स्थापितं,
श्रुत्वैतद्भ्रममात्मकं प्रणतिभिस्संवेद्य यातो भटः ॥ १२५ ॥

"ऋते ज्ञानान्मुक्तिर्नहि भवति" कश्चिन्निगदति,
कलौ गङ्गैवैका परमपददात्री परमते ।
मदज्ञाने सिद्धं जननि ! तव पाथोलवजुषां,
नृणां ज्ञानं मुक्तिः स्पृशति सततं पादयुगलम् ॥ १२६ ॥

कृत्वा घोरतरान् स्वपातकचयान् वाहीकविप्रो मृतो,
नीतो दूतगणैर्यमस्य सदनं निर्भर्त्सितस्ताडितः ।
चित्रस्तं परिचिन्त्य चित्रितमतिर्वैचित्र्यमाभाषते,
"गङ्गायामशिवं शवास्थि शिवतां" यातीति सम्मूर्च्छति ॥१२७॥

वैराग्यग्रहसङ्कुला सुरबकैर्जुष्टा मनोहारिणी,
नित्यं शान्तितरङ्गिता बुधजनैस्संसेविता मुक्तिदा ।
गङ्गा देवसरित्सुधारसमयी ( जला ) पापद्रुमध्वंसिनी,
पुण्यावर्तसुदुस्तरा शुचिह्रदा ध्येया मया सा कदा ॥ १२८ ॥

नौका नक्राः कमठमकराः पोतमाराहिमीनाः,
ग्रामा ग्राम्या मनुजपशवः पादपा घासगुल्माः ।
भूमिर्ग्रावा वनगिरिगुहा ब्राह्मणाः घट्टवासाः
धन्या मान्या भगवति ! सदा सन्निधानाद्भवत्याः ॥ १२९ ॥

न मादृक् पापीयान्सकलजनतापी सुरसरित् !,
त्वया कश्चिल्लोके जननि ! गमितो मुक्तिपदवीम् ।
विहायाहङ्कारं दृढपरिकरा स्यास्त्वमधुना,
अयं मात ! "नारायणपति"—समुद्धार-विषयः ( समयः ) ॥ १३० ॥

रे चेतो ! भवतो निदेशवशतो नाकारि किञ्चिं मया,
पापेनाऽपि न यत्कृतं प्रियसखे ! तत्कारितोऽहन्त्वया ।
याचे सम्प्रति मित्र ! मे शृणु वचः श्रुत्वा समाधीयतां
गङ्गावारितरङ्गसङ्गमसुखं स्वाङ्केऽन्तरङ्गीयताम् ॥ १३१ ॥

श्रीशन्तनोस्स्त्री मम शं तनोतु,
तनोः कृतघ्नस्य जनन्यवृत्तेः ।

भीष्मप्रसूर्जह्नुसुता द्युसिन्धुः,
सिन्धोः प्रिया ( समा ) सेतुमतीह काश्याम् ॥१३२॥
नाहं समीहे नृपतित्वमम्ब ! द्विजेश्वरत्वन्न विशां पतित्वम् ।
इच्छामि नौकातरणे पटुत्वं, सुधीवरत्वं त्वयि धीवरत्वम् ॥ १३३ ॥
सुरापगे ! पापनगस्य वज्रं, दुःखद्रुमाणां कठिनं कुठारम्
अनिच्छयाऽप्यम्ब ! तवाम्बु लग्नं, दहत्यघान्यग्निशिखेव सद्यः ॥१३४॥
आपद्दारा देवागारा भूविस्तारा लोकाऽऽसारा,
पारावाराऽऽधाराऽधारा स्वस्सञ्चाराऽपाराऽऽपारा !
काशीस्था कोदण्डाकारा भक्तोद्धारा शुद्धाचारा
पापाहारा सत्संसारा चिद्व्यापारा श्रीगङ्गा स्ते ( स्ताम् ) ॥ १३५ ॥

धन्या हरिद्वारपुरी सुरम्या,
ततश्च धन्यो भुवि तीर्थराजः ।
तस्मान्महाधन्यतरोऽब्धिसङ्ग-
स्त्वद्दर्शनाद्धन्यतमा वयञ्च ॥ १३६ ॥
या चक्रपाणेश्चरणाब्जजाता,
श्रीचन्द्रमौलेश्च जटाचरा या ।
भुजैश्चतुर्भिश्चतुरोऽपवर्गा—
श्चतुर्युगे सा चतुरा ददाति ( तु ) ॥ १३७ ॥
यस्यां शवस्थः किल वायसोऽपि,
मत्वा तृणं वासवराज-( ज्य ) लक्ष्मीम् ।
एकेन नेत्रेण सहस्रनेत्रं,
हसत्यसौ नेत्रविदारणोत्कः ॥ १३८ ॥

त्वद्रूपाः सकलस्त्रियस्त्रिभुवने मत्वाथ भीष्मोऽष्टमः
पुत्रस्तेऽभवदेक एव जगतीस्थो ब्रह्मचर्यव्रतः ।
गङ्गापुत्रपदं गता द्विजवरा घट्टस्थिता ये तव
ते सर्वे खलु पूजिता अपि तथा नो भान्ति गङ्गे ! कथम् ॥ १३९ ॥
विपत्तिर्विश्रान्ता सकलसुखसम्पच्चिरनिशं,
समायाता मात ! विगलित इतो दुःखनिचयः ।
वि ( प्र ) वृद्धं सौभाग्यं निखिलनिधयस्तद्गृहगताः,
लुठत्यम्ब ! स्वैरं जगति करुणायास्तव फलम् ॥ १४० ॥

त्रिभुवने भुवनं तव शोभते, निखिलजीवसुजीवनजीवने !
अमृतवाहिनि ! देह्यमृतं पदं, यदि मृतो वनजात्यवने वने ॥ १४१ ॥
पापहारि देवि ! वारि, को नरो न ते पिबेत्।
तीर्थवासनां विहाय, त्वत्तटीकुटीं श्रयेत् ॥ १४२ ॥
मा कुरु शङ्कां विहर यथेच्छं,
स्वर्गधुनी प्रवहति जलमच्छम्।
केवलदर्शनतो ऽघविदारा,
जयति सदा गङ्गामृतधारा ॥ १४३ ॥
विचार्याचार्याणां वचनमधुना कोविदवरो,
व्यवस्थामास्थायां प्रकटयतु सत्स्वस्थमनसा।
कलावत्याः साक्षा-( काश्यां ) दमरपुरनद्याः शुचिजलं
कलप्राप्तं पेयं कलिकलुषनाशाय न कथम् ॥ १४४ ॥
पूता मद्गीरपि तव गुणैरर्थतामत्र लब्ध्वा,
स्नानाद्धन्या तनुरघमयी चिन्तया चित्तवृत्तिः।
शुद्धिः सर्वा भवति जगति त्वज्जलेनैव तस्मात्,
पानीयन्ते कलिकलगतं पीतमोक्षप्रदं स्यात् ॥ १४५ ॥
"रामानन्द" सुधीश्वरेण बहुभि स्तोत्रैःस्तुता या भृशं,
तद्वत्पण्डित "चन्द्रशेखर" वचो यां सेवतेऽहर्निशम्।
तेषां वंशसमुद्भवेन च मया यद्बालिशेनोच्यते,
तन्क्लिष्टं वचनं भवेत्तव मुदे त्वं विश्वमाता यतः ॥ १४६ ॥
मात ! स्तावक-संस्तवे निगदितं ज्ञानादथाज्ञानतः,
सत्यं वाप्युचितं वृथाप्यनुचितं योग्यन्त्वयोग्यं वचः।
तत्सर्वं मम साहसं नगसुते ! पापात्मनो दुस्सहं,
बुध्वा दुष्टसुतेरि ( शिशुरि ) तं करुणया दृष्ट्या क्षमस्वाधुना ॥१४७॥
महाराणि ! तुभ्यं करवाणि मूर्ध्ना,
महाप्रमाणैर्गुणितान्प्रणामान्।
कल्याणि ! गीर्वाणतरङ्गिणीस्था,
निर्वाणविश्राणनतत्परा स्याः ॥ १४८ ॥
स्तुति स्वरूपा स्वयमेव गङ्गा,
यमादिनिन्द्या यमुना विमाता।

प्रच्छन्नधारा ( वाहा ) च सरस्वती मे,
कुर्यात्प्रयागं शतकं त्वदीयम् ॥ १४९ ॥
सप्तीष्वंकेन्दु ( १९५७ ) वर्षे गतकलियुगसन्धौ नमस्ये नभस्ये,
मासे पक्षे वलक्षे कुजदिवसयुते सतृतीयातिथौ च ।
रामापत्योऽथ "नारायणपति"-धरणीदेवतः काशिकायां
श्रीमद्गङ्गा जनन्याश्शतकमरचयत्प्रीतयेऽस्या भवेत्तत् ॥ १५० ॥
श्रीगङ्गा-सार्द्धशतकं, नारायणपतीरितम् शुभम् ।
समाप्तं तत्प्रसादेन, तस्या एव समर्पितम् ॥ १५१ ॥

शुभम्भवतु सर्वेषाम् ।



## श्री कृष्ण-स्मृतिः ।

ले०—पाण्डेय श्री कुसुमाकरशर्मा साहित्याचार्य्यः ।
( आयुर्वेद महाविद्यालय-पटना )

स्तुत्यं पुराणपुरुषं जगदव्ययं तं,
पीताम्बरं घननिभं शशिसूर्य्यनेत्रम् ।
वंशीविभूषितकरं श्रितनीप-वृक्षं,
हृष्टं नमामि मनसा विभुकृष्णचन्द्रम् ॥ १ ॥
श्रीवत्सलाञ्छन ! विभो ! करुणावतार !
प्रख्याऽस्ति दुःखदलनाय तव प्रभूतिः ।
गीतावचः स्मरसि किं न "यदा यदेति"
स्यात्ते कदानु जननं खलु भारतेऽत्र ? ॥ २ ॥
दुर्दान्त-कैटभचमूर्विनिहत्य पूर्वं,
श्रीकृष्णचन्द्र ! विहिता ह्यभया धरित्री ।
वर्णाश्र कर्मनिरताः सुखिनोऽप्यजस्रं,
वैधव्यदुःखरहिताः प्रमदा बभूवुः ॥ ३ ॥
कालेऽधुना व्रजति निम्नपदं द्विजाति,—
र्नष्टा स्वधर्मसरणिः खलु भारतीया ।
यक्ष्मादिरोगपरिवृद्धिरतो नितान्तं,
मर्त्यस्तथापि न विमुञ्चति नेत्रमुद्राम् ॥ ४ ॥

हिन्दूसमाज-विहित-क्रयविक्रयाणां,
वैधव्यदुःखपरिमर्दित-सुन्दरीणाम् ।
हा ! हन्त !! हन्त !!! कुदशां प्रविलोक्य तासां,
दीर्णा धराऽस्ति, करुणाकर ! कश्च यत्नः ? ॥५॥

वृक्षाः समृद्ध-फलपुष्पभराः; स्म यत्र,
गावश्चरन्ति विपिनेऽपि, न हिंस्रभीतिः ।
य-कार्य्य-कुविधिः प्रसृतो न बन्धौ,
सत्सङ्गति निखिलकार्य्य-सुसाधिकासीत् ॥६॥

जाता दिवं समधिकाः खलु भारतीया,
दुग्धं विना कथय माधव ! हाऽसि कुत्र ?
पुत्रः प्रहन्ति लगुडेन प्रसूं नृशंसो,
द्रष्टुं कथं प्रतिदिनं कलुषं समर्थः ? ॥ ॥

— :॥: —

## "काशीस्तवः" ।

ले०—'शास्त्री' प्राणजीवन वी० जोशी ( कच्छी ) काव्यतीर्थः,

पावयन्ती जगत्पूतमात्मानमभिनन्दति ।
यदङ्गसङ्गतो गङ्गा सा काशी कस्य न प्रियाः ॥१॥

विश्वेशं सेवते भिक्षादानव्याजेन चाऽन्नदा
विन्दतीवात्मनीनं तत्सा काशी कस्य न प्रिया ॥ २ ॥

अघौघो ध्वंसते योगात्सुपथं गाहते च ना,
सत्सेवेव फलत्यर्थं सा काशी कस्य न प्रिया ॥ ३ ॥

भवबन्धापहर्त्री च प्रसूतिर्ब्रह्मवर्चसः
शरण्या वेदधिव सा काशी कस्य न प्रिया ॥ ४ ॥

"वाग्देवी" यत्र सेविभ्यो वितरन्ती शुभं फलम्
भजते न कदर्यत्वं सा काशी कस्य न प्रिया ॥ ५ ॥

प्राच्यप्रतीच्यविद्यानामालयो विश्वविश्रुतः
विभाति भारते भव्या, सा काशी कस्य न प्रिया ॥ ६ ॥

विबुधेन्द्रमृगेन्द्राणां चरतां शास्त्रवर्त्मसु
विद्यारण्यमभीकं सत्सा काशी कस्य न प्रिया ॥ ७ ॥

गङ्गापयश्चलत्फेनैर्हसन्तीवाऽमरावतीम्

सम्पदादिगुणैराढ्या सा काशी कस्य न प्रिया ॥ ८ ॥

तडित्वद्भिर्लपन्तीव यत्प्रासादा नभःस्पृशः

स्पर्द्धमाना लसत्कान्ताः सा काशी कस्य न प्रिया ॥ ९ ॥

शिवः सपरिवारोऽस्यामिति स्वं सार्थमीक्षते

निर्माणपाटवे स्रष्टा, सा काशी कस्य न प्रिया ॥ १० ॥

उशन्ति जन्म यत्र सूरयोऽपि मुक्तिहेतुकम्

महाजनप्रसूरियं शिवाय सेविनां सदा ॥ ११ ॥

यदम्बुपानमीप्सितं यदीयदर्शनं तथा

पदं तयोर्नमामि जह्नुजामहेशयोरिमाम् ॥ १२ ॥

वीचीनिचयसंश्लेषैश्चुम्बनैः कोटराम्बुभिः

गायतीव गुणान् गङ्गा यस्याः, कल्लोलशब्दितैः ॥ १३ ॥

साध्यते यन्निवासेन पुरुषार्थचतुष्टयम्

रजस्तमःपरं धाम सदाऽऽसेव्यमुपास्महे ॥ १४ ॥

काशीस्तवोऽयं रचितः प्राणजीवनशास्त्रिणा

कुसुमाञ्जलिवदीशत्पादयोरुपदायताम् ॥ १५ ॥

——:o:——

## वैदिकाचारविचारः।

( तत्र पिशितविशेषाशनाधिकारः )

पण्डित सम्राजः श्रीपञ्चानन तर्करत्न महोदयाः ( प्रधान सम्पादकाः )

प्रणम्य वेदपुरुषं वेदाचारे कुतर्किणाम्

दुर्नयः क्षिप्यते क्षिप्रं श्रीपञ्चाननशर्म्मणा।

गोमांसाशनं वर्णाश्रमिक्रियमाणतया वेदबोधितं न वेति विप्रतिपत्तिः, तत्र विजातीयप्रत्ययनेयबुद्धीनां नवीनानां तद्गुरूणाञ्च प्रतीच्यानां भावकोटिः

तथाहि अथर्ववेदे तृतीयकाण्डे अशीतितमसूक्तमध्ये 'सं वो मनांसि सव्रताः' इति पञ्चमादिमन्त्रेण त्रिवर्षवत्सिकाया गोः पिशितासनमित्यादि सायणीयभाष्ये कौशिक सूत्रं प्रमाणतयोपन्यस्तं त्रिहायण्या वत्सतर्य्याः शुक्त्यानि पिशितान्याशयतीति ( कौ० २, ३ ) षष्ठ काण्डे चतुःषष्टितम सूक्तस्योपक्रमभाष्ये सायणाचार्य्येरुक्तम् 'त्रिवर्ष देशीयाया वत्सतर्य्या मांस विशेषम् अनेन तृचेन ( संजानीध्वमित्यादिना ) संपात्याभिमन्त्र्याशयेत्। त्रिहायण्या वत्सतर्य्याः शुक्त्यानिपिशितान्याशयतीति, कौशिकसूत्रञ्च प्रमाणमुद्ध-

तम् अस्मिन्नेव काण्डे चतुःसप्ततसूक्ते प्रथम तृचस्य ( इह यातु वरुण इत्यादेः ) द्वितीयतृचस्य ( सं वः पृच्यन्ताम् इत्यादेः ) अव्यवहितोक्तस्य 'सं जानीध्वम्' इत्यादेरिव विनियोगः सायणेनोक्तः, तथा च गोपिशिनाशनमपि तत्र प्राप्तम्। अपि च, पञ्चमकाण्डे अष्टादशसूक्ते 'मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम्' इत्यादि मंत्रैः 'ब्राह्मणगवी अनाद्या' इत्युपदिशद्भिः शेष गवीनाम् अदनम् अनुमततया बोधितम्। गोमेधयज्ञविधानपराणि वेदान्तान्त राण्यपि प्रमाणतया तथोपस्थापयितुं शक्यन्ते। सुविदितञ्च साहित्यरसिकानां महाकविभवभूतेरुत्तररामचरिते महर्षेर्वसिष्ठस्यानिवृत्तमांसतया वत्सतरी-भक्षणसमर्थनं मधुपर्के तद्वधवार्त्ताघोषणं च। भवभूतेः परस्ताच्च सम्मिलि-तैर्विज्ञद्भिः कलिवर्ज्यानि कर्माणि निरूपितानि, जैन-बौद्धाक्षेपं लोकपरिगृहीतं परिजिहीर्षमाणैः। तदेव चोपपुराणे वर्णितं कलेरादावति। भ्रमजनक वचनोपन्यासेन, अज्ञा तावज्जनता ब्राह्मणगणवचनं वेदवदसंशयं मन्यते कलियुगस्यारम्भादेव निषिद्धानि कर्माणीमानीति। 'पूर्वयुगे च आलब्धानां गवां पुनरुज्जीवनसामर्थ्यमासीद्द्विजामतः पुनरुज्जीवनेन यज्ञेषु गवालम्भनं न प्रत्य वायाय अकल्पत। तत्सामर्थ्यनाशात् प्रभृति—तन्निवारणम्' इति श्रीचैतन्यदेवोऽप्यभाषत, परमिदमपि ब्राह्मणकल्पनानां विजृम्भितमेव, पुराणेतिहासेष्वनुपल-म्भात् रन्तिदेव राजगृहे ब्राह्मणानां गोमांसभोजनस्य महाभारतादावुपलम्भाच्च। भ्रमगृहीतचेतसश्च वर्णाश्रमिणो गोवधं गोमांसं परितत्यजुः, नवागतविजेतृ-जवनजातिविद्वेषश्चास्य सार्वत्रिक वृद्धिमानमानिनाय, तस्मात् गोमांसभोजन-निवृत्तिर्वर्णाश्रमिणां न वैदिकाचारो न वा स्मार्त्ताचारः, प्रत्युत तद्भोजनमेव वेदादिविहितम्। कलिवर्ज्यप्रकरणं च पूर्वैरपि नादृतम् कलिवर्ज्येषु अन्यतमोऽनुलोमाविवाहः महाकविबाणभट्टेन हर्षचरिते स्वीय पारशव भ्रातृतया सुषेण चन्द्रसेनयोराख्यामुल्लिख्य स्वपितुः शूद्रा विवाहो न केवलं निःसंकोचम् अपितु सगौरवमावेदितः। अनुलोमाविवाहस्य कलि-वर्ज्यतया अकर्तव्यत्वादरे कथं नामयितुः शूद्राविवाहं शास्त्रदर्शी बाणभट्टः प्रख्यापयेत्। मृच्छकटिक प्रकरणरचयितृत्वेनोक्तस्य राज्ञः शूद्रकस्याश्वमेधयज्ञः कथं नाम सगौरव मुद्घोष्येत, द्वितीयचन्द्रगुप्तस्याश्वमेधयज्ञप्रमाणं च देदीप्येत, यतोऽश्वमेधोऽपि गवालम्भवत् कलौ वर्ज्यनीयत्वेन व्यपदिश्यते। स्मृतिवचनतया च प्रमाणीक्रियते ( अश्वमेधं गवालम्भं सन्यासं पलपैत्रिकम्। देवरेण सुतोत्पत्तिं कलौ पञ्चविवर्जयेदिति। तस्माद् वचनानीमानि देव-गिरिराजमन्त्रिणो हेमाद्रेः किञ्चित्पूर्वं कलिवर्ज्यप्रकरणमुपपुराणवचनरूपेण

स्मृतिनाम्ना च ब्राह्मणैरेव प्रकाशितं न तु श्रुतिस्मृत्योर्वास्तवः सम्बन्धस्तत्र कश्चिदस्ति। सत्येवं गोमांस-भोजनं न केवलं वैदिककाले, किं तर्हि—स्मृतिकर्त्तृपुराणकर्त्तृणामृषीणामपि काले शिष्टपरिगृहीतमासीत् वेदबोधितत्वात्तस्येति।

अत्र ब्रूमः गोमांसाशनं वर्णाश्रमिभिक्रियमाणतया न वेदबोधितमिति, तन्मांसस्य तद्धननाधीनतया तद्धननस्य च वेदप्रसिद्धतदीयनामत एव प्रतिषेधप्राप्तेः, तच्च नाम 'अघ्न्य' इति वृषभस्य, 'अघ्न्या' इति गोरसकृदेव वेदेषूदलेखि, यस्य खल्वथर्ववेदस्य प्रमाणेन गोमांस-भोजनं वेदबोधितमुच्यते तत्रापि नवमकाण्डे चतुर्थसूक्ते सप्तदशमन्त्रः—'शृङ्गाभ्यां रक्ष ऋषत्यवर्त्तिं हन्ति चक्षुषा शृणोति भद्रं कर्णाभ्यां गवां यः पतिरघ्न्यः।' इति।

चतुर्दशकाण्डे द्वितीयसूक्ते षोड़शमन्त्रे "योक्त्राणि मुञ्चत। मादुष्कृतौ व्येनसावघ्न्यौ" पुनरष्टादशकाण्डे चतुर्थसूक्ते एकोनपञ्चाशमन्त्रे "अस्मादेतमघ्न्यौ"।

हे अघ्न्यौ अहन्तव्यौ इति प्रकृतिप्रत्ययार्थमुक्त्वा प्रसिद्धनामोक्तं सायणाचार्येण, हे वृषभाविति; तृतीयकाण्डे त्रिंशसूक्ते प्रथममन्त्रे "वत्सं जातमिवाघ्न्याः"।

अघ्न्या गोनामैतत्। अहन्तव्या इति प्रकृतिप्रत्ययार्थाभिधानम् रूढ्यर्थश्च गाव इति तात्पर्यकं सायणभाष्यम्।

तत्र षष्ठकाण्डेकनवतितमसूक्तद्वितीय-मन्त्रे, ऋग्वेददशममण्डलषष्ठितमसूक्ते एकादश्यामृचि च 'नीचीनमघ्न्या दुहे'।

अघ्न्या गोनामैतदिति आथर्वणभाष्ये सायणः। अघ्न्या अहननीया गौरिति च ऋग्वेदभाष्ये।

"हिङ्कृण्वती वसुपत्नी वसूनाम्। वत्समिच्छन्ती प्रणसाभ्यागात् दुहामश्विभ्यां पयो अघ्न्येयं" (ऋग्वेदे १मं १६४ सू॰ २७ मन्त्रः) अघ्न्या गोनामैतदिति तद्भाष्ये सायणः।

इत्यादीनि बहूनि प्रमाणानि 'अघ्न्या' इति गोनाम्नि वर्त्तन्ते। अपि च वत्सतर्य्याः पिशिताशने यत्प्रमाणमुपदर्शितम् तदपि न वैदिकं, किन्तु कौशिकसूत्रमूलम्। कौशिकसूत्रन्तु स्मृतिरेव तद्विनियुक्तवेदमन्त्रः पुनर्न गोमांसाशनं बोधयति।

यत्पुनरुक्तं "मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम्" इति तदपि मन्त्रस्वरूपपर्य्यालोचनयास्मत्पक्षमेव दृढीकरोति, दृश्यतां मन्त्रः कार्त्स्न्येन।

"नैतां ते देवा अदुर्नृपते अत्तवे। मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम्।" इति।

भो नृपते देवा एताम् अत्र निर्दिष्टां गामित्यर्थः, ते तुभ्यम् अत्तवे भक्षणाय न अदुः, अतः अनाद्यां गां राजन्य भो क्षत्रिय ब्राह्मणस्य मा जिघत्सः भक्षितुं मा एषीः, या सामान्यतया अनाद्या सा ब्राह्मणस्य ब्राह्मणसम्बन्धिनी सती तव अदनेच्छाविषयो विशेषेण भवितुं नार्हति इत्यर्थः स्वरसतोऽवगम्यते।

ब्राह्मणस्वामिका गौरनाद्येति यदि वेदोऽभिदध्यात् ब्राह्मणस्वामिकं पश्वन्तरं ब्राह्मणस्वामिकं व्रीहियवादिकं च राजन्येनाद्यमित्यर्थतः पर्य्यवस्येत् अन्यथा गामिति व्यर्थं स्यात्। ननु भवतु गोभिन्नं ब्राह्मणस्वामिकं पश्वन्तरादिकं क्षत्रियेणाद्यमेवेति चेत् बलवता दुर्बलस्य पीडनं क्षत्रियेण ब्राह्मणस्याजमेषादिहरणं शस्यहरणं च वेदबोधितमबाध्यं प्रसज्येत। न चैतद् युज्यते भगवती हि श्रुतिः प्रतिषेधत्यधर्मं प्रवर्त्तयति च धर्म्ममिति, भवदुक्तार्थकश्चेन्मन्त्रोऽसौ प्रकारान्तरेणाधर्ममेव प्रवर्तयेत्। तस्मान्मदुपदर्शित एवार्थो मन्त्रस्य युक्तः, तेन च गोमांसस्य अभक्ष्यत्वं लभ्यते ब्राह्मणस्य गोर्भक्षणन्तु गुरुतराय पापाय, अत एव स्मृति-कर्त्तारो महर्षयो ब्राह्मणस्वामिकगोवधे प्रायश्चित्ताधिक्यमाहुः, नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचिदिति युक्त्या तद्भक्षणस्य तद्वधनैयत्यात्।

यदि नाम कौशिकसूत्रमेवाथर्वणिककर्म्मणि प्रमाणमिति कृत्वा स्मृतिस्वरूपमपि विनियोगं विदधत् चिरन्तनवैदिकाचारमनुमापयतीत्युच्यते तथापि आथर्वणिक—कर्म्मस्वरूपविचारणायां गोमांसभक्षणं वर्णाश्रमिक्रियमाणतया वेदबोधितमिति न शक्यते निर्णेतुम्, तथाह्याथर्वणं कर्म्म द्विविधम् ऐहिकेष्टमात्रानुबन्धि स्वर्गाद्यनुबन्धि च; तत्राद्यं लोकवेदविरुद्धमपि ऐहिकार्थैषुत्कटरागवतां वा क्रियाविशेषस्य पञ्चमजातिसाधारणतया तद्विधाधिकारिणां वा कर्त्तव्यतया प्रतिपादितम्, यथा गोपुष्टिकामः 'संवो-गोष्ठेन) ३।१४।१)' गृष्टेः पीयूषं श्लेष्ममिश्रितम् अश्नाति (कौशिकसूत्रं ३।२) गृष्टिः सकृत् प्रसूता गौः, पीयूषं नवं पयः। श्लेष्मा शिंघाणमिति ख्यातं नासिकामलम्, धातुरूपस्य श्लेष्मणो दुग्धेन मिश्रणासम्भवात्। एतेन नासिकामलपानं वर्णाश्रमिक्रियमाणतया वेदबोधिताचारत्वेन तदानीं स्थितमिति न सम्भाव्यम्, यथा वा 'ऋषभङ्मन्त्रः' 'तदिदास' इति

( ५।१।२ ) ऋतुमत्याः स्त्रिया अङ्गुलिभ्यां लोहितम्' (कौ० ३।५) इति सूत्रेण पुष्टिकर्म्मसु आभ्यां सूक्ताभ्यां मृतुमत्याः स्त्रिया लोहितं रसमिश्रितं कृत्वा सम्पात्याभिमन्त्र्य प्रादेशिनीमध्यमाङ्गुलिभ्यां प्राश्नीयादित्यर्थकेन प्राप्तम् ऋतु-शोणितपानं वेदबोधितसदाचाररूपतया तदानीं स्थितमिति न सम्भाव्यम्, यथा वा सप्तग्रामलाभकर्म्मणि सम्वत्सरं ब्रह्मचर्य्यं कृत्वा ततो मैथुनं कृत्वा तदुत्पन्नं रेतस्तण्डुलमिश्रं कृत्वा सम्पात्याभिमन्त्र्याश्नीयादित्यर्थकेन 'सम्वत्सरं स्त्रियमनुपेत्य शुक्ल्यां रेत आनीय तण्डुलमिश्रम्' इति कौशिकसूत्रेण (कौ० ३ ५ ) रेतःप्राशनं वेदबोधितसदाचाररूपतया तदानीं स्थितमिति न सम्भाव्यम्, किं तर्हि रोगविशेषे अङ्गविशेषच्छेदनमिव, दक्षिणहस्तच्छेदे वामहस्तेनाचमन-मिव क्वाचित्का इमे प्रयोगा न खल्वाचारसञ्ज्ञां लब्धुमर्हन्ति। ऐहिकार्थलालसा-हतानां वा पंचममानवविशेषाणां वा ऋतुशोणितपानरेतःप्राशनवद् वत्स-तरीमांसाशनं वेदितव्यम्। न पुनरस्य वर्णाश्रमिक्रियमाणवेदबोधिताचार रूपत्वम्—यतः माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्रणुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट। ऋग्वेदाष्टममण्डलस्थ-नवतितमसूक्तपंचदशमन्त्रेण स्पष्टतया प्रतिषिद्धो गोवधः। अपि च सामस्य कर्म्मणि वत्सतरीपिशिताशनं कर्तव्यानामन्यतमत्वेन परिगणितं सूत्रकारेण एकग्रामवासिनां सर्वेषां मनुष्याणामैकमत्यसम्पादनायापीदं कर्म्म क्रियते 'ग्रामं परिहृत्य मध्ये सम्पातयेत इति कौशिकसूत्रात् ( कौ० २, ३ ) कृत्स्नस्य ग्रामस्य सांमनस्ये जनयितव्ये सम्पातितोदकुम्भनिनयनं ग्राममध्ये कर्तव्यम्। तेन ग्रामसां-मनस्यं लभ्यते। अत एव सायणाचार्य्येण सांमनुष्यमितीदमुक्तम् "सांमनुष्यम्—मिथः संप्रीतियुक्ताः मनुष्याः तैर्निर्वर्तितं सांमनुष्यम्" यदि च "सहृदयं साम-नस्यमविद्वेषं कृणोमि वः अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्याः (३-३०-१) मुद्रितमूलपाठो दृश्यते, तथापि सायणप्रामाण्यात् 'सहृदयं सांमनस्यमविद्वेषं कृणोमि वः। अन्योन्यमभिहर्यत वत्सं जातमिवाघ्न्याः।" इत्ययं मूल पाठो भवितुं युक्तः। न चास्यैव मन्त्रस्य व्याख्यायाम् "अविद्वेषं विद्वेषाभावोपलक्षितम् सांमनस्यं कर्म्म कृणामि करोमि। कीदृशं तत् सांमनस्यं" इत्युक्तत्वात् मूले सांमनस्यमित्येव पाठ इति वाच्यम्, अविद्वेषमित्यस्यैव सांमनस्यमित्यर्थ-कतायास्तत्र सायणाचार्य्येण उक्तत्वात, अत एव विद्वेषाभावोपलक्षित-मिति तद्व्याख्याक्रमः, सांमनस्य-वाचक-शब्दसत्वे कथमुपलक्षिततया सांमनस्यम् अभिदध्यात्। विद्वेषाभावोपलक्षितमित्यस्यार्थान्तरपरत्वभ्रमेण केषाञ्चित् पाठभ्रमात् मूलाशुद्धिरिति मन्यामहे, तदन्यथा सांमनुष्यमित्यस्य

अर्थनिर्देशे भाष्यासङ्गतिः स्यात्। मनुष्याश्च पञ्चविधाः "यथा यमाय हर्म्यं मवयन् पञ्चमानवाः"। अथर्वणि १० काण्डे ४ सूक्तस्य ५ मन्त्रे निषाद पंचमाश्चत्वारो वर्णाः पंचजना इति यास्कः, तथा च सर्वमानवनिर्वर्त्तनीयं यत्कर्म्म तत्र कर्तृतया निषादानामप्यन्तर्भावात् गोमांसाशनं तेषां सम्भवदपि न वेदबोधितसदाचाररूपतां भजते वर्णगृहीतत्वेनानवधारणात् न च वैदिककर्म्मणां तत्साधारण्यं नास्तीति शङ्कनीयम्, यजनादि-शब्देऽभिमन्त्रित-द्रव्यग्रहणाद्यात्मके कर्म्मणि सर्वेषामधिकारप्राप्तेः, यथात्र तृतीयकाण्डचतुर्थानुवाक प्रथमसूक्तविनियोगे 'प्रातरग्निम्......' इति दधि मध्वाशयति कीलालमिश्रं क्षत्रियं कीलालमितरानिति कौशिकसूत्रं ( कौ० २-३ ) व्याख्यातञ्चेदं सायणाचार्य्येण "अनेन सूक्तेन दधिमधुनी संपात्याभिमन्त्र्य वर्चस्कामं ब्राह्मणमाशयेत् क्षत्रियन्तु दधिमधुमिश्रमन्नमाशयेत् वैश्यादिकन्तु केवलमन्नमाशयेदिति। कौशिक-सूत्रस्थस्य इतरानिति पदस्य वैश्यादिकानित्यर्थः, तेन वैश्यशूद्रनिषादानां लाभः, अन्यथा बहुवचनं नोपपद्येत, क्षत्रियमित्येकवचननिर्देशेन जातेरेव प्रक्रमात्।

किंच कौशिकेनैव पूर्व्वपिसंवादमुपन्यस्य लोहिताशनं ब्राह्मणेनाकरणीयमित्युपपादयता पिशिताशनं सर्व्वसाधारणमिति भ्रमो निराकृतः। लोहितसम्पर्करहितस्य पिशितस्यासम्भवात्। तथाहि "अकुशलं यो ब्राह्मणो लोहितमश्नीयादिति गार्ग्यः, उक्तं ( कौशीतकी ब्राह्मणग्रन्थे प्रागुक्तम् ) लोम सर्वैराप्लावयति अवसिञ्चति' इति ( कौ० २,४ ) येषामन्यतमस्य लोहिताशनं प्राप्तम्, तेषु छागस्य प्रवेशेऽपि ब्राह्मणस्य तच्च प्रतिषिद्धम्, एतेन प्रकारेण ज्ञायते यद् यस्याभक्ष्यम् ऐहिकार्थसाधनमपि तत् तेन परिवर्ज्जनीयम्। गोवधस्य स्पष्टं प्रतिषेधात् गोरभक्ष्यतया तत्रोक्तत्वाच्च पापभीरुभिर्न तन्मांसं भक्षणीयम् वर्च्चस्यमपि लोहितं यथा ब्राह्मणेनेति कौशिकादीनामाथर्वणिकसूत्रकृतामाशयः।

यच्च महाकविभवभूतेर्वचनं प्रमाणतयोपन्यस्तं तदपि सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता" इति वचनान्तरवत् तस्य बौद्धवाददूषितमतितामेव प्रमाणयति। यतो मधुपर्के गोदानस्य विहितत्वेऽपि तस्य हिंसनन्तु न श्रुतिसम्मतम्, विनियोगेन मन्त्रलिंगेन च तथैवावगमात्—तथा हि "मधुपर्के उत्सृष्टां गामनयाभ्य.गतोऽनुमन्त्रयेत। "सूयवसादिति प्रतिष्ठमानामिति" कौशिकसूत्रम् ( कौ० १२,३ ) ऋक्च 'सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती।" ( अथर्व ७।७३।११ )

अस्या अर्थस्तु—हे अघ्न्ये अहननीये गौः सूयवसात् सूयवसं शोभन-तृणग्रासमदन्ती, भगवती धनवती भाग्यवती वा भूयाः। तासां पयसो धनत्वात् पयःप्रकर्षस्य भाग्यविशेषरूपत्वाद्वा, अधा अथ—अनन्तरं वयं भगवन्तः स्याम त्वत्प्रदत्तपयसा धनवन्तो वा त्वत्सेवया पुण्यवन्तो वा स्याम भूयास्म विश्वदानीं सर्वदा तृणम् अद्धि भक्षय आचरन्ती निर्बाधं सर्वतश्चरन्ती शुद्धमुदकं पिब। तस्मात् मधुपर्के गोवधस्य श्रुतिसम्मतत्वाभावात् तत्कल्पनं भवभूतेरयुक्तम्।

स्मृतौ मधुपर्के यद्गोनिर्वपनमुक्तं तदपि श्रुतिप्रामाण्यात् उत्सर्ज्जन-रूपम्, एवमेव स्मृतिशास्त्रपारदृश्वानो मिताक्षराकृतः।

भवभूतिकृतमालतीमाधवप्रकरणपाठकैर्बौद्धपरिव्राजिकाचरितोत्कर्षकापा-लिकचरितापकर्षचित्रणञ्च न विस्मर्तव्यम्। यच्च कलिवर्ज्यप्रकरणस्य वाणभट्ट-कृत-पारशवभ्रातृवर्णनोल्लेखेनार्वाचीनत्वमुक्तं तदप्यपेशलम् "पारसीकाँस्ततो जेतुं प्रतस्थे स्थलवर्त्मना" इत्युक्तवतो वाणभट्टस्तुतकीर्तेर्महाकविकालिदासस्य "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति कलिवर्ज्जनीयबोधक-वचनजातस्य परिज्ञानात् तत्प्रामाण्यावधारणाच्च प्राचीनत्वप्रतीतेः।

वाणभट्टपितुरनुलोमाविवाहं पर्य्युदस्तममन्यमानस्य यत्तदाचरणं तेन न वा फलं न वा प्रत्यवाय इति पर्य्युदासस्वरूपबोधेन स्वकुलस्यैश्वर्य्यवर्णन-परस्य वाणभट्टस्य पारशवभ्रातृनामनिर्द्देशो न कलिवर्ज्यप्रकरणस्यार्वाचीन-तामवज्ञेयतां वा सूचयति।

यच्च मृच्छकटिकप्रकरणप्रणेतृतया प्रसिद्धस्य महाराजशूद्रकस्य द्वितीयचन्द्रगुप्तस्य चाश्वमेधयज्ञानुष्ठानमुपन्यस्य कलिवर्ज्यप्रतिपादक वचनानामर्वाचीनत्वमुक्तम् तदपि न युक्तम्, यतो 'मा हिंस्यात् सर्वा भूतानि' इति श्रुतिं प्रमाणीकृत्य अश्वमेधादिनिवर्त्तनस्य कलिवर्ज्ज्यप्रकरणोक्तस्य प्रतिषे-धरूपत्वं मन्यमानानां विदुषां मतेनैव तदनुष्ठानात्, हिंसा हि पुरुषस्य दोषमा वहति क्रतोश्चोपकरिष्यति इति तत्सिद्धान्तात्। तथा च अनुलोमाविवाह-वदेवाश्वमेधो न पर्य्युदस्तः, किन्तु प्रतिषिद्धः, एकस्य कर्म्मणो वैधत्वे निषिद्धत्वे च तदाचरणे पुण्यपापयोः सम्भवेन पापस्य प्रायश्चित्तेन परिजिहीर्षतः पुण्यार्थि-नोऽश्वमेधप्रवृत्त्युपपत्तेः। अत एव हेमाद्रिस्वीकृतप्रामाण्यानां कलिवर्ज्ज्य बोधकवचनानां सत्यपि सर्वतः प्रामाण्यपरिग्रहे हेमाद्रेर्बहुकालपरवर्त्तिना जयपुरनगरप्रतिष्ठातुर्महाराजजयसिंहस्याश्वमेधयज्ञानुष्ठानमैतिहासिकैरुदाह्रिय-ते। गोमेधयज्ञनिवर्त्तनन्तु पर्य्युदासरूपतया प्रसज्यप्रतिषेधरूपतया

च सपिण्डाविवाहप्रतिषेधवद् बोद्धव्यम्। तन्मूलभूतमन्त्रश्च "मुग्धा देवा उत शुना यजन्तोत गोरङ्गैः पुरुधा यजन्त, य इमं यज्ञं मनसा चिकेत प्रणो वोच स्तमिहेह ब्रवः।" ( अथर्व० ७।५ सू०। ५ ) अत्र मुग्धत्वं पर्य्युदासलिङ्गम् गोरङ्गैरिति गोमेधस्याप्राप्तिः। मातारुद्राणामित्यादिप्रयुक्तमन्त्रः अघ्न्या इति अघ्न्य इति च गवोर्नामनी प्रसज्यप्रतिषेधं गमयति। यच्च तादृशयज्ञविधानं तत्श्रुतिद्वयप्रामाण्यानुरोधेन कलीतरपरतया समर्थितम् गोमांसाशनं तु क्वचिद्पि युगे धर्माश्रमिक्रियमाणतया न वेदबोधितम्।

चर्म्मण्वतीनद्युत्पत्तिबोधकस्मृतीनां रन्तिदेवगृहे ब्राह्मणकृतगोमांसभक्षणस्मृतीनां च स्वार्थे प्रामाण्यतदभावयोरन्यतरस्याभ्युपगन्तव्यत्वेन प्रकृतेऽनुदाहरणीयत्वात्। तथा हि यदि नाम तत् स्वार्थे प्रमाणमभ्युपगम्येत राज्ञो रन्तिदेवस्य लोकोत्तरत्वमवश्यमेव स्वीकरणीयम्, न यद्येवं तर्हि यज्ञालब्धपशुचर्म्मराशिक्लेदेन बहुयोजनव्यापिनी सरिदुत्पत्तुमर्हति तत्प्रभावेण भक्ष्यत्वम् अभक्ष्यस्यापि गोमांसस्येति रन्तिदेवप्रकर्षो न तदानीन्तनसदाचाररूपतां गोमांसभक्षणस्य प्रमाणयति। अपि च तत्रैव-

"उपस्थिताश्च पशवः स्वयं यं संशितव्रतम्। बहवः स्वर्गमिच्छन्तो विधिवत्सत्रयाजिनम्॥" इति महाभारतद्रोणपर्वणि ६५ अध्याये ४ श्लोकः। अस्यार्थस्तु विधिवत् यज्ञशीलं रन्तिदेवं गवादयः पशवः स्वर्गं जिगमिषवः स्वस्वालम्भनं प्रार्थयामासुः। इदमपि रन्तिदेवस्य लोकोत्तरत्वसिद्धेः सूचकम्। एवं सिद्धिमतः प्रभावात् अभक्ष्यस्य भक्ष्यतासम्पत्तिः न विस्मयमावहति। यदि चास्य स्वार्थे प्रामाण्यं नाङ्गीक्रियते रन्तिदेवस्य प्रकर्षपरत्वमेव नैतावता गोमांसभक्षणस्य ऐतिहासिकता सिद्धिः। यथा "वनस्पतयः सत्रमासत सर्पाः सत्रमासतेत्यादि श्रुतेरपि न वनस्पत्यादीनाम् अग्निहोत्रानुष्ठानस्यैतिहासिकतासिद्धिस्तद्वत्।

यतः "एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः" इति व्याससंहितावचनं गवाशनानामन्त्यजत्वप्रतिपादकं ब्राह्मणानां गोमांसभोजनबोधकपुराणवचनानां स्वार्थे प्रामाण्यं बाधते। तस्मात् कलिवर्ज्यबोधकवचनजातं यदि मुनिकृतत्वेन भवद्भिर्नाभ्युपगम्यते तथापि निबन्धृवचनमिव श्रुतिद्वैधे स्मृतिद्वैधे वा तद्विरोधपरिहारायानुशिष्टं कथमुपेक्षन्ते? तत्रापि तदर्थं काम्यकर्म्मविशेषाणामेव संकोचः नत्वपूर्वस्य कस्यचित् प्रवर्त्तनं तत्रास्ति। काचिन्निवृत्तिः पर्य्युदासरूपा काचित् पर्य्युदासप्रसज्यप्रतिषेधोभयरूपा काचिच्च केवलप्रसज्यप्रतिषेधरूपा इत्येवं शिष्टाचारपरम्परैवात्र विशेषे

प्रमाणम् । यवनानां भारताधिकारात् पूर्वं बहुशताब्दीं यावत् भारतस्य सार्वभौमो राजा नासीत् कस्य तावदाज्ञया जनतया यवनद्वेषाद् गोमांसभोजनवैमुख्यं गृहीतम् इति विचारणीयं सुधीभिः । कथं वा धर्म्मशास्त्रनिषिद्धं यवनानां प्रिय-लशुन पलाण्डु भक्षणम् बहु जनपदवासिभिः प्रतिपन्नम्? इत्यादि पर्य्यालोचनीयम् । अत एव कृत्स्नभारतवासिभिर्वर्णाश्रमिभिः यस्तत्तदाचारो निर्विवादं प्रतिपाल्यते तस्य श्रुतिस्मृतिसिद्धत्वमवश्यमभ्युपेयम् । अन्यथा मत्स्यादिभोजनतन्निवृत्त्योरिव प्रादेशिकत्वं स्यात् । अतः सिद्धान्तोऽयं आथर्वणिक कर्म्मबाहुल्यप्रतिष्ठादशाया-मैहिकार्थलालसजनस्वीकृतस्य पञ्चममानवमात्रकग्राह्यस्य वा गोपिशिताशन-स्य रजःशोणितपानरेतःप्राशनवत्, रोगविशेषशान्त्यर्थमङ्गविशेषावकर्तन-वच्च काचित्कप्रयोगविषयत्वेऽपि न वर्णाश्रमिक्रियमाणतया वेदबोधितत्व-मित्यभावकोटिरेव सिद्धान्तपक्ष इति सिद्धम् ।

---

## ग्राहकेभ्यो निवेदनम् ।

'सूर्योदय'-ग्राहका नवीनाः प्राचीनाश्च प्रायः स्वीयां ग्राहकसंख्यां न लिखन्ति । एतेषां महानुभावानां सन्निधौ मया बहुवारं निवेदितम्—यत् ग्राहक-संख्या-लेखन-पुरस्सरं सति प्रयोजने श्रीमन्तः पत्रं लिखन्तु । परन्तु विषयेऽत्र कैरपि यथोचितं ध्यानं न दत्तम् । अतश्च पुनरपि निवेद्यते यद् ग्राहक-संख्या येषां स्मृतिपथं नायाति, प्राचीनाः "प्राचीनो" नवीनाश्च "नवीनः" इति निर्दिशन्तु । येन तेषां सर्वविधसौविध्यविधाने पत्रोत्तरदाने च त्वरा भवेत् । अन्यथा ग्राहक-पुस्तिकायामन्वेषणेन कार्यालयसमयस्य, कार्यसम्पादनविलम्बेन च पाठकानां हानिर्जायते । भूयो भूयः 'सूर्योदय' ग्राहकाणां दृष्टिपातोऽत्रावश्यकः ।

× × × ×

## पत्रव्यवहारसंकेतरहितं पत्रम् ।

बहवः संस्कृतभाषाप्रणयिनो जनाः 'सूर्योदयस्य' आदर्शाङ्कस्य कृते वी० पी० प्रेषणार्थं च पत्रं प्रेषयन्ति, सुरभाषां प्रति स्वीयां परां प्रीतिं च प्रकटयन्ति । परन्तु कियन्तस्तत्र स्वपूर्णसंकेतं ( ग्राम० पोस्ट० जिला ) लेखनमपि विस्म-रन्ति । अतश्च तेषां पत्रव्यवहारसंकेतविरहितं पत्रं लब्ध्वापि कार्यालयः, पत्रोत्तरदानेऽथ चादर्शाङ्क-( नमूना ) प्रेषणे सर्वथाऽसमर्थोऽस्ति । सम्प्रति

एनादृशं पत्रं "मैलवरयु सूर्यनारायणमूर्त्ती कृष्णां पालम्" महाशयस्य अस्मत् कार्यालये वर्त्तते । अयं मद्रास प्रान्तीय इति अनुमीयते । समये समये बहूनि पत्राणि संकेतशून्यानि हस्ताक्षररहितानि च आगच्छन्ति । कृपया प्रेषक-महानुभावैः स्वीयः पूर्णसंकेतो लेखनीयः, इतिनिवेदनम् व्यवस्थापकस्य ।

## संस्कृतशिक्षानुसन्धानसमितिः ।

श्रूयते युक्तप्रान्तीयशासकेन वर्तमानसंस्कृतशिक्षासम्बन्धे एकानुसन्धानसमितिः निर्मिता । या च अन्यभाषाशिक्षाप्रणालीमनुसरन्ती स्वमतं यथासमयं प्रकाशयिष्यति । समितौ निम्नलिखिता विद्वांसः सज्जना विद्यन्ते । डाक्टर भगवान् दासः ( अध्यक्षः ) महामहोपाध्यायः पण्डित प्रमथनाथ तर्क-भूषणम्, पं० ए० चिन्नस्वामी शास्त्री, पण्डित गोपालशास्त्री ( दर्शनकेशरी ) पं० दयाशंकर पाठकः, डाक्टर मंगल देवशास्त्री ( एम० ए० रजिस्ट्रार ) पण्डित काशीरामशर्मा, एम० ए० भूतपूर्व इन्स्पेक्टर यू०पी० संस्कृतपाठशाला । प्रोफेसर बाबूलालत्रिपाठी, पं० सभापति उपाध्यायः ( प्रधानाध्यापको विरला महाविद्यालयस्य ) भगवानदीनमिश्रः ( एम० एल० ए० ) गुरुकुल कांगड़ी विद्यालयस्य कश्चन प्रतिनिधिः । युक्तप्रान्तीय संस्कृत पाठशालानां निरीक्षक ( इन्स्पेक्टर ) महोदयो मन्त्रिकार्यं विधास्यतीति ।

## आयुर्वैदिक सोसायटी ।

श्री मुम्बई आयुर्वैदिक परिषदो (गोवर्धनभुवन डा० दशमुखलेन गिरगांव व्यंकरोड० बम्बई नं० ४) वार्षिकाधिवेशनं सञ्जातं, तत्र नूतनवर्षस्य कार्यकर्तृणामधो निर्दिष्टं निर्वाचनं जातम् ।

अध्यक्षः वैद्य पं० हरिप्रपन्नमहाराजः,

१ उपाध्यक्षौ—वै० पं० यादवजी त्रिकमजी आचार्यः ।

२ पं० माधवप्रसाद जी सोलीसिटर एम० ए० एल० एल० बी०

एतदतिरिक्त-दशसदस्यानां निर्वाचनं जातम् । प्रभावशालिनां दशाऽऽध्यापकानां च नियुक्तिर्जाता । असमर्थ योग्य विंशतिच्छात्राणां प्रतिमासं पञ्च पञ्च रौप्यकाणि दातुं प्रबन्धो जातः ।

निवेदकः आयुर्वैदिक परिषन्मन्त्री—

(१) वैद्य विट्ठलप्रसादः, आयुर्वेदाचार्यः (२) वैद्य कन्हैयालाल शर्मा आयुर्वेदाचार्यश्च



# पौराणिक चरित्रसमालोचनम्।

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः
( स० ध० कालेजोपाध्यक्षः, मुलतान )

[ पाठकैः 'सूर्य्योदय'स्य एकादशद्वादशाब्दयोस्त्रयोदशाब्दीय कतिपयसंख्यासु च 'वेदपुराणयोरेकवाक्यता' इति मम ग्रन्थोंशतः प्रकाशितो दृष्टः स्यात्। अस्य प्रशंसा 'संस्कृतरत्नाकर' सम्पादकमहानुभावेन 'संस्कृतरत्नाकर' स्य ४। ११ अङ्के कृता। एवं श्रीप० कालूरामशास्त्रि प० माधवाचार्य्य-शास्त्रिप्रभृतिभिरप्ययं ग्रन्थो मुक्तकण्ठं प्रशंसितः। अनेनैव क्रमेणाऽस्य 'सूर्य्योदये' प्रकाशने भूयिष्ठसमयो व्यतीतः स्यात्; पञ्चषशतपृष्ठात्मकत्वात् तस्य। अतोऽस्माभिर्निर्द्धारितं यत्—तस्माद् 'जन्मना वर्णव्यवस्था' 'मृतक श्राद्धम्' इत्यादयः सनातनधर्म्मस्य प्रसिद्धविषया उद्धृत्याऽत्र प्रकाश्येरन्। तत इतरे यथा कालं 'सूर्य्योदये' 'संस्कृतरत्नाकरः' जयपुर, 'संस्कृतम्—अयोध्या, 'मधुरवाणी—बेलगाम' 'श्री—श्रीनगर, प्रभृतिपत्रान्तरेष्वपि। तत्र 'जन्मना वर्णव्यवस्था' 'सूर्य्योदय'स्य चतुर्दशवर्षतः प्रकाश्येत। इदानीञ्च प्रियपाठकानामग्रे 'पौराणिकचरित्रसमालोचनं' समुपायनीकुर्म्मो यदाधारेण वादिनः पुराणानि जनतोपहास्यतां नयन्तीत्युक्त्वा प्रक्रम्यते स विषयः ]

अद्यत्वे आर्यसामाजिकप्रभृतयो जनाः पुराणानि कलङ्कयितुं विविधाभिर्विधाभिः प्रवर्त्तन्ते, कलङ्कनेऽपि तैः कतिचिल्लाभा निर्द्धारिताः। प्रथमस्त्वयमेव लाभो यद्—अद्यत्वे एतादृक्षपुस्तकानां प्रकाशनेन दोषैकदृष्ट्यां तथा मूर्खायाञ्च जनतायां तेषां विक्रये जाते स्वोदरदरीपूर्त्तिसाधनं धनं राशी भवति। अन्यश्च लाभोऽयं यद्—एतद्विषयकव्याख्यानेन मूर्खाया : परप्रत्ययनेयबुद्ध्याः, स्वय पुस्तकदर्शने समाधानचिन्तने च कुम्भकर्णस्याऽपि प्रपितामह्या जनताया उपरि शीघ्रं प्रभावो जाजायते; येन सा तत्सम्प्रदायाऽनुवर्त्तिनी भवति। इतश्च समाजादुपदेशकत्वोपायनादिकं प्राप्यते एव; येन स्वपरिवारपोषणाऽर्थं धनमेकत्र भवति। एतदेव च सर्व्वेणेष्यते। अथ च तेनैव सह सनातनधर्म्मस्याऽपि खण्डनं तन्मते जायते। खण्डनञ्च तेषां जीवनम्। खण्डनत्यागस्तु तेषां सम्प्रदाय प्रभावस्य अपसारकः।

एते यानि कुचरित्राण्यवलम्ब्य पुराणानि कलङ्कयितुं चेष्टन्ते तेभ्यः कुचरित्रेभ्यस्ते स्वयं मुक्ता न भवन्ति। परन्तु लोकदृष्टित आत्मानं पातुं स्वपूर्वजानामेव कलङ्कने बद्धपरिकरा भवन्ति। कदाचित् पुरोभागिन इमे पौराणिक-सुचरित्राणि सर्व्वथोपेक्ष्य आपाततो दृश्यमानकुचरित्राणां जनतायां सुमहाप्रेम्णा वर्णनं कृत्वा

पुराणानि दुष्टानि साधयन्ति । वस्तुतो दोषैकदर्शिनाम् × एषां हार्दिकोऽभिसन्धिरयं + तिष्ठति यद्—वयमपीदृशाऽऽचरणाचरणे सर्व्वथा प्राप्तावकाशाः स्वतन्त्रा वा स्याम ।

यदेमे इत्थं प्रोच्यन्ते यद्—अयि भोः ! पुराणैर्येषां यादृंशि * चरित्राण्या-सामासुः; तादृंशि * प्रकाशितानि । एतेन पुराणानि कथं कुत्सितानि स्युः । पुराणेषु स्वार्थप्रवणस्याऽधार्म्मिकस्य दुर्य्योधनस्याऽपि चरितम्; तद्विरुद्धं परोपकारिण ᳲ पूर्णधर्म्मात्मनो युधिष्ठिरस्याऽपि चरित्रमङ्कितम् । पितृभक्तस्य रामस्याऽपि वर्णनम्; पितु ᳲ कारागारे निवेशकस्य कंसस्याऽपि । कुम्भकर्ण सदृक्षाणां मांसभक्षिणामपि वर्णनम्; वाताऽम्बुपर्णाशनानां मुनीनामपि । ध्रुवसदृशभक्तबालकानामपि कथा; असमञ्जस सदृक्षाणांकुमारप्रबाहकाणां बालकानामपि । सावित्री-सदृशसतीनामपि वर्णनम्, असतीनामपि च ।

यत्र नलयुधिष्ठिरादे ᳲ पौराणिकेतिहासेन धार्म्मिकता वीरता च दर्शिता; तत्रैव तद्दौर्ब्बल्य-प्रयुक्तद्यूतदेवनव्यसनमपि प्रतिपादितम् । यस्मिन् पौराणिकेतिहासे ब्राह्मण एव सर्व्वश्रेष्ठ ᳲ प्रतिपादितः; तस्मिन्नेवेतिहासे चतुर्व्वेदज्ञातु ᳲ कुकर्म्मणो ब्राह्मणस्य रावणस्य क्षत्रियरामद्वारा वधोऽपि तु प्रतिपादितः । तर्ह्यनेन पुराणानां कोऽपराधो जातः । यदीयचरित्रस्य यथा गुणदोषा बभूवुः; तथा पुराणेषु निदर्शिताः; एतेन तु पुराणानां सत्यपक्षपातिता निष्पक्षता च सिद्धा ।

यदा वादिनामनेनोत्तरेण पराजयस्तन्मूलकमुखविवर्णता च जन्यते; तर्हि ते पुनः स्वप्रश्नस्य शैलीमीषद् विपरिणमयन्ति । कथयन्ति च, नहि नहि । अस्माकं प्राचीनेषु पूर्व्वजेषु केऽपि नाऽऽसन् दोषाः । पुराणैरेव तेषु कलङ्का योजिता इति । तदा पुनर्वयं तान् पृच्छामो यद्—ब्रूत यूयम । युष्माभिर्यस्य पूर्वजस्येतिहास ᳲ पुराणै ᳲ कलङ्कित ᳲ प्रोच्यते; स इतिहास ᳲ कुतः श्रुतो युष्माभिः ? यदि पुराणतः; तर्हि भवद्भिर्मन्तव्यं भवेद् यद्—यस्य यादृशं चरित्रमासामास, पुराणकारेण तत् तथैव निबद्धम् । अन्यथा पुराणेतिहासादतिरिक्तं भवत्पार्श्वे किं तत् प्रमाणं, येन भवन्त-स्तद्—व्यक्तेस्सत्तामेव साधयितुं प्रभूस्युः । यदि न किमपि प्रमाणान्तरम्; तर्ह्यन्ते भवद्भिः स्वयं मन्तव्यं भवेद् यत्—पुराणैस्तेषु दोषा नाऽऽरोपिताः, किन्तु तेषां यादृशचरित्रं ववृते; पुराणैस्तत् तथैव न्यवध्यत । शिष्टमवशिष्टा अस्माकं पूर्व्वजानां दोषा अथवा पुराणकथितकर्म्माणि, भवत्कथनानुसारं पापकर्म्माणि । तत्र भवतामेव सङ्कुचितायास्तथाऽल्पश्रुतयुक्ताया बुद्ध्या एवाऽयं दोषो यत् तस्यामयं स्थूलोऽपि पुराण-विषय ᳲ प्रवेष्टुं न शक्नोति; न पुराणस्याऽत्र दोषः ।

कानिचिद् एवंविधानि कर्म्माणि भवन्ति; यानि एकस्मै देशाय, एकस्मै कालाय, एकस्मै पात्राय, एकस्यै योनये, एकस्यै जात्यै, एकस्मै आश्रमाय, एकस्मै वयसे,

× दर्शिनाम्—अत्र निषिद्धव्यवधानाणत्वं न । + अभिसन्धिः पुंसि । * यादृंशि, तादृंशि, क्लीबे नुमनुस्वारश्च ।

एकस्यामवस्थायां, शक्तौ, एकस्मिन् कुले, एकस्यां शाखायां, च दोषा भवन्ति, पापानि भवन्ति। तान्येव कर्म्माणि अन्यस्मै देशाय, अन्यस्मै कालाय, अन्यस्मै पात्राय, अन्यस्यै योनये, अन्यस्यै जात्यै, अन्यस्मै आश्रमाय, अन्यस्मिन् वयसि, अन्यस्यामवस्थायाम्, अशक्तौ, अन्यस्मिन् कुले, अन्यस्यां शाखायाञ्च, दोषा न भवन्ति। अत एव महाभारते शान्तिपर्व्वण्युक्तम्—

"स एव धर्म्मः सोऽधर्म्मो देशकाले प्रतिष्ठितः।
आदानमनृतं हिंसा धर्म्मो ह्यावस्थिकः स्मृतः" ३६।११

एतदुक्तम्भवति—आङ्गलदेशे रीतिरस्ति यत्—तत्र पुरुषाः परस्त्रीभिः सह सपारस्परिक शरीरसम्पर्कं नृत्यन्ति। काचित् स्त्री यमन्यपुरुषं नृत्यार्थं रोचयेत; यदि स पुरुषो निषेधेत्, तर्हि निषेधकः पुरुषः परमोऽसभ्यो मन्यते। नृत्यभूमिश्चैतावच्छ्लक्ष्णा भवति यत्—नृत्यसमये चरणस्खलनमाशङ्क्यते। तदा प्रस्खलन्तीं स्त्रियं पुरुषः, प्रस्खलन्तं वा पुरुषं स्त्री आत्मन्यवलम्बेते। अधुना कथ्यतां यत्—किं भारते एवं-विधानं सभ्यताऽऽस्ते? आहोस्विद् असभ्यता? अधुनेदमेकमेव कर्म्म देशभिन्नतायां सभ्यतात्वम् असभ्यतात्वञ्च आचकलत्। कल्प्यतां यत्—आङ्गलानां कृपया यथाऽऽङ्ग्ली भाषा भारतीयानां, कुलभाषा जाता, 'कोट बूट हैट पैण्ट कालर टाई। करजन फैशन प्रभृतिस्तदीया वेषभूषाऽस्माकं सभ्यता सामग्री जाता। स्त्रीणामावरणप्रथाऽपगता। स्वस्त्रीणां पुरुषान्तरैः सार्द्धं 'कांग्रेस'स्य 'पिकटिङ्ग'ऽऽन्दोलने प्रेषणं लज्जावहं न मन्यते। अधुना ततोऽतिशय्य 'क्लबेषु' अन्यस्त्रीभिः करपीडनमपि सभ्यताऽभवत्। एवमग्रे क्रमशोऽन्यस्त्रीणां हस्तावलम्ब्य सह नर्त्तनमपि सभ्यताऽभवेद् यदि; तर्हि वर्त्तमानानां वादिनां दृष्टाविदं दोषभूतमपि भाविसन्ततीनां दृष्टौ गुणो भविता। यदा च ता भाविसन्ततयो भवल्लिखितं स्त्र्यन्तरेण सह नृत्यं प्रति घृणासूचकमितिहासं पठेयुः; तदा ता भवदीयां मूर्खतां स्वकीयाञ्च सभ्यतामवभोत्स्यन्ते; नाऽत्र संशीतिः।

आङ्गलदेशे कस्यचित् सभ्यस्याऽऽगमने स्व-'हैट' स्याऽवतारणम् अभिवादनं मन्यते। परमस्मदीयदेशे कस्यचिन्मरणे तत्सम्बन्धिनोऽग्रे शोकप्रकाशनार्थं स्वशिरस्त्राणमवतार्य्यते। अस्मद्देशे उत्थाय मूत्रयतः कृते 'अब्राह्मणोऽयं य उत्तिष्ठन् मूत्रयति' इति पदवी उपहाररूपे वितीर्य्यते स्म; जलेन च शौचाऽकर्त्ता जनो मूर्खो मन्यते स्म, नग्नस्नानञ्चाऽसभ्यताऽवबुध्यते स्म; परमाङ्गलदेशे उत्थाय मूत्रणं 'द्वित्रैश्च कर्गलैः पश्चाद् गुदं संशोधयेद् बुधः। न करेण स्पृशेन्नीरं शीतकाले विशेषतः' इति 'नग्नः टीनटबे स्नायाद्' इति विधिश्च सभ्यता मन्यते। अस्मद्देशस्था अपि केचिद् एतत्प्रभाविता एतदादिकं सभ्यतायाश्चरमां काष्ठां मन्यन्ते। युक्तप्रान्ते पूर्वप्रदेशे वा, अन्यस्य महानसे प्रवेशो महानपराधः; पञ्चनदे एवं करणं नाऽपराधः॥ भारते यथा गलशोषस्य दूरीकरणार्थं दुग्धस्योपयोगः; तथाऽऽङ्गलदेशे स्वप्रकृतिस्थ-

ताऽर्थं मद्यस्योपयोगः । अत्र तु मद्यस्योपयोगेन अचैतन्यप्रसङ्गः; तत्र तु अनेनैव चैतन्यं भवति ।

एतेन सिद्धं यद्—भिन्न-भिन्न देशे एकमेव कर्म्म एकत्र दोषो भवति, अन्यत्र च गुणः । एकत्र असभ्यता, अपरत्र च सभ्यता । एकत्र पापम्, इतरत्र च पुण्यम् । अत्रोदाहरणानां न नैयून्यम् । तदुच्यतां यत्—किं कश्चिद् गुणदोषयोरेकमेव सम्पूर्णं लक्षणं निर्म्मातुमीष्टे ? यदि निर्म्मिमीताऽपि, तर्हि तदीयमपवादशास्त्रमवश्यं निर्म्मातुमापतिष्यति । अतएव लौकिकानि कुत्सिताऽकुत्सितकर्म्माणि व्यवस्थापयितुं न शक्यानि । सर्वे मनुतनुजाः स्वाऽनुकूलानि कर्म्माणि सुकर्म्मत्वेन व्यपदिशन्ति । अतो लौकिकानि कर्म्माणि देशकालसमाजादिभेदेन सुकर्म्म-कुकर्म्मत्वाभ्यां व्यवस्थाप्यन्ते । नहि देशविशेषे सुकृत्यत्वेन मन्यमानं विधीयमानं वा कर्म्म देशान्तरे समाजान्तरे वा सुकर्म्म भवति कदाचित् । किं भूयसा—तस्मिन्नेव देशे समाजे च कालात्यये तदेव सुकर्म्म कुकर्म्म जायते ।

अधुना कालः परीक्ष्यताम् । एकस्मिन् काले या वार्त्ता गुणतामस्प्राक्षीत्; सैव कालान्तरे दोषतां गाहते । अत्रेत्थमवसेयम्—सृष्ट्यारम्भादद्यतनकालतः पञ्चषवर्षपूर्व्वपर्य्यन्तं चाण्डालादीनां स्पर्शनं दोषो मन्यते स्म । स्पर्शनं तु दूरे, तैः सह सम्भाषणमपि प्रायश्चित्तावहं खलु मन्यते स्म । परन्तु अद्यत्वे स्पर्शनन्तु आस्ताम्, अद्य 'भङ्गी' कन्यया सह विवाहे कृते सति 'हिन्दी मिलापा'दि सुधारकपत्त्रेषु 'आदर्शविवाहः' इति शीर्षकं प्रकाश्यते । प्राचीनकाले सवर्णविवाहोऽविगीतो मेने । ततोऽसवर्णविवाहो ब्राह्मणस्य जात्यन्तरैः सह निकृष्टो मतोऽपीषन्निन्दितो मन्यते स्म । परन्तु ब्राह्मणस्य शूद्रया सह, तथा अधमवर्णस्य उच्चवर्णवता सह प्रतिलोमविवाहोऽत्यन्तनिन्दितो मन्यते स्म । अद्य तु उच्चवर्णीयस्य 'भङ्गी' प्रभृति जातीयबालिकया सह पाणिपीडनमादर्शविवाहो मन्यते । श्रीयुत गान्धिसदृशवैश्यस्य, स्वबालकस्य ब्राह्मणकन्यया सह विवहनम्, पण्डित श्रीजवाहरलालनेहरूब्राह्मणस्य च स्वभगिन्या वैश्यबालकेन प्रतिलोमविवहनं नेतृत्वपदवीदायकं मन्यते ! कस्मिंश्चित् समये मौहम्मदा ईशवीयाश्च न स्पृश्यन्ते स्म॥ परन्त्वधुना स्पृश्यन्ते । ततस्तैः सह खादनपानस्य व्यवहारो नासीत्; अद्य च तैः सह खादनपानं पिपीलिकागतिन्यायेन प्रवर्त्तमानं वर्त्तते । अद्य तैर्निर्मितानां 'डबलरोटी-बिस्कुट-बर्फ-सोडावाटर प्रभृतीनामुपयोगः सभ्यतान्तर्गतो मन्यते । अद्यतनसमयपर्य्यन्तं तैस्सह विवाहादि सम्बन्धोऽनुचितो मन्यते स्म; परं 'श्यामकुमारी नेहरू सदृश्यः पं० जवाहरलालसजातीया कुमार्य्यो 'जमील खाँ' सदृशमौहम्मदैः सह विवाहं गौरवास्पदं मन्यते ।

अधुना विचार्य्यतां यद्–यदैकमेव वस्तु एक एव वा व्यवहार एकस्मिन् समये दोषः समयान्तरे च गुणोऽभूत्; तर्हि इतिहासेऽस्मत्पूर्व्वजेषु दोषा एव प्रतिपादिता इति कथनस्य साहसिक्यं भवन्तःकुतःकर्त्तुं शक्ताः ?। तदा कदाचित् सैव वार्त्ता सैव वा व्यवहृतिर्ग्राह्यत्वेन मता भवेत्। 'महाभारत' द्वारा ज्ञायते यत्–पूर्व्वसमये कामभावाऽभावेन विवाहविधिर्न भवति स्म। स्त्रियो गाव इव पुरुषाश्चाऽनड्वाह इव नग्ना निवसन्ति स्म। पुरुषाश्च यां काञ्चित् स्वपत्नीं निर्म्मातुं शेकुः। कालक्रमाच्च कामभावे परिवृद्धे विवाहविधिव्यवस्था नियमयितुमापत्यत। तद् भवन्तस्तं समयं साम्प्रतिकसमयेन सह सङ्गमय्य कथं समालोचयितुमीशानाः ?। एवं देवमन्दिरेष्वन्त्यजानां प्रवेशनं प्राक् कया दृशाऽदृश्यत; अधुना च कया दृशा दृश्यते—इत्यादिघटनासु यदा दृक् प्रवर्त्तेत, इमाश्च सर्व्वा घटना यदीतिहासे आपतेयुः; तर्हि यदि भाविसन्ततयो मन्दिरेष्वस्पृश्यानां प्रवेशनं गुणं मन्यन्तां कामम्। परं यस्मिन् युगे तेषां मन्दिरेषु प्रवेशनस्याऽऽज्ञा नाऽऽसीत्; तदा स कथं गुणो मन्तुं शक्यते ?। अत एवेतिहासस्य घटनाः सदा एककालेन न तोलनीयाः कदाचिद्। यतो दृष्टिकोणे भेदः प्रवर्त्तते कालान्तरे *।

अधुना पात्रमादीयताम्।—एकः पुरुष ईदृशः; तस्मै विषं ( संख्या ) वाजीकरणं भवति। अन्य ईदृक्पुरुषो यद्—विषं तस्य यमद्वारे प्रेषणसाधनम्। एकोऽस्ति रुग्णः; घृतं तं राजयक्ष्मसंवलितं करोति। एकश्चाऽस्ति स्वस्थः, घृतं तं सबलं निर्म्माति। दृश्यतामधुना—एकमेव घृतं तथा विषधत्तूरादिकमधिकारिभेदकारणादेकस्मै दोषोऽभूद् इतरस्मै च गुणः। एकः पूर्णस्वस्थपुरुषो बह्वपथ्यसेवनेऽपि न हानिं प्राप्नोति; एकश्च साधारणोऽल्पे एवाऽपथ्ये सेविते रुग्णो भवति॥ एकः सबलपुरुष एकस्मिन् दिने कतिकृत्वो मैथुनेऽपि न क्षीयते; अन्यश्च दुर्व्बलः सकृदपि मैथुने कृते उत्थानार्होऽपि न तिष्ठति। केचिदीदृग्विधाः पुरुषा भवन्ति यत्—सर्प्पस्तान् दशेत्, वृश्चिकस्तान् दष्टान् कुर्य्यात्; तथापि तेषु तत्प्रभावो न जायते। धत्तूराऽर्कादिभक्षणेऽपि तेषां न किञ्चिद् गलति। मद्यपानेऽपि तेषु तत्प्रभावो न पतति। तादृशाः स्वयं विषमश्नीयुः, कश्चिद् वा तान् विषमाशयेत्; तेषु तद्दुष्प्रभावो न भवति। परन्त्वल्पसामर्थ्यवान् यदि तेषामनुकुर्व्वन्नात्मानं सर्प्पेण दंशयतु वृश्चिकेन वा; अर्कधत्तूराऽशनं वा कुर्य्यात्; तर्हि किं स मरणादचेतस्कत्वाद्वाऽऽत्मानं त्रातुमीष्टे जातु ?।

तर्ह्युच्यताम्, किमेकमेव वस्तु सर्व्वत्र समानतामाचकलत् ?। यदि न; तर्हि सिद्धमेतद् यद्–अलौकिकसामर्थ्यशालिभ्यः प्राग्भ्योऽस्माभिः प्रतीयमानं कुकर्म्मोऽपि

---

* अयत्वे काश्चित् स्त्रियः पुरुषाश्च केचिद् विवाहे जातेऽपि 'तलाकं' धर्मं मन्यन्ते। केचिच्चाऽद्यत्वे विवाहं युक्तं न मत्वा यां काञ्चिन्मनोऽभीष्टां स्त्रीं मनोलग्नतापर्यन्तं सम्बन्धुमिच्छन्ति, एवमेव स्त्रियः पुरुषम्। भवन्मतेऽयमधर्मोऽपि तेषां मते धर्म इतिकाले दृष्टिकोणवैचित्र्यमनुमीयताम्।

स्वकुकर्म्मफलदानेन शक्तम्। अस्मादृशसाधारणांश्च तत् समूलमुन्मूलयितुमलम् ?। अत एवोक्तं वेदान्तदर्शने शाङ्करभाष्ये—“ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येन उपमातुं युक्तम्, तस्मात् समूलमितिहासपुराणम्” १।३।३३। यदि भवन्तो हरिद्वर्णस्योपनेत्रं परिदध्युः; तर्हि भवद्भिः सर्व्वं हरित-हरितमेव द्रक्ष्यते। परन्तु धर्म्मविषये नेयं वार्त्ता भवेत्। प्रत्युत—एतदभिधातुं शक्यं यद्—भवदादिकाः सङ्कुचितबुद्धयो जना धर्म्माऽधर्म्मलक्षणमेव न निर्म्मातुं शक्ताः। तदैव तु प्रोक्तम्—‘धर्म्मस्य तत्त्वं निहितं गुहायाम्’। धर्म्मस्य अधर्म्मस्य च एकैकस्मिन् सामान्यलक्षणे निर्म्मितेऽपि भवदीयं तल्लक्षणं सर्व्वत्र चरितार्थीभवितुं न शक्ष्यति; तदपवादस्थलं सर्व्वथा मन्तव्यमेव भवेत्।

किञ्चिदालोच्यताम्—सत्यभाषणं धर्म्मः, असत्यभाषणञ्च पापमिति सिद्धान्त एवाऽऽदीयताम्। एका गौः कचिद् धावमाना गच्छति। किञ्चित्कालोत्तरं तत्र एको वधिक एति। सोऽस्मान् पृच्छति यत्—किं भवद्भिरितः काचिद् गौर्गच्छन्ती दृष्टा ?। यदि वयं तत्र सत्यं ब्रूमस्तर्हि गोवधो भवति। तत्र सत्यम् अधर्म्मो भवति, असत्य-भाषणञ्च धर्म्मः॥ यदि भगवान् श्रीकृष्णो निरपराधमपि द्रोणाचार्य्यं व्यापादयितुं युधिष्ठिरद्वाराऽसत्यं नाऽभाषयिष्यत्; तर्हि पापस्य दुर्य्योधनस्य राज्यस्थैर्य्यं जाते पापसाम्राज्यमवर्द्धिष्यत ×। तत्र असत्यभाषणमपि धर्म्मोऽभूत्। एवमेव धृति-क्षमादयः सर्व्वे धर्म्माः कस्मैचिदधर्म्मा भवेयुः, कस्मैचिच्च धर्म्माः। स्वयं सत्कृप-दृष्ट्याऽऽलोचनीयम्॥ एकस्याः पतिव्रतायाः वृन्दायाः—यदीयसतीत्वप्रभावेण तत्पतिर्न मर्त्तुं शक्त आसीद्—यदि सतीत्वभङ्गो न व्यधास्यत; तर्हि तदीयदुष्ट-पतिकृपया सर्व्वासामेव पतिव्रतानां सतीत्वभङ्गो ऽभविष्यत्। तत्र एकस्याः सतीत्व-भङ्गरूपोऽधर्म्मोऽपि धर्म्मोऽभूत्।

कथनस्याऽयमभिसन्धिर्यद्—धर्म्माऽधर्म्मस्य मीमांसा कठिना सूक्ष्मा वा ? सा साधारणी अपठिता च, पठिताऽपि सपक्षपाता जनता न वेदितुमीष्टे। सा शास्त्रीय-सामान्य कर्म्माण्येव धर्म्म इत्यवगच्छति। ‘मा हिंस्यात सर्व्वा भूतानि’ ‘गां मा हिंसीः’ ‘न सत्यादधिको धर्म्मः’ ‘अहिंसा परमो धर्म्मः’ इत्यादीन् सामान्यधर्म्मानेव सा धर्म्ममवगच्छति; परमिमे एव विधयः कदाचिद् दुःखकर्त्तारो भवन्ति। ‘मा हिंस्यात् सर्व्वा भूतानि’ इति वचनमनुतिष्ठता पृथ्वीराजेन युद्धे भूयो भूयो मुक्तः सहाबुद्दीनो मोहम्मदाधिपतिस्तन्नाशबीजं भूत्वा सर्व्वं भारतमेव दास्यनिगडे बबन्ध। इयमेव दशा जाता अल्ला उद्दीनं नृपं गृहागतं मुक्तवतो भीमसिंहस्य। स स्वयमेव तेन बद्धः। यशस्विसिंहेन अवरङ्गजीवसदृशं सर्प्पं पयः पाययता स्वयमेव फलमास्वादितम्। परन्तु शिवाजी प्रभृतयस्तु ‘अहिंसा परमो धर्म्मः’ इति मर्य्यादामतिक्रम्य ‘आर्ज्जवं हि कुटिलेषु न नीतिः’ इति चाऽऽचर्य्यं युक्तमेव चक्रुः। अतः शास्त्रीय-कृत्यान्यपि

× आत्मने पदे इद्।

सर्व्वदा न धर्म्मायन्ते, किन्तु कालानुकूल्येनैव व्यवस्थाप्यन्ते । 'यतोऽभ्युदय निःश्रेयस-सिद्धिः स धर्म्मः' इति तुलया सर्व्वान् कृत्याऽकृत्यविधीन् परीक्ष्य तदैव 'अयं धर्म्मः—अयमधर्म्मः' इति निर्णयो दातव्यो भवति । न खल्वापाततोऽधर्म्मं दृष्ट्वा 'अयमधर्म्म इति, आपाततो वा धर्म्मं दृष्ट्वा 'अयं धर्म्मः' इति शक्यमभिधातुम् । अनेन खलु स्वस्यैव दुस्साहसिकत्वं प्रतीयते । परन्तु शास्त्रीय-विधिनिषेधवाक्यानि उत्सर्गोऽपवादरूपन्यायेन गौरवलाघवतारतम्यं समष्टिव्यष्टिहिताऽहितञ्च निर्णीय व्यवस्थापनीयानि । यस्मिन् कार्य्ये वैयक्तिकतायामधर्म्मोऽपि भवेत्; परं तद्—द्वारा समष्टिगत-लाभरूपधर्म्मो भवेत्; तत् कार्य्यमनवद्यं भवति । एतद्रादिकं व्यवस्थापयितुमक्षमायाम् आपाततश्च पश्यन्त्यां परप्रत्ययनेय-बुद्ध्याञ्च जनतायां वादिनः पुराणग्रन्थविरुद्धं स्वदुष्प्रभावं पातयितुं सफला भवन्ति, सनातनधर्म्माणश्च तत्रोत्तरन्तोऽपि उत्तरस्य सूक्ष्मत्वाज्जनतया हृदये उट्टङ्कनेऽसमर्था भवन्ति । तत्र कारणमिदं यत् 'ताजमहल'स्य पातनार्थं चतुराणकोग्रहीता कर्म्मकरोऽपि पर्य्याप्तो भवति । परन्तु तन्निर्म्माणार्थं बृहच्छिल्पिनां प्रयोजनीयता । परं तैर्बृहच्छिल्पिभिर्निर्म्मितस्तदादर्शोऽपि ( नक़्शा ) साधारणजनताया मस्तिष्के कथं प्रवेष्टुं शक्नुयात् ! ( शेषं पुनः )



## 'प्रताप'—प्रतापपरिचयः ।

प्रणेता—आशुकवि श्रीमदीशदत्तशास्त्री 'श्रीशः' साहित्यरत्नं काव्यतीर्थः काशी ।
( अभिनव खण्डकाव्यस्य प्रताप विजयस्यैको भागः )

( १ )

अभूत्पुरा ध्वस्त-समस्त-दूषणः,
प्रभारतो भारत-भूमि-भूषणः,
महाबली दुर्गचितौरशासकः,
प्रतापसिंहः परताप-नाशकः ॥

( २ )

अनाथनारीजन-शोकशोचनः,
गवां द्विजानां गलदश्रुमोचनः,
स एक एवाभवदार्यरोचनः,
समुल्लसल्लोहित लोललोचनः ॥

( ३ )

अटाट्यमानोऽटवीषु सन्ततं–
स्वतन्त्रतायै सकलत्रपुत्रकः,
अवाप दुःखं नहि किं व्यथाऽऽकुलः–
स वीरतायास्तनयो वरान्वितः !

( ४ )

मुमोच कोपात्तरुणारुणाधरः–
कचप्रबन्धान् यवनीजनस्य यः,
स हिन्दुना केन स-रक्तबिन्दुना–
न लालनीयो जगदेकरत्नवत् ॥

( ५ )

प्रसन्नचेता बलिनां धुरन्धरः,
लसल्ललाटः परिणद्धकन्धरः,
मनोज्ञनेत्रः शरदिन्दुसुन्दरः,
स वेषतोऽभूद् भुवने पुरन्दरः ॥

( ६ )

स्ववैरिसैन्ये सहसा प्रवेशतः–
स्व वेषतो भीमतमं तमो नयन्–
प्रतापसिंहो निजसिंहनादतः–
प्रकम्पयामास न कस्य मानसम् ॥

( ७ )

अकिञ्चनैः कल्पतरुप्रभस्मृतः,
स्वयं बिडौजा इति वीर-वन्दितः,
धृतोऽरिभिः काल इव स्वमानसे
स कल्कि-कल्पः कलितः कलौ जनैः !!

( ८ )

क्षणे क्षणे यस्य रणे रतिर्भवेत्
पदे पदे यो विनिपातयेदरीन्,
तदद्य किं विस्मय-कारणं बुधाः !
गृहे गृहे सम्प्रति चेत्स पूज्यते !!

---

रचनैषा काशी महाराजाधिराज १०५ श्रीमदादित्यनारायणसिंहसभापत्ये श्राविता तत्रैव 'रघुनाथपुर'पुरन्दरेण विहार-हारेण स्वर्गीय–श्रीराजेन्द्रप्रसादमिश्रेण १५) रूप्यकैः सबहुमानं पुरस्कृता च ।

# तृतीयोऽङ्कः ।

( विष्कम्भकः )

( ततः प्रविशति कुटिलया दर्शितवर्त्मा सशङ्को रायाणः )

रायाणः—( स्वगतम् ) अहं हि वृषभानुराजदुहितुर्जगदेकसुन्दर्या राधायाः पाणिगृहीती; गतः स हि मे दिवसो यत्र भाग्यवतां गणने प्रथममुपात्तनामाहमभूवम् ।

जामाता नृपतेः कुलेन विदितः प्राप्तो नवीनं वय-
स्त्रैलोक्याद्भुतसुन्दरीपतिरहम्, वित्तश्च वित्तादिभिः ।
एवं मे सुभगाभिमानजनिताहंकारशैलं रुजन्
राधामाधवयोगबन्धनपरीवादोऽद्य वज्रायते ॥ १ ॥

तदेतत् प्रतिचिकीर्षुरनुजया कुटिलया प्रदर्शितवध्वभिसारवर्त्मा सशङ्क एवा-त्रागतोऽस्मि ।

किन्तु—

जाया मे नवहेमकल्पलतिका श्रीर्वा ततो वाधिका,
रूपेणाप्रतिमा स्मृता वितनुते स्पर्शोत्सुकं मे मनः ।
सा स्पृष्टा तु कृशानुतप्तकनकज्योतिर्ज्वलत्पिण्डवत्,
चण्डांशुप्रतिमेव वा मम तनोर्दाहाय सम्पद्यते ॥२॥

एवं हि या दिव्यप्रभावा भोगेच्छया प्रसारितकरेण पत्या सकृदपि परामर्शं नालभत, कस्तावदन्यः पुरुषः तामधिगन्तुमलं स्यात् ।

( क्षणं विचिन्त्य ) लोकः पुनर्वदति, मन्त्रमूलप्रयोगनिपुणाः किल स्वैरिण्यो भवन्ति, तत्कदर्थितश्चाहमेवमसिधारव्रतविडम्बनामनुभवामीति ।

( दिशं दृष्ट्वा ) अहो दुर्जनता लोकस्य, नहि तादृगाकृतिरेवं क्रूरकर्मणः प्रसूति-र्भवति, न खलु कौमुदी कालकूटमुत्पादयतीति यस्य न परामर्शः ।

( दीर्घं निश्वस्य ) अथवा—निर्मलकान्ति हीरकमपि गरलप्रसूतिर्भवति, सुमनसोऽपि कीटमुत्पादयन्ति । यद् भवत्वद्य निर्णयो भविष्यति ।

कुटिला—( स्वगतम् ) भाउरि देव हिं भणिदं पेक्खिदा कुंज मंडव सज्जा ण उण तहिं वा मग्गे वा पेक्खिदो कहणो ण अ वहु ण अ से सहीओत्ति; अवि णाम सच्चं एदं ? ( विचिन्त्य ) कधं णाम सच्चं ? अज्ज दुल्लच्छवो णिअदो । जं भोदु दाणीं वेवदि मे हिअअं, कधं भादुणो मे पच्चओ भवेत्ति, भोदु भावं जानिस्सं । ( प्रकाशम् ) अज्ज किं चिंतेसि ।

[ भागुरिदेवकाभ्यां भणितं प्रेक्षिता कुञ्जमण्डपशय्या न पुनस्तत्र वा मार्गे वा प्रेक्षितः कृष्णः, न च वधूः न चास्याः सख्य इति । अपि नाम सत्यमेतत् ? कथं

नाम सत्यम् ? अद्य दोलोत्सवो नियतः । यद् भवतु इदानीं वेपते मे हृदयम्, तत्कथं भ्रातुर्मे प्रत्ययो भवेदिति । भवतु भावं ज्ञास्यामि । आर्य किं चिन्तयसि ? ]

रायाणः—( साधिक्षेपम् ) एतत् चिन्तयामि अतिपतति द्वितीयं यामं यामिनी । न दृश्यते पदं त्वदुक्ताया अभिसारिकायाः, तत्किम् अरुणोदयस्तदभिसरणवेला ? ।

कुटिला—अज्ज ! कधं कुप्पसि । ण क्खु तितीअ जामे अरुणोदओ भोदि जेण अदिक्कांता अभिस्सारवेलत्ति संभावेसि ।

[ आर्य ! कथं कुप्यसि, न खलु तृतीययामे अरुणोदयो भवति, येनातिक्रान्ताभिसारवेलेति संभावयसि ] ।

रायाणः—वत्से ! नाहं कुप्यामि त्वदाग्रहकृतविफलखड्गधारणस्त्वदायोजने तु क्रमेण शिथिलादरोऽस्मि ।

कुटिला—अज्ज ! मा उत्तम्म, अह्माणं कुलदेवदा भद्दआली अइरेण आओअणं मे सफलं करिस्सदि ।

[ आर्य ! मा उत्ताम्य, अस्माकं कुलदेवता भद्रकाली अचिरेण आयोजनं मे सफलं करिष्यति ] ।

रायाणः—वत्से ! सत्यमसि मे हितकारिणी । यतो व्यासक्तचित्तोऽहमिदानीं त्वया स्मारितोऽस्मि भगवत्याश्चरणारविन्दस्य ।

पुण्यं पर्व दिनं कुजस्य मिलिता तारा विशाखाभिधा,
लब्धा तत्र महानिशा वनमिदं निर्मक्षिकं सम्प्रति ।
शाक्तानां परमार्थसाधनविधौ योगोऽयमत्युत्तमो
नोपेक्ष्यः प्रकृते त्वमास्स्व कृतधीर्जाप्यस्तु मन्त्रो मया ॥३॥

( नेपथ्ये वंशीध्वनिः )

कुटिला—( श्रुतिमभिनीय ससंभ्रमम् ) तुवरदु अज्जो, सुनादु वंसी रवं कह्णस्स, ता आणामि गदा अम्हाणं वहू कुंजं । [ त्वरताम् आर्यः, शृणोतु वंशीरवं कृष्णस्य, तज्जानामि—गता अस्माकं वधूः कुञ्जम् ।

रायाणः—( सकोपम् ) कथमेतद् भविष्यति, सर्वतः कण्टकगुल्मावरणा कुञ्जवनभूमिरियमेतन्मात्रैकपदीका; राधां च गृह एव स्थापयन्तावावामत्रागतौ । नहि, वैहायसगतिमन्तरेणास्मदहष्टस्य जनस्य कुञ्जप्रवेशो युज्यते ।

कुटिला—जं भणदु भवं, एस दे अंजली, मा विलंबदु, एदु कुंजवणं, वहूं तहिं कह्णेण संगदं पेक्खिस्सदि । [ यत् भणतु भवान्, एष ते अञ्जलिः, मा विलम्बतां, एतु कुञ्जवनं, वधूं तत्र कृष्णेन संगतां प्रेक्षिष्यते । ]

रायाणः—( स्वगतम् ) व्याहता मे जपप्रवृत्तिः, अथवा—

यत्पादपद्मयुगलं भगवान् महेशा
गृह्णाति योगजितवायुरुरस्थलेन ।
तद्रूपमन्त्रजपसाधनसम्प्रयोगो
नाल्पेन नाम घटते सुकृतेन जन्तोः ॥४॥

( प्रकाशम् ) कुटिले ! यदि तावदद्य वचनमिदमन्यथा स्यात्, तदा सर्वं एव राधा-परीवादो मिथ्येति निर्णेष्यामि ।

कुटिला—होदु एव्वं [ भवतु एवम् ]

रायाणः—गच्छाग्रतः, एषोऽहं त्वामनुच्छामि । ( इति निष्क्रान्तौ )

( विष्कम्भकः ) ।

( ततः प्रविशतः पुष्पाभरणभूषितौ दोलायमानौ श्रीराधाकृष्णौ पुष्परज्जुधारिण्यश्च सख्यः । )

श्रीराधा—असंवरणिज्जो दोलन वेओ ता पडंतं विव अप्पाणं कहिं धारेमि ( इति वेगमभिनीय श्रीकृष्णवक्ष आलिङ्ग्य लज्जां नाटयति ) [ असंवरणीयो दोलनवेगः तत् पतन्तमिव आत्मानं कुत्र धारयामि ] ।

श्रीकृष्णः—( स्वगतम् ) अहो महदुपकृतं दोलया, यतः—

यातान्यत्र दिनानि संगतवतोर्भूयांसि नौ गूढयो
रुत्कापि प्रथमन्तु नैव कुरुते किञ्चित् स्वयं लज्जया ।
चुम्बन्तं मृदु चुम्बति प्रगुणिता मामानतास्या शनैः,
प्रत्यालिङ्गति बाहुबन्धनगता स्वेनापि चेन्नेक्ष्यते ॥५॥

अस्मिन् क्षणे तु—

उद्गच्छत्-करताल-कङ्कणरणत्कारोच्च-हास्य-स्वरम्,
दृष्टा ताम्रमुखी सखीभिरभितो हर्षत्रयालङ्कृता ।
आवर्त्तोद्गत-वातवेग-विगलच्चीनांशुकप्रच्छदा,
दोलान्दोलन-संभ्रमेण चकिता वक्षो ममालिङ्गति ॥६॥

तदहमपि यथोचितमनुतिष्ठामि ( इति वामबाहुना कण्ठमालिङ्ग्य प्रकाशम् )—

पुष्पदोलोत्सवस्येदं सारं सारङ्गलोचने ।
सौरभं कुसुमस्येव दुग्धसिन्धोरिवामृतम् ॥७॥

श्रीराधा—( लज्जां नाटयति )

वृन्दा—( विलोक्य सहर्षम् ) बहिणीओ अअं अह्माणं महन्तो उच्छओ जहिं माहवीसहआरसरिसं अण्णोण्णसंगदं एदं जुअलं पमुदिदं दीसदि ता णच्चन्तिओ गाएह्म ।

[ भगिन्यः अयम् अस्माकं महानुत्सवः, यत्र माधवीसहकारसदृशं अन्योन्य सङ्गतं एतद् युगलं प्रमुदितं दृश्यते, तत् नृत्यन्त्यो गायामः । ] ( संस्कृतमाश्रित्य )—

राधा - कृष्णौ जयतां जयताम् ।
राधा - कृष्णौ मानस ! भजताम् ॥
तदुभय - दोलन - रसमय - सिन्धौ ।
उदित - कुमुदमुदि रजनीबन्धौ ॥
मज्जति कुञ्ज - कुटी सुखभारा ।
दिशि दिशि सन्तत - सौरभ - भारा ॥
दधती मुखमिव कनकपटान्तम् ।
तलमिह सुविमल - शशिकर - कान्तम् ॥
कोकिलकाकलिकूजनवचनम् ।
अलिकुलचञ्चलकुन्तलरचनम् ॥
विकसित - कुसुम - शताञ्चित - हास्यम् ।
मलयानिल - चल - वल्ली - लास्यम् ॥
अचर - चराहित - विहित - प्रेमा ।
मूर्तिमतीव कृपागत - सीमा ॥
सैषा जयति विकाशितसुषमा ।
जयति युगलतनुरसगार सगा ॥
राधा - कृष्णौ जयतां जयताम् ।
राधा - कृष्णौ मानस ! भजताम् ॥८॥

( इति सखीभिः सनृत्यं गायति )

श्रीकृष्णः—( सपरितोषम् ) साधु सख्यः साधु । ननु पृच्छामि किमन्यदवशिष्यतेऽस्योत्सवकृत्यस्य ।

वृन्दा—एक्कं अवसिट्ठं [ एकम् अवशिष्टम् ]

श्रीकृष्णः—किं तत् ?

वृन्दा—सहीहिं णिसीध-कुसुमाइं ओचिदाइं, तेहिं भट्टिदारिअं पुणो वि मंडिअ इमंस्सि पुप्फसअणिज्जे तुए समं ताए संवेसणं ।

[ सखीभिः निशीथकुसुमानि अवचितानि तैः भर्तृदारिकां पुनरपि मण्डयित्वा अस्मिन् पुष्पशयनीये त्वया समं तस्याः संवेशनम् ] ।

श्रीकृष्णः—( विहस्य ) तदुच्यताम् कर्मद्वयमिति, पुष्पमण्डनं संवेशनञ्च । उक्तं पुनरेकवाक्येन ।

वृन्दा—भो संवेसणविलंबभीरुअ ण क्खु अंगेण अंगिणो दुदिअत्तणं होदि, पुप्फमंडणं हि अंगं संवेसणं अंगि ।

[ भो संवेशनविलम्बभीरो न खलु अङ्गेन अङ्गिनो द्वितीयत्वं भवति, पुष्पमण्डनं हि अङ्गं संवेशनम् अङ्गि ] ।

श्रीकृष्णः—( विहस्य ) सखि ! सत्यमभिहितं भवत्या यदङ्गमेवास्याः पुष्पमण्डनमिति ।

तथा ह्येषा—

वर्णे चम्पकदाम नाम भजति, घ्राणे तिलं, पंकजं
वक्त्रे, कोकनदानि पाणिचरणे, नीलोत्पले नेत्रयोः ।
बन्धूकानधरोष्ठयो, रदरुचौ कुन्दानि, केशोच्चये
नीलाभा गिरिशा(लि)यिनी, मृदुतनौ पुष्पं शिरीषस्य च ॥९॥

वृन्दा—सिलेसणिउण ! किं अह्मेहिं पुच्छिदेहिं, आणवेहि दासीजणं, जं तुह्माणं रोअदि सो ज्जेव अह्माणं उच्छवो ।

[ श्लेषनिपुण ! किमस्माभिः पृष्टाभिः, आज्ञापय दासीजनं, यत् युष्मभ्यं रोचते स एव अस्माकम् उत्सवः ] ।

श्रीकृष्णः—दोलासंचालनश्रान्तासु युष्मासु यथायुक्तम् उपदिशामि ।

वृन्दा—सामसुंदर ! दोला संचालण सुह निमग्गाणं विनोदणं ण्णेदं अह्माणं, कुदो दाव एत्थ समवोहो, ( सखीः प्रति ) बहिणीओ ता अधिअदरं दोलावेह्न ( इति सर्वाः पुनर्वेगेन दोलयन्ति ) [ श्यामसुन्दर ! दोलासञ्चालन–सुख–निमग्नानां विनोदनंन्वेदमस्माकं, कुतस्तावदत्र श्रमबोधः । भगिन्यः तदधिकतरं दोलयामः ]

श्रीकृष्णः—( राधां प्रति ) मा भूदत्र श्रमो बोध विषयस्तावदासाम्, कथमपि लक्षणीयस्त्वस्माभि', सम्प्रति तु परां निर्वृत्तिमनुभवामि । यतः—

मृदुलसुरभिकाया शश्वदुत्कम्पमाना
निरुपम-गुण योगाद् बद्ध-भावा सखीभिः ।
परमभिमतमासामुत्सवं वर्द्धयन्ती
हरति कुसुमदोला मामियं त्वत्समाना ॥१०॥

श्रीराधा—( सलज्जस्मितं ) अज्जउत्त ! एव्वं उच्छवो एसो तुमं विअ लज्जं मे हरइ ।

[ आर्यपुत्र ! एवम् उत्सव एष त्वमिव लज्जां मे हरति ]

श्रीकृष्णः—प्रिये ! अपि ततो दुःखायते भवती ?

श्रीराधा—( स्वगतम् ) किं एत्थ भणामि सुहं इअं लज्जा ताए हाणी वि सुहं, कला सुहं, माणो सुहं अज्जउत्तो उण परमं सुहं ( प्रकाशम् ) एदं दुक्खं जं लहुगमणा रअणित्ति ।

[ किमत्र भणामि—सुखम् इयं लज्जा, तस्या हानिरपि अधिकं सुखम्, कला सुखं मानः सुखं आर्यपुत्रः पुनः परमं सुखम् एतद् दुःखं यत् लघुगमना रजनीति । ]

श्रीकृष्णः—प्रिये ! सत्यमिदम् यतः—

सुधांशुहास्योपमचन्द्रिकांशुका
वसन्तपुष्पाभरणा वनस्थली ।
यदि त्वदासङ्गसुधारसाप्लुता ,
शतं युगानां क्षणवद् विलीयते ॥११॥

श्रीराधा—( श्रीकृष्णवक्षसो हस्तमपनीय ) मंदवेआ दोला अज्जउत्त ! मुंच मं संतो विअ सहिजणो, ता सहीणं मनोरहपूरणस्स किदे दाणीं जुत्तं अह्माणं ओदरणं । [ मन्दवेगा दोला आर्यपुत्र ! मुञ्च माम् श्रान्त इव सखीजनः तत् सखीनां मनोरथ-पूरणस्य कृते इदानीं युक्तम् आवयोः अवतरणम । ]

श्रीकृष्णः—अस्त्वेवम्, सखि ! वृन्दे पर्यवस्थाप्यताम् दोला यावदवतरावः ।

वृन्दा—बहिणीओ ! दढं धारेध दोलिअं जाव अहंवि धारेमि । [ भगिन्यः ! दृढं धारयत दोलिकां यावदहमपि धारयामि ]

श्रीराधा—थिरा दोलिआ ता ओदरेमि । ( अधो विलोक्य ) इदो कधं ओदरिस्सं [ स्थिरा दोलिका तत् अवतरामि, इतः कथं अवतरिष्यामि ]

श्रीकृष्णः—प्रिये ! अलं संभ्रमेण, तिष्ठ क्षणं यावदहम् अवतरामि ( इत्यवतीर्य )

एह्येहि देहि निजबाहुयुगं ममांशे
त्वत्कक्षपृष्ठपरिवेष्टनबद्धहस्तः,
आदाय वक्षसि तवाशु मृणालवल्ली-
मृद्वीमहं तनुलतामवतारयामि ॥१२॥

श्रीराधा—( सलज्जं ) का गई ( इति यथोपदिष्टं करोति ) । [ का गतिः ]

सर्वाः—( आनन्दकलकलं कुर्वन्ति ) ।

श्रीकृष्णः—( स्पर्शसुखमभिनीय स्वगतम् )—

एषोऽवशो मम करः शिथिलो भुजोऽस्याः
जातं परस्पर-विकम्पन-साक्षि वक्षः ।
स्वेदाम्बुपिच्छिलविलुप्तबलं वपुर्नौ
न स्यात् किमेतदवतारणमप्रमादम ॥१३॥

( नेपथ्ये )

अज्ज ! कुदो गदोसि पेक्ख पेक्ख दिव्वप्पहावाए दे वहूए पुरिसप्फंसाण-रिहत्तणं [ आर्य ! कुतो गतोऽसि प्रेक्षस्व प्रेक्षस्व दिव्यप्रभावायाः ते वध्वाः पुरुष-स्पर्शानर्हत्वम् ] ।

वृन्दा—( सभयम् ) हद्धी हद्धी, सरसंजोएण जाणिदं आअदा कुडिला जुअलं

पेक्खती कुदो वि गदस्स जेट्ठभादुणो राआणस्स सद्दावणं करेदित्ति, ता गोवड्ढणहर ! को दाणीं उबाओ [ हा धिक् हा धिक्, स्वरसंयोगेन ज्ञातं आगता कुटिला युगलं प्रेक्षमाणा कुतोऽपि गतस्य ज्येष्ठभ्रातू रायाणस्य शब्दापनं करोतीति, तत् गोवर्द्धन-धर ! क इदानीं उपायः ? ]

सख्यः—( सभयम् ) अहो किं करेह्म [ अहो किं कुर्म्मः ] ।

श्रीकृष्णः—अलं शङ्कया त्वरितमपसार्यताम् दोला, निशीथावचितानि पुष्पाणि पूजासंविधानतया लताप्रतानपार्श्वे स्थापनीयानि । वृन्दे त्वं च रक्ष कुञ्ज-मण्डपद्वारं भर्तृदारिकास्वेष्टदेवतां पूजयतीति । इदं हि ते प्रथमं कृत्यम् ।

( सर्वाः यथा निर्दिष्टमाचरन्ति )

श्रीराधा—( संस्कृतमाश्रित्य ) आर्यपुत्र !

स्वर्भानुप्रतिमा विधोस्तव चिरं द्वेष्ट्री ननान्दा मम ।
श्वश्रूस्तद्वशगा विनिन्दति च नौ व्याघ्रीव भीतिप्रदा ॥
एतावन्ति दिनानि नाजनि पतिम्मन्यः प्रतीपस्तु मे ।
प्रेक्षेत स्वयमेव चेत् कृतमिदं किं तत् फलं निश्चिनु ॥१४॥

श्रीकृष्णः—( सादरम् ) लीलामयि ! अलमलीकत्रासेन ।

श्रीराधा—अखिलपते ! तव चरणं शरणं, नास्ते ममापरं किञ्चित् ।
मीनस्येव जलं वा जलदो वा चातकस्येव ॥१५॥

श्रीकृष्णः—( अपवार्य ) सर्वशक्तिसमृद्धे ! भक्तानुग्रहपरतन्त्रा यदेतम् अशक्या-भिनयमात्मनो दर्शयसि, तदनुवर्तमानेन मया साम्प्रतमेव कालीरूपमवलम्ब्यते ।

सख्यः—जादं पूजासविहाणअं [ जातं पूजासंविधानकम् ]

श्रीकृष्णः—इदानीं सर्वा द्वारमेव प्रतिपालयत ।

( सख्यस्तथा कुर्वन्ति )

श्रीकृष्णः—प्रिये ! अध्यास्यताम् पूजासनं विलोक्यतां च मे कालीरूपम्,

असीयतामियं वंशी भुजौ स्तां द्विगुणस्थितौ ।
अम्बरं त्वम्बरं मुण्डस्रज्यतां वनमालिका ॥१६॥

( इति कालीरूपेणावतिष्ठते )

वृन्दा—( सविस्मयम् ) वहिणि ! आअदा कुडिलत्ति सरेण जाणिअ अह्माणं प्राणदोवि पिअस्स उच्छवस्स भंगो किदो, ण उण दीसदि सा, ता किं मे भमो जादो ? ( इति वहिर्निरूपयति )

[ भगिनि ! आगता कुटिलेति स्वरेण ज्ञात्वा अस्माकं प्राणेभ्योऽपि प्रियस्य उत्सवस्य भङ्गः कृतः, न पुनः दृश्यते सा, तत् किं मे भ्रमो जातः ? ] ।

ललिता—( सहर्षम् ) जइ एव्वं ता जीवेम्ह । [ यद्येवं तद् जीवामः । ]

वृन्दा—( निरूप्य सोद्वेगम् ) बहिणि ? अप्पमादं चिठ्ठ, वीसाम मंडवादो आ अच्छंतो राआणो विअ दीसदि । [ भगिनि! अप्रमादं तिष्ठ, विश्राममण्डपात् आगच्छन् रायाण इव दृश्यते ]

ललिता—( सभयं दृष्ट्वा ) णं कुडिलावि—[ ननु कुटिलापि ]

( ततः प्रविशति कुटिलया समं सशस्त्रो रायाणः । )

रायाणः—वत्से ! कुलजाः खलु व्यभिचारस्पृष्टा अपि जारसमागमे रहः सेविन्यो भवन्ति, विमृश्यैवं शून्यमंडपमिमं गतवानस्मि ।

कुटिला—( अधरं परावर्त्त्य ) अज्ज ! जाए आअरणं पेक्खिअ वेसाजीवा अवि लज्जाए ओनदवअणादो होंति । तारिसी दे वहू:; वहिणी भविअ किं दे भणामि किंण न पेक्खिदं मए ? तु एवि एदं पेक्खिदं भवे । तुवरन्तो एहि ( इत्यग्रतो गच्छति )

[ आर्य यस्या आचरणं दृष्ट्वा वेशाजीवा अपि लज्जया अवनत वदना भवन्ति, तादृशी ते वधूः, भगिनी भूत्वा किं ते भणामि, किं न प्रेक्षितं मया । त्वयापि एतत् प्रेक्षितं भवेत् । त्वरमाण एहि । ]

रायाणः—( तामनुसरन् ) वत्से, इदानीं जानामि सत्यमेवोच्यते भवत्या—

( साधिक्षेपम् )

अहो चारित्रं दुश्चारिण्याः ।
व्रीडाभीतिजडा गृहेषु नियतं लीनेव या लक्ष्यते ।
यस्याश्चाधरमात्रदृष्टविभवो हासस्तडिच्चञ्चलः ।
हस्तैकव्यवधानपङ्गु वचनं वृत्तं न कामोज्झितम् ।
सैषागत्य वने निशीथविषमे जारेण रंरम्यते ॥१७॥

( आकाशे बद्धलक्ष्यः सरोषम् )

अरे पुंश्चलि !
शशाङ्कविमलं कुलं न गणितं त्वया विश्रुतम्
न वा नरपतेः पितुर्विपुलमानतुङ्गं शिरः ।
न धर्मसरणिः श्रुतिस्मृतिमता च सन्सेविता
न चेह परतो भयं किमपि नाम धिक् त्वां शतम् ॥१८॥
आं ( स्मरणमभिनीय ) ( स्वगतम् ) किमिदानीमेवं वचनक्रमेण,
( प्रकाशम् ) कुटिले त्वरितं दर्शय तौ ।

---

# अखिल भारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृतविश्वविद्यालय
## का परीक्षाफल

### सन् १९३८ ई०

#### व्याकरण प्रथम

| रोल नम्बर | नाम विद्यार्थी | केन्द्र नाम |
|---|---|---|
| | **प्रथम श्रेणी** | |
| ३ | सत्यनारायण शर्मा | गोंदिया |
| १८४ | प्रयागदत्त पन्त | भरत महाविद्यालय ऋषिकेश |
| १८८ | दामोदर शर्मा | " |
| ४०० | रामचन्द्र द्विवेदी | बनारस |
| | **द्वितीय श्रेणी** | |
| ५ | मंगली प्रसाद त्रिपाठी | गोंदिया |
| ३१ | पारसनाथ त्रिवेदी | श्रीकृष्णब्रह्मचर्याश्रम वरौली ( छपरा ) |
| ५८ | मदनमोहन राधाकृष्ण जोशी | शोलापुर |
| ५९ | सूरजकरन रामलाल परोल | " |
| ७६ | जगदानन्द पांडेय | हरिहराम्बा राजविद्यालय अमावाँ |
| ७७ | श्री माधव झा | " |
| ८० | जगदीश पांडेय | " |
| ८१ | कुशेश्वर झा | " |
| १२४ | कान्तिराम माधोराम पांड्या | गुलालवाड़ी बम्बई |
| १२६ | उमाशंकर जीवतराम उपाध्याय | " |
| १३२ | पराशरशर्मा | " |
| १३३ | बृजलाल पंड्या | " |
| १३४ | जगन्नाथ दयाराम जोशी | " |
| १७२ | विश्वनाथ तिवारी | श्री सनातनधर्म सं० पा० घरहरा (छपरा) |
| १७३ | केदारनाथ त्रिवेदी | " |
| १८३ | नन्दकिशोर अवस्थी | भरतमहाविद्यालय ( ऋषिकेश ) |
| १८५ | दत्तराम भट्ट | " |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| १८६ | रामेश्वर शर्मा | भरत महाविद्यालय ( ऋषिकेश ) |
| १८७ | रघुवर दत्त | ” |
| १८९ | श्रीमती कमला देवी | ” |
| १९० | केशोदत्त शर्मा | ” |
| १९१ | नारद जोशी शर्मा | ” |
| २१५ | रामगोपाल सुरोलिया | मुकुन्दगढ़ |
| २१६ | बालकृष्ण शर्मा | वर्द्धवान |
| २३२ | सिद्धनारायण मिश्र | कानपुर |
| २३३ | ताराचन्द गौड़ | ” |
| २३४ | गंगाधर शर्मा | ” |
| २३५ | रामनिवास शर्मा | ” |

( कलाप व्याकरण )

| | | |
|---|---|---|
| २७३ | श्रीमती वीणापाणि देवी— | आर्यमहिला विद्यालय काशी |
| २७४ | श्रीमती चन्द्रप्रभादेवी | ” |
| २७५ | श्रीमती कनकप्रभादेवी | ” |
| ३४८ | गुणेश्वर मिश्र | बुढ़ानाथ भागलपुर |
| ३४९ | पुरन्दर झा | ” |
| ३५० | देवनन्दन झा | ” |
| ३५१ | जगदीश प्रसाद झा | ” |
| ३५२ | धनंजय चौधरी | ” |
| ४०३ | शिवशंकर शुक्ल | बनारस |
| ४१७ | रामबिहारी त्रिपाठी | ” |
| ४१९ | भरत त्रिपाठी | ” |

तृतीय श्रेणी

| | | |
|---|---|---|
| ५२ | लक्ष्मी पाँडेय | देव ( गया ) |
| ७३ | सूरजदत्त शर्मा | अमावाँ |
| ७८ | अवधकिशोर पांडेय | ” |
| १२९ | विद्यादत्त शर्मा | गुलालवाड़ी बम्बई |
| १३१ | पुंजीराम दयाराम जोशी | ” |
| १७१ | शारदानन्द पांडेय | धरहरा ( छपरा ) |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| २१३ | परमानन्द सुरोलिया | मुकुन्दगढ़ |
| ४०६ | वंशनारायण त्रिपाठी | काशी |
| ४२६ | मोतीलाल सारस्वत | " |
| ४४२ | देवकीनन्दन पन्त | " |
| ४५६ | बद्रीनाथ त्रिपाठी | " |
| ४७५ | केशोदत्त शर्मा | संगरिया बीकानेर |
| ४७६ | पृथ्वीराज शर्मा | संगरिया बीकानेर |
| ४८७ | सभाजीत मिश्र | बनारस |

## व्याकरण मध्यमा

### प्रथम श्रेणी

| | | |
|---|---|---|
| ६ | विहारीलाल गौड़ | गोंदिया |

### द्वितीय श्रेणी

| | | |
|---|---|---|
| ७४ | सिद्धनाथ पांडेय | हरिहराम्बा राजविद्यालय अमावाँ |
| १७० | शारदानन्द त्रिपाठी | धरहरा ( छपरा ) |
| १७४ | रामेश्वर त्रिपाठी | " |
| १८२ | रुद्रप्रसाद शर्मा | भरत महाविद्यालय ( ऋषिकेश ) |
| २७६ | श्रीमती महामायादेवी | आर्षमहिला विद्यालय काशी |

### तृतीय श्रेणी

| | | |
|---|---|---|
| ५१ | सत्यनारायण वैद्य | देव ( गया ) |
| २६२ | राधाकृष्ण त्रिपाठी | सनातनधर्म पा० धरहरा ( छपरा ) |

## व्याकरण शास्त्री

### द्वितीय श्रेणी

| | | |
|---|---|---|
| ४७० | रुद्रानन्दपाठक | हरिहराम्बा राजविद्यालय अमावाँ |

## वेद प्रथमा

### द्वितीय श्रेणी

| | | |
|---|---|---|
| १० | श्री रामचन्द्र ठाकुर | सुलतान गंज ( भागलपुर ) |
| २१ | रामरत्न शर्मा | करांची । |
| ३२८ | मणिशंकर गौरीशंकर त्रिवेदी | पोरबन्दर । |
| ४२३ | गुतेश्वर मिश्र | बनारस |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | |
|---|---|---|---|
| | तृतीय श्रेणी— | | |
| २० | मोहनलाल त्रिवेदी | कराँची | |
| १३५ | अम्बालाल छुनालाल पण्ड्या | डी० एल० पाठशाला बम्बई | |
| | आगममध्यमा | | |
| | द्वितीय श्रेणी | | |
| ४६६ | शशिभूषण चक्रवर्ती | चौरा मेदनीपुर ( बंगाल ) | |
| | कर्मकाण्ड प्रथमा | | |
| | द्वितीय श्रेणी | | |
| ११ | कैलाशझा | सुलतानगंज, | |
| | कर्मकाण्ड मध्यमा | | |
| | द्वितीय श्रेणी | | |
| ४६७ | पङ्कजाक्षक्रियाविशारद | चौरा मेदनीपुर। | |
| | ज्यौतिषप्रथमा | | |
| | प्रथम श्रेणी | | |
| ३२६ | मगनलाल शर्मा | माणिकवाई सं० पाठशाला पोरबन्दर | |
| | द्वितीय श्रेणी | | |
| ८ | श्रीनन्दकिशोर झा | सुलतानगंज ( भागलपुर ) | |
| ३३० | दलपतरामहर्षजी | माणिक वाई संस्कृत पाठशाला पोरबन्दर | |
| ३३१ | भट्ट लालजी शर्मा | ” | |
| ४६३ | शिवचरणलाल दीक्षित | बनारस | |
| | मध्यमा द्वितीय श्रेणी, | | |
| १४३ | बद्रीप्रसाद शर्मा | करौली | |
| २५८ | महानन्दद्विवेदी | संस्कृत महाविद्यालय आरा | |
| | | | श्रेणी |
| ३३४ | प्रतापनारण झा | भागलपुर | २ |
| | पुराण प्रथमा | | |
| २१४ | नागरमल शर्मा गौड़ | मुकुन्दगढ़ | २ |
| ४१५ | दीनानाथ त्रिवेदी | बनारस | ३ |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| | **धर्मशास्त्र प्रथमा** | | |
| १२ | श्रीकृष्णचन्द्र ठाकुर | सुलतानगंज ( भागलपुर ) | २ |
| | **धर्मप्रभा** | | |
| २१६ | श्रीमती माहेश्वरी देवी | लक्ष्मीसंस्कृत विद्यालय मेहदीबागान ( बर्दवान ) | १ |
| २२० | श्रीमती चान्द्वती कुमारी | " | १ |
| २१८ | श्रीमती रामदुलारी कुमारी | " | २ |
| २२१ | श्रीमती सुधा कुमारी | " | ३ |
| २२२ | श्रीमती चन्द्रावती कुमारी | " | ३ |
| | **धर्मप्रवेशिका** | | |
| ७० | श्रीमती रामानन्दी देवी | दानापुर | २ |
| ७१ | कुमारी सुमित्रा गुप्ता | " | २ |
| ७५ | श्रीमती सावित्री देवी | अमाँवा | ३ |
| ८२ | श्रीमती सरयू देवी | " | ३ |
| २५४ | रामस्वरूप चतुर्वेदी | संस्कृत महाविद्यालय आरा | ३ |
| २५५ | नारायण शर्मा | " | ३ |
| २५६ | श्रीधर शर्मा | " | ३ |
| २५७ | रामजन्म पाठक | " | ३ |
| | **साहित्य प्रथमा—** | | |
| ४ | लक्ष्मीनारायण शर्मा | गोंदिया | १ |
| ३२४ | मणिशंकर बालजीशर्मा, | माणिकबाई संस्कृतपाठशाला पोरबन्दर | १ |
| ३२५ | हरगोविन्द पांड्या | " | १ |
| ३२६ | भट्ट उद्धवजी शर्मा | " | १ |
| ३२७ | प्रभाशंकर विट्ठल जी | " | १ |
| ४६८ | अम्बिकारंजन उत्थासनीशर्मा | चौरा मेदनीपुर | |
| १८ | मनोहर दास श्रीवास्तव | करांची | २ |
| १९ | बलभद्र शर्मा | " | २ |
| २७ | गजानन भाया | सेंधियरसूरत | २ |
| ११५ | श्रीनिवास कुलकर्णी | सोलापुर | २ |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| ११७ | लक्ष्मणभगवन्त कुलकर्णी | सोलापुर | २ |
| ११८ | खण्डेराव कुलकर्णी | " | २ |
| ११९ | विश्वनाथ भट्ट | " | ३ |

साहित्य मध्यमा—

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| २६ | बालकृष्ण चिन्तामणि शंकर | सान्धियर सूरत | २ |
| ५७ | शिवलिंग शिवाचार्य | सोलापुर | २ |
| ११३ | वासुदेव केशव | " | २ |
| ११४ | बालकृष्ण प्रह्लाद गवाई | " | २ |
| १२० | वासुदेव बालकृष्ण तापीकर | " | २ |
| १२१ | नारायण दिगम्बर बलवन्तकर | " | २ |
| १२२ | मुरलीधर भगवन्त देशपाण्डेय | " | २ |
| १८६ | शिवकुमार शर्मा | जागेश्वर संस्कृतविद्यालय डिबाई | २ |
| २२३ | अरुणकुमार झा | घोघरडीहा दरभङ्गा | २ |
| ३६८ | श्रीरामव्यास | लाडनून ( मारवाड़ ) | ३ |

हिन्दीप्रवेशिका ( प्रथमा )

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| ६४ | कृष्णदेवलाल | दानापुर | १ |
| ९० | गोवर्धन दास अग्रवाल | भोपालसिटी | १ |
| २६३ | विन्ध्येश्वरी प्रसाद मिश्र | दानापुर | १ |
| ९८ | देवनारायण सिंह राजपाली | " | १ |
| ३४३ | हरधनसिंह चौहान | मनपुरी | १ |
| ४८४ | जलेश्वरनाथ द्विवेदी | काशी | १ |
| ४३२ | राघवेन्द्रत्रिपाठी | " | १ |
| ४६२ | चिन्तामणि पाण्डेय | " | १ |
| ३४१ | इन्द्रसिंह ( प्रज्ञाचक्षु )—कुंवरलालसिंह ब्रह्मचर्याश्रम मैनपुरी | | २ |
| ३४२ | विश्वम्भरसिंह भादोरिया | " | २ |
| ४२१ | केशरीकृष्णत्रिपाठी | बनारस | २ |
| ४३४ | राममिलनसिंह | " | २ |

हिन्दीविशारद ( मध्यमा )

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| ६३ | दशरथ प्रसाद | दानापुर | १ |
| ६५ | रामदेव प्रसाद श्रीवास्तव | " | १ |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
|---|---|---|---|
| ६६ | जगनारायणसिंह | दानापुर | १ |
| २३६ | योगेन्द्रनाथ शर्मा | लखनऊ | १ |
| २४३ | रघुबीर सहाय त्रिवेदी | " | १ |
| ४२४ | नरसिंहपाण्डेय | काशी | १ |
| ४२६ | मणिराम | " | १ |
| ४२७ | मोहनलाल गुप्त | " | १ |
| ४३३ | कामेश्वरनाथ श्रीवास्तव | " | १ |
| ४३५ | रमाशंकर पाण्डेय | " | १ |
| ६५ | रामवरन प्रसादसिंह | दानापुर | २ |
| ६७ | द्वारकानाथसिंह | " | २ |
| २१७ | गोरखनाथ द्विवेदी | वर्द्धवान | २ |
| २४१ | चन्द्रिका प्रसाद सेन | लखनऊ | २ |
| ३४० | जगरूप सिंह | कुंवरलालसिंह ब्रह्मचर्याश्रम मैनपुरी | २ |
| ४२५ | रामप्रीति पाण्डेय | बनारस | २ |
| ४३६ | रमेशचन्द्र कुलकर्णी | " | २ |
| ४०६ | विजयनारायण त्रिपाठी | " | ३ |
| ४७४ | रामेश्वर उपाध्याय | किशनगढ़ | ३ |

जूनियर परीक्षा—

| | | | |
|---|---|---|---|
| ४१४ | उमेशत्रिपाठी | बनारस | १ |
| २७७ | छोटे सिंह | चाँदपुर | ३ |

सीनियर—

| | | | |
|---|---|---|---|
| ४५४ | रामबचनसिंह | बनारस | ३ |

## साहित्यशास्त्री ।

| | | | |
|---|---|---|---|
| ५६ | रामचन्द्र माधुरालाल कुदाल | सोलापुर | १ |
| १७६ | जगदीश प्रसाद मिश्र | इन्दौर | १ |
| ४५३ | धर्मनाथ त्रिपाठी | बनारस | १ |
| ४८१ | नरसिंह शास्त्री | " | १ |

## साहित्याचार्य—

( द्वितीय विभाग )

| | | | |
|---|---|---|---|
| ५५ | शंकर नानाबुवा मोहलकर | सोलापुर | |

## हिन्दीशास्त्री।

| | | | |
|---|---|---|---|
| ८८ | रामकृष्ण द्विवेदी | भोपाल | २ |
| ८६ | आत्माराम शर्मा | „ | २ |
| रोल नम्बर | नाम विद्यार्थी | केन्द्र | श्रेणी |
| १०० | पुरुषोत्तम शर्मा पन्त | भरत महाविद्यालय, ऋषिकेश | २ |
| १८१ | स्वामी तेजेन्द्र सिंह | „ | „ |
| २४५ | दामोदर लाल शर्मा | जयपुर | „ |
| ३४५ | बिहारी लाल शर्मा | बुढ़ानाथ भागलपुर | ३ |

ज्यौतिषाचार्य—

| | | | |
|---|---|---|---|
| १७७ | लक्ष्मीदत्त शर्मा | इन्दौर | १ |

सर्वदर्शनाचार्य—

| | | | |
|---|---|---|---|
| ४२० | श्रीकुंवरलाल | बनारस | १ |

धर्मशास्त्राचार्य—

| | | | |
|---|---|---|---|
| ४४५ | रघुवीरदत्तशर्मा | „ | १ |

हिन्दीरत्न—

| | | | |
|---|---|---|---|
| ६१ | रामबिहारीलाल दीक्षित | इटावा | २ |
| ४८३ | त्रिलोकीनाथमिश्र | बनारस | २ |



# अ० धार्मिकाध्यात्मिक संस्कृत विश्वविद्यालयान्तर्गत–

## काशी आयुर्वेद संमिलनी परीक्षा फल १९३८ ई०

### आयुर्वेद प्रथमा

#### प्रथम विभाग

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| ४६ | बलराम प्रसाद तिवारी | गोदियां |
| १७८ | दामोदर प्रसाद मिश्र | इन्दौर |
| २९९ | अमूल्य रत्नसेन वकील | (तिलुड़ी वाकुरा ) |

#### द्वितीय विभाग–

| | | |
|---|---|---|
| ४७ | तुलाराम | गोदियां |
| ४८ | तुलीचन्द | " |
| ५० | बृजलाल मालवीय | " |
| १०९ | रामदयालु मिश्र | शाहजहांपुर |
| १४१ | श्रीमती रत्नावली देवी | करौली |
| १४५ | बेनीराम शर्मा | अमृतसर |
| १४६ | लेखराम शर्मा | " |
| १४७ | सन्तराम शर्मा | " |
| १४८ | तेजराम शर्मा | " |
| १९८ | मोहनलाल | हैदराबाद |
| २०० | नरोत्तमलाल | " |
| २०१ | अमृतलाल औदीच्य | " |
| २०५ | प्रीतमदास शर्मा | " |
| २०६ | इन्द्रभान व्यास | " |
| २२४ | बनवालीलाल | घोघरडीहा (दरभंगा) |
| २३९ | महाराजदीन शुक्ल | बनवाली गली (लखनऊ) |
| २५१ | केदारनाथ पाठक | संस्कृत महाविद्यालय (आरा) |
| २५३ | यमुनादत्तमिश्र | |

## द्वितीय विभाग

| रोलनम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| २९३ | लाला शंकर बक्स | सीतापुर |
| २९६ | कमलाधर त्रिवेदी | " |
| ३०० | जगदानन्दराय | निलुड़ी शिक्षाश्रम (बाकुरा) |
| ३०१ | राम किंकर चौधरी | तिलुड़ी |
| ३०२ | कृष्ण किशोर सरकार | " |
| ३१४ | वासुदेव प्रसाद अग्रवाल | वेलनगंज (आगरा) |
| ३१६ | डाक्टर देवेन्द्र किशोरदेव शर्मा | " |
| ३१७ | रंगीलाल वैश्य | " |
| ३१९ | बाबूलाल वैद्य | " |
| ३२० | नन्द किशोरशर्मा | " |
| ३२१ | रामस्वरूप कुलश्रेष्ठ | " |
| ३३८ | पं० चन्द्रप्रकाश | कुंवरलाल सिंह ब्रह्मचर्याश्रम मैनपुरी |
| ३८० | हरनारायण परसाई | होशंगाबाद |
| ३८१ | अवधविहारीदास | " |
| ३८२ | देवराज त्रिपाठी | " |
| ३८३ | ठाकुर लक्ष्मणसिंह मालगुजार | " |
| ३९३ | रामसूरतमणि त्रिपाठी | बनारस |
| ४१३ | त्रिपुरारि पांडेय | " |
| ४३८ | हरिशंकर शर्मा | " |
| ४५८ | सदानन्द जोशी | " |

### तृतीय विभाग—

| | | |
|---|---|---|
| १४ | नानकराम-चण्डी रामानी | कराची (सिंध) |
| ३७ | माहेश्वर प्रसाद शर्मा | हिवेट संस्कृत पाठशाला टेहरी |
| ३९ | विश्वेश्वर दत्त जोशी | " " |
| ४३ | जनार्दन पांडेय | देव (गया) |
| २०७ | इसरू दासु | हैदराबाद (सिंध) |
| २५२ | सिद्धेश्वर उपाध्याय | संस्कृत महाविद्यालय (आरा) |
| २७२ | मालवीय पूर्णचन्द्रजैन | कटनी |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| २८६ | पंडित ज्ञानचन्द्र | बांसबाजार (अमृतसर) |
| ३१८ | रासविहारी | श्रीरामरसायनशाला बेलनगंज आगरा |
| ३३६ | उमाशंकर वैश्य | कुंवरलाल सिंह ब्रह्मचर्याश्रम मैनपुरी |
| ३७४ | राजाराम उपाध्याय | भभुआ (आरा) |
| ४६६ | भूषण चन्द्र सामन्त | चौरा (मेदनीपुर) |
| ४८० | सन्तकुमार ओझा | वाशिष्ठ आयुर्वेदिक औषधालय कराँची |

## आयुर्वेद मध्यमा

### प्रथम विभाग

| | | |
|---|---|---|
| ४३ | ईश्वरी प्रसाद सत्यपाल | गोंदिया |
| २२५ | रामभरोस सिंह | घोघरडीहा (दरभंगा) |
| २८३ | रामगोपाल उपाध्याय | गोयनका आयुर्वेद विद्यालय फीरोजाबाद (आगरा) |
| २८४ | श्रीमती चन्द्रकला देवी | " |
| ३३६ | केप्टन सिंह चौहान | कुंअरलाल सिंह ब्रह्मचर्याश्रम (मैनपुरी) |

### द्वितीय विभाग

| | | |
|---|---|---|
| १३ | हुन्दराज गुप्त भादवा | कराँची |
| २४ | मोतीलाल गोयनका | चुरू |
| २८ | विपिन विहारी | सूरत |
| ३३ | इन्द्रदत्त शर्मा | द्विवेद संस्कृतपाठशाला टेहरी (गढ़वाल) |
| ४४ | सीताराम तिवारी | गोंदिया |
| ६० | चण्डी प्रसाद शर्मा | सरदार शहर (बीकानेर) |
| ८४ | रामगुलाम पाठक | हरिहराम्बाराजविद्यालय अमावां (विहार) |
| ८५ | शिवनारायण चतुर्वेदी | " |
| ८६ | रामशरण पांडेय | " |
| ८७ | रामदहिन त्रिवेदी | " |
| १६८ | विन्ध्येश्वरी प्रसाद | गोरखपुर (जवलपुर) |
| १६६ | लालूराम मिश्र | " |
| १८३ | ब्रह्मदेव तिवारी | डिवाई |
| १८४ | रामचरण झा | " |
| १८५ | देवीदत्त शर्मा | " |

| रोलनम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| २३० | प्रभु शंकर पांडेय | कानपुर |
| २३१ | दुर्गाचरण पांडेय | " |
| २४८ | रामनरेश पाठक | संस्कृत महाविद्यालय आरा |
| २४६ | यमुनादत्त चतुर्वेदी | " |
| २५० | ब्रह्मेश्वर उपाध्याय | " |
| २६४ | मेहता कृष्णदत्त वैद्य | चौक भोपाल |
| २६७ | चन्द्रदत्त मिश्र | सलकिया (हवड़ा) |
| २६८ | हरिप्रसाद शर्मा | कटनी |
| २६६ | गुलजारीलाल जैन | " |
| २७६ | विहारीलाल गुप्त | गोयनका आयुर्वेदविद्यालय फीरोजाबाद (आगरा) |
| २८० | गंगा प्रसाद शर्मा | गोयनका आयुर्वेदविद्यालय फीरोजाबाद (आगरा) |
| २८१ | रामस्वरूप शर्मा | " |
| २८५ | वनारसी दास | " |
| २८६ | गंगा सहाय दीक्षित | " |
| २८७ | मानिकचन्द जैन | " |
| २६१ | प्यारेलाल अग्निहोत्री | सीतापुर |
| २६७ | शिवकुमार त्रिपाठी | " |
| २६८ | हरदत्त मिश्र | " |
| ३०३ | राम हरिराय | तिलुड़ी शिक्षा आश्रम (वाकुरा) |
| ३०४ | क्षितीश्वर फौजदार | " |
| ३०५ | गंगा गति गोस्वामी | " |
| ३०६ | अनिल कुमार राय | " |
| ३०७ | शरच्चन्द्र गुप्त | " |
| ३०८ | गौरीपदराय | " |
| ३०६ | कृष्ण किशोर चौधरी | " |
| ३३२ | शिवशंकर मिश्र | सीतापुर |
| ३३७ | देवी सहाय शुक्ल | मैनपुरी |
| ३४७ | वैद्यनाथ शर्मा | भागलपुर |
| ३५३ | शिवबालक शुक्ल | श्रीनिवास गार्डन कानपुर |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| ३५४ | श्यामसुन्दर दास | श्रीनिवास गार्डन कानपुर |
| ३८७ | रामेश्वर प्रसाद पुरोहित | होशंगाबाद |
| ४५० | वसन्तविहारी | फीरोजाबाद (आगरा) |

तृतीय विभाग

| | | |
|---|---|---|
| १५ | निरंजननाथ शर्मा चौधरी | करांची |
| १६ | गोविन्दराम शर्मा जुआल | ,, |
| ३४ | अरविन्द मोहनसकलानी | हिवेट सं० पाठशाला टिहरी |
| ३५ | श्रीधरानन्द पांडेय | ,, |
| ३६ | सत्य प्रसाद नटियाल | ,, |
| १०१ | भगवती प्रसाद जोशी | मेड़ता (मारवाड़) |
| १०८ | श्रीराम त्रिवेदी | शाहजहांपुर |
| २४४ | जवाहिरलाल गौड़ | कानपुर |
| ३७५ | सीताराम चतुर्वेदी | भभुआ (आरा) |
| ३८४ | ज्ञानसिंह राजपूत | होशंगाबाद |
| ३८५ | श्रीनारायण तिवारी | ,, |
| ३८६ | गौरीशंकर पगारे | ,, |
| ३६१ | मथुरा शर्मा | बनारस |
| ४६५ | उपेन्द्रनाथ पाण्डेय | सनातनधर्म सं० पा० धरहरा ( छपरा ) |
| | वंशीधर शर्मा | बुढ़ानाथ ( भागलपुर ) |
| | बालकृष्णमिश्र | गोरखपुर ( जबलपुर ) |

## आयुर्वेदशास्त्री ।

प्रथम विभाग

| | | |
|---|---|---|
| ४० | मदनलाल गोस्वामी | सरदार शहर ( बीकानेर ) |
| ३१० | सत्यकिंकर चौधुरी ( विद्याविनोद ) | तिलुड़ी शिक्षाश्रम, |
| ३२२ | मदनमोहन शर्मा | बेलनगंज ( आगरा ) |

द्वितीय विभाग

| | | |
|---|---|---|
| २ | मातृदत्त द्विवेदी | गोंदिया |
| ४१ | जगदीशचन्द्र शर्मा | सरदार शहर ( बीकानेर ) |
| ६२ | श्रीमती शान्ति देवी | इटावा |

| रोल नम्बर | नाम विद्यार्थी | केन्द्र |
|---|---|---|
| १४२ | वासुदेव शर्मा | करौली |
| १४४ | तारामणि शर्मा | अमृतसर |
| १४६ | शिवलाल शर्मा | " |
| १५६ | छदामी लाल | गोरखपुर ( जबलपुर ) |
| १७५ | अयोध्यानाथ पांडेय— | सनातनधर्म संस्कृत पा० घरहरा ( छपरा ) |
| २२६ | त्रिशूलधारी झा | घोघरडीहा ( दरभंगा ) |
| २२७ | प्रमोदनारायण झा | " " |
| २२८ | मणिराम द्विवेदी | कानपूर |
| २२९ | किशोरीलालशुक्ल | " |
| २३७ | श्यामसुन्दर मिश्र | लखनऊ |
| २३८ | गणेश शंकर मिश्र | " |
| २४२ | ब्रजबिहारी शर्मा | " |
| २४६ | श्रीमती कमला देवी | आयुर्वेदप्रचारकविद्यालय ( जयपुर ) |
| २४७ | रमाकान्त पांडेय | संस्कृत महाविद्यालय आरा |
| २६५ | भागीरथ लाल | सलकिया ( हावड़ा ) |
| २७८ | हरनारायण शर्मा | फीरोजाबाद |
| २८२ | रामचन्द्र शर्मा | " |
| २९२ | श्रीमती सत्यवती देवी | सीतापुर |
| २९४ | सेवकराम गुप्त | " |
| ३११ | वीरेन्द्रनाथ आचार्य ( विद्याविनोद )— | तिलुड़ी शिक्षाश्रम ( बाँकुरा ) |
| ३१२ | अम्बुलोचन कविराज | " |
| ३१३ | सुधीर कुमार राय | " |
| ३२३ | मुरलीधर रावत | बेलनगंज ( आगरा ) |
| ३३५ | विश्वनाथ सिंह चौहान | कुँअरलाल सिंह ब्रह्मचर्याश्रम मैनपुरी |
| ३५५ | शिवस्वरूप वाजपेयी | श्रीनिवास गार्डन कानपुर |
| ३५६ | जगन्नाथ प्रसाद शुक्ल | " " " |
| ३५७ | रामशंकर त्रिपाठी | श्रीनिवास गार्डन कानपुर |
| ३५८ | बाबूराम त्रिपाठी | " |
| ३५९ | राधेश्याम शुक्ल | " |
| ३६० | श्रीमती सुखदेवी पांडेया | " |
| ३६१ | सरयूप्रसाद मिश्र | " |

| रोलनम्बर | विद्यार्थी नाम | केन्द्र |
| --- | --- | --- |
| ३६२ | शिवदुलारे प्रसाद मिश्र | श्रीनिवास गार्डन कानपुर |
| ३६३ | केशव दत्त | " |
| ३७६ | शिवदत्त शर्मा | होशंगाबाद |
| ३७७ | रघुनाथ प्रसाद पाठक | " |
| ३८८ | रामचन्द्र शर्मा काश्यप | बनारस |
| ४४६ | महाबीर प्रसाद द्विवेदी | फीरोजाबाद |
| ४८६ | लालमणि मिश्र | कानपुर |
| | बाबूलाल जैन | |

## आयुर्वेदाचार्य परीक्षा

### प्रथम विभाग

| | | |
| --- | --- | --- |
| २०८ | हंसराज वर्मा | अमृतसर |
| ३६५ | रामदेवमिश्र | श्रीनिवास गार्डन कानपुर |
| | जयकुमार मिश्र विशारद | |

### द्वितीय विभाग—

| | | |
| --- | --- | --- |
| २६५ | योगीन्द्नाथ त्रिपाठी | सीतापुर |
| ३६४ | रामप्रताप पांडेय | श्रीनिवासगार्डन कानपुर |
| ३६६ | विशेश्वर दयाल मिश्र | |

श्री राधिकाप्रसाद चक्रवर्ती (धर्मरंजन)
सेक्रेटरी

अखिल भारतवर्षीय-धार्मिकाध्यात्मिक संस्कृतविश्वविद्यालय
परीक्षा, महामण्डलभवन
जगतगंज बनारस।

